व्यख्याः समतिशयाते इति, व्याख्यानान्तरैः मनागप्यन्यथासिद्धतां न प्राप्नुतः इति च, सारास्वादनतत्पराणां परिशीलयतां सहृदयानां न तिरोहितम् ॥

## १९. भावुकप्रिया टिप्पणी

एवं प्रसन्नगम्भीरायां अनुक्षणानुसारितपुरस्रोतस्विन्यां मम्मटसरस्वत्यां, सरसललितोदारं सुसंक्षिप्तं च विवृण्वतीभ्यां सङ्केतमधुमतीभ्यां समलङ्कृतायामपि—

" काव्यप्रकाशस्य कृताः गृहे गृहे
टीकाः, तथाऽप्येष तथैव दुर्गमः ॥ "

इति महेश्वरोक्त्यनुसारेण, तत्र तत्र तथैवावशिष्टां अवश्यपरिहर्तव्यां दुर्गमतामनुसन्धाय 'भावुकप्रिया 'नाम टिप्पण्यपि सोपानरूपा सम्पादकेनैव विरच्य अत्र संयोजिता । तत्र च परिवृत्त्यसहेष्वपि स्थलेषु तत्संनिहितार्थवाहिभिः पदैः, यथा जिज्ञासूनां तात्पर्यबोधे श्रमो न भवेत् तथैव तत्तदर्था विशदीकृताः ॥

## २०. सम्पादकीयम्

एवं प्रकृतेऽत्र मुद्रणे—आपाततोऽप्यध्येतॄणां भ्रमः श्रमो वा मा भूदिति, प्रायशः सर्वत्र वैयाकरणसन्धिरपि न कृतः । मूलव्याख्ययोरसङ्कीर्णा विस्तृता विषयसूचनी दत्ता । विनेयानुन्मुखीकर्तुं शास्त्रवर्त्मानुबन्धिनीयं भूमिका, विविधाः अनुबन्धाश्च संयोजिताः । सारतः—विदुषामास्वादने बालानां सुबोधे चोपयोगिनीं रीतिमेवावलम्ब्य प्रकाशनेऽस्मिन् महान् यत्नः कृतः । केवलमल्पकालेन सुसम्पन्नेऽस्मिन् महति कार्ये मनुष्यबुद्धिसुलभाः त्रुटिच्युतादयो दोषाः सम्भाव्येरन्नेवेति, तांश्च संशोधनेनापवाध्य कृपां कुर्युरिति च सहृदयानधीतिनः सप्रश्रयं प्रार्थये ॥

## २१. कृतज्ञतासमर्पणम्

अत्र च—यैः प्रकृतग्रन्थसम्पादनायाहमन्वरुध्ये, तेषां, सर्वविधसहकारसम्पत्तिप्रदानेन दिग्दर्शनेन च प्रोत्साहितवतां—प्राच्यविद्यासंशोधनालयाध्यक्षाणां, मैसूरु विश्वविद्यानिलयानुबन्धि यु. जि. सि. संस्कृतविभागप्रधानानां प्राध्यापकानां च विदुषां श्रीमतां डा॥ जि. मरुळसिद्धय्य, एम्.ए. पिहेच्. डि. महोदयानां सन्निधौ हार्दीः अनन्ताः कृतज्ञता इमाः निवेदयामि॥

एवं प्रथमः सम्पुटोऽयं आदितः षड्भिरुल्लासैः परिसमाप्यते। कतिपयैरेव च मासैः अवशिष्टो द्वितीयोऽपि भागः प्रकटीकरिष्यते इत्यप्यावेदयितुं नितरां प्रमोदामहे—इति शम्॥

## २२. आशंसनम्

भूयश्चेदमाशास्महे—

जयतु जगतां मूलं सत्यं सनातनमञ्जसा
जयतु सरसा वाणी दिव्या तदीयमनोनुगा।
जयतु विदुषां वर्गः तस्याः सदातन आश्रयः
जयतु च निधिस्तेषां पूर्णा चिरन्तनभारती॥

प्राच्यविद्यासंशोधनालयः, मैसूरु
प्रमादीचमाघकृष्णचतुर्दशी महाशिवरात्रिः
20—2—1974

इति—
सहृदयवशंवदः
एन्. एस्. वेङ्कटनाथाचार्यः

# विषयाणां अनुक्रमणी

## प्रथमः उल्लासः

(काव्यप्रयोजनकारणस्वरूपनिर्णयात्मकः)

—o—



---

व्याख्यास्थाः विशिष्टविषयाः



---

* S=सङ्केतटीका । M=मधुमतीटीका । सर्वत्र प्रथमा संख्या-पुटसंख्या, द्वितीया तु-पंक्तिसंख्येति ज्ञेयम् ॥

## द्वितीयः उल्लासः

(शब्दार्थस्वरूपनिर्णयात्मकः)

---

## तृतीय उल्लासः

(अर्थव्यञ्जकतानिर्णयात्मकः)



---

## चतुर्थ उल्लासः

(ध्वनिनिर्णयात्मकः)

---

---

---

## पञ्चमः उल्लासः

(ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदात्मकः)



---

---

---

षष्ठः उल्लासः

(शब्दार्थचित्रनिरूपणात्मकः)



---



---

काव्यप्रयोजनकारणस्वरूपनिर्णयात्मकः

## प्रथमः उल्लासः

—o—

वाग्देवतास्तुतिरूपं मङ्गलम्—

नियतिकृतनियमरहितां
ह्लादैकमयीं अनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिं
आदधती भारती कवेर्जयति ॥ १ ॥ [1]

काव्यप्रयोजनानि—

काव्यं यशसेऽर्थकृते
व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये
कान्तासंमिततयोपदेशयुजे ॥ २ ॥ [2]

कवितासामग्री—

शक्तिः निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यासः इति हेतुस्तदुद्भवे ॥ ३ ॥ [3]

---

1 काव्यप्रकाशमूलकारिकाणां आसां प्रायशो विवरणरूपाः श्रीराजचूडामणि-दीक्षितविरचितकाव्यदर्पणकारिकाः संग्रहतो मूलार्थधारणायोपयुक्ताः इति अध्येतॄणां सौकर्यायात्र क्रमशः संयोज्यन्ते ॥ तथाहि—

नियत्यनियतां ह्लादमयीं नवरसोज्ज्वलाम् । कृतिं स्वतन्त्रां कुर्वाणा कवेर्जयति भारती ॥ १ ॥ 2 काव्यं हि यशसेऽर्थाय शिवेतरनिवृत्तये । कान्तावदुपदेशाय परनिर्वृतये क्षणात् ॥ २ ॥ 3 शक्तिः—तदुद्भवे ॥ ३ ॥

काव्यस्वरूपम्—

तददोषौ शब्दार्थौ
सगुणौ अनलङ्कृती पुनः क्वापि ।[1]

उत्तमं काव्यम्—

इदमुत्तमं अतिशयिनि व्यङ्ग्ये
वाच्यात् ध्वनिः बुधैः कथितः ॥ ४ ॥[2]

मध्यमाधमकाव्ये—

अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।[3]
शब्दचित्रं वाच्यचित्रं अव्यङ्ग्यं त्ववरं स्मृतम् ॥ ५ ॥[4]

इति प्रथमोल्लासः

---

1 काव्यं ह्यदुष्टौ सगुणौ शब्दार्थौ सदलङ्कृती । 2 उत्तमं मध्यमं तद्वदधमं चेति तत् त्रिधा ॥ ४ ॥ वाच्यातिशायि व्यङ्ग्यं यत्रोत्तमं तत् ध्वनिश्च सः । वीक्ष्य रामं घनश्यामं सीता जाता नमन्मुखी ॥ ५ ॥ 3 काव्यं तु मध्यमं व्यङ्ग्ये वाच्यादनतिशायिनि । तदेव च गुणीभूतव्यङ्ग्यमित्युच्यते बुधैः ॥ ६ ॥ क्षणाद्वाऽथ मुहूर्ताद्वा यामाद्वा त्वमिहैष्यसि । इत्युक्त्वा हरते यात्रां पत्युर्दूरं यियासतः ॥ ७ ॥ 4 अव्यङ्ग्यमपि यत् चारु तत् काव्यमधमं स्मृतम् । शब्दचित्रं चार्थचित्रं इति तत् द्विविधं विदुः ॥ ८ ॥ उत्तालतालहिन्तालतमालकृतमालकम् । विपिनं तत् समालोक्य नन्दनस्यास्मरत् विभुः ॥ ९ ॥

॥ श्रीः ॥

श्री मम्मटभट्टविरचितः

# काव्यप्रकाशः

माणिक्यचन्द्रविरचितया सङ्केतटीकया

रविपाणिविरचितया मधुमत्या व्याख्यया

भावुकप्रियया टिप्पण्या च समलङ्कृतः



काव्यप्रयोजनकारणस्वरूपनिर्णयो नाम

प्रथम उल्लासः

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां

---

## सङ्केतः

सर्वज्ञवदनाम्भोजविलासकलहंसिकाम् ।

विशुद्धपक्षद्वितयां देवीं वाचमुपास्महे ॥ १ ॥[1]

## मधुमती

भूत्यालेपनभूषितः प्रविलसन्नेत्राग्निदीपाङ्कुरः

कण्ठे पन्नगपुष्पदामसुभगः गङ्गाजलैः पूरितः ।

ईषत्ताम्रजटाऽऽम्रपल्लवयुतः न्यस्तो जगन्मण्टपे

शम्भुः मङ्गलकुम्भतामुपगतः भूयान्मम श्रेयसे ॥ १ ॥

## भावुकप्रिया टिप्पणी

प्रणम्य कविसात्मस्थं तन्यते भावुकप्रिया ।

मूलव्याख्यास्थसन्दिग्धविषमस्थलटिप्पणी ॥

1 अत्र गुरुसरस्वत्योः प्रणामः कृतः। सर्वज्ञौ–जिनविधी, सर्वे ज्ञाः कवयश्च। विलासेन विलासाय वा कला–अव्यक्तमधुरध्वनियुता हंसिका। विशुद्धौ–निर्मल-धवलौ। नित्यानित्यरूपा पक्षद्वितयी।

## सङ्केतः

नानाग्रन्थचतुष्पथेषु निभृतीभूयोच्चयं कुर्वता
प्राप्तैरर्थकणैः कियद्भिरभितः प्रज्ञर्धिशून्यात्मना ।
सर्वालंकृतिफालभूषणमणौ काव्यप्रकाशे मया
वैधेयेन विधीयते कथमहो ! सङ्केतकृत् साहसम् ॥ २ ॥ [1]

न प्राग्ग्रन्थकृतां यशोऽधिगतये नापि ज्ञताख्यातये
स्फूर्जद्बुद्धिजुषां न चापि विदुषां सत्प्रीतिविस्फीतये ।
प्रक्रान्तोऽयमुपक्रमः खलु मया किं तर्ह्यगर्ह्यक्रमं
स्वस्यानुस्मृतये जडोपकृतये चेतोविनोदाय च ॥ ३ ॥ [2]

इह खलु लोके त्रिविधा देवता—समुचिता, इष्टा, समुचितेष्टा च । [3] क्वचित् समुचितायाः स्तुतिः यथा—नीतिकामशास्त्राद्यारम्भे महीपतिमन्मथादेः स्तुतिः । क्वचिदिष्टायाः यथा—रघुमहाकाव्यप्रारम्भे महेश्वरगौर्योः । [4] क्वचिच्च

## मधुमती

गङ्गे ! विमुञ्च रुषं एष न मेऽपराधः
सन्ध्यां नमामि यदशेषजनाभिवन्द्याम् ।
तत् स्वप्नजल्पितमिदं स्वपतोर्निशम्य
कण्ठश्लथीकृतभुजा गिरिशा पुनातु ॥ २ ॥ [5]

---

1 स्वाहङ्कारखण्डनं नानेत्यादिना । निभृतीत्यादि । ज्ञानार्थं विधेयतया भिक्षामटतेत्यर्थः । वैधेयेन–बालिशेन । 2 व्याख्याकरणे स्वोद्देशं प्रकटयति–नेति । ज्ञता–सर्वज्ञता, विस्फीतिः–विशेषतोऽभिवर्धनम् । 'तर्ह्यगर्ध्यक्रमं'–ख. 3 समुचितत्वं—प्रतिपाद्यविषयकनवनवस्फूर्तिदानसमर्थत्वम्, इष्टत्वं–उपास्यत्वमिति विवेकः । 4 'वागर्थाविव संपृक्तौ' इत्यादिनेत्यर्थः । 5 एवं श्लोकद्वयेन शिवशक्त्योर्नतिः कृता । तयोरेव च सर्वविद्यामूलत्वात् ।

ग्रन्थकृत् परामृशति—

## सङ्केतः

समुचितेष्टायाः यथा—अत्रैव। तथाहि—यत् किल काव्यालङ्कारलक्षणं वस्तु प्रकृतं तदधिदैवतरूपा भारती समुचिता समस्तमतसंमता च। तदुक्तम्—

"स्तुत्यं तन्नास्ति नूनं जगति न जनता यत्र बाध्यं[1] विदध्यात्
अन्योन्यस्पर्धिनोऽपि त्वयि तु नुतिविधौ वादिनो निर्विवादाः।
यत् तच्चित्रं न किञ्चित् स्फुरति मतिमतां मानसे विश्वमातः!
ब्राह्मि! त्वं येन धत्से सकलनयमयं[2] रूपमर्हन्मुखस्था[3]॥" इति।

अतः तां ग्रन्थकारः **परामृशति**—लोकोत्तरचमत्कारकार्यविशेषशालित्वेन

## मधुमती

शिवसिद्धात् मिथिलेशात् अवाप यो मन्त्रितां विबुधः।
तस्याच्युतस्य सूनुः बभूव भुवि रत्नपाणिरयम्॥ ३॥
तर्कः कवितया सार्धं विवेकश्च सह श्रिया।
क्रियाविरोधमुत्सृज्य यत्रैकाश्रयतां गतौ॥ ४॥[4]
भावं काव्यप्रकाशस्य काव्यदर्पणबिम्बितम्।
दृष्ट्वा, मधुमतीं टीकां कुरुते तत्सुतो रविः॥ ५॥

---

1 'बाधां'–ख. 2 सर्वविधनीतिपूर्णमित्यर्थः। 'सकलजनमयं'–ख. 3 उपासनाभेदेन मतभेदेन च सर्वे जना अपि देवतापारम्यादिविषये सविवादा एव। अथापि सरस्वतीविषये परं सर्वो जनः निर्विवादः। यतः सा स्वकीयं हितं रमणीयं च दिव्यं रूपं वाङ्मुखे प्रकाशयन्ती सर्वानपि प्रमोदयति। न हि सुसिद्धेऽर्थे विवादप्रसङ्गः इति भावः। "अर्हन्तौ जिनसंभान्यौ" इति वैजयन्ती। 4 तर्ककर्कशबुद्धेः श्रीमदान्ध्यस्य च सरसकविताविवेचनादृष्टिविदूरत्वात्।

## सङ्केतः

विमृशति । न तु ध्यायतीति, चिन्तामात्रप्रतीतेः ।[1] **समुचिता**—समवेता **इष्टा** या देवता यस्यां **परायां** इति समासे, परामृशतीत्यत्र परामिति पदभङ्गोऽपीत्यपि व्याख्यातत्वं स्वयमूह्यम् ॥[2]

## मधुमती

शिष्टाचारपरिप्राप्ततया मङ्गलं, प्रेक्षावत्प्रवृत्त्यङ्गतया अभिधेयं वा प्रथमं अभिधातुमुचितं, न तु देवताकीर्तनं, इति शङ्कां[3] निराकर्तुमाह—**ग्रन्थारम्भे इति** । ग्रन्थारम्भे इत्यनेन मङ्गलस्य कर्तव्यत्वे सदाचारः प्रमाणमिति सूचितम् । **विघ्नविघातायेति** । अनेन समाप्तिः न मङ्गलजन्या, व्यभिचारात् अन्यथासिद्धेश्च, किन्तु विघ्नध्वंस एव, आवश्यकत्वात् लाघवाच्च । समाप्तिश्च सति दुरिताभावे स्वकारणादेवेति प्रतिपाद्यते । **समुचितेष्ट-देवतामिति** । द्विविधा हि देवता—साधारणी असाधारणी च । तत्र गणेशादिः साधारणी । यत्र या अधिकरोति सा असाधारणी । इयमेव च समुचितपदेनात्राभिधीयते । इष्टत्वं उभयत्रापि, पुरुषभेदात् । एवं च सति 'समुचितेष्टदेवतयोः अवश्यनमस्कार्यत्वात्, अनेन एकस्या एव नमस्कारः कृतः' इति न्यूनत्वाशङ्का निरस्ता । **परामृशतीति** । अत्र परामर्शपदं स्मृतिपरम् । न तु—स्तौतीति, नमस्कार्यत्वेन स्मरतीति वा अर्थः । निर्बीजलक्षणापत्तेः ।

---

1 इदं चिन्त्यम् । प्रसिद्धमानसिकचिन्तामात्रस्य ध्यानपदार्थत्वाभावात् । 'चिन्तामात्रस्याप्रतीतेः'–ख. 2 ततश्च 'ऋश गतौ' इत्यस्मात् सौत्रधातोः निष्पन्नं ऋशतीति । गत्यर्थानां ज्ञानार्थकत्वेन च ज्ञानविशेषध्यानार्थकत्वमेव अत्रापि पर्यवस्यति । अस्मिन् पक्षे 'चत्वारि वाक्परिमिता पदानि' इत्युक्तपरापश्यन्त्यादिषु प्रथमा सर्ववाङ्मूलभूता परा इति अनेन विवक्षिता ज्ञेया । 3 इयं तु निमील्याशङ्का । आशीर्नमस्क्रियावस्तुनिर्देशान्यतमस्यैव मङ्गलरूपत्वात् ।

## नियतिकृतनियमरहितां

### सङ्केतः

नियतीत्यादि । **नियतिः**—सर्वपदार्थानां निजनिजसंस्थानमान-वर्णादिव्यवस्थानियमहेतुः दैवपर्यायान्तरम् । तच्च—पञ्चभूत-पञ्चकर्मेन्द्रिय-पञ्चबुद्धीन्द्रिय - पञ्चविषय - तत्वादिशिवतत्त्वपर्यन्त शैवशास्त्रोक्त षट्त्रिंशत्तत्त्व-मध्योक्तं तत्वान्तरम् । **तत्कृतेन नियमेन रहिता** तां तथा । यतः

### मधुमती

न च मङ्गलपरत्वप्रतीतिः प्रयोजनम् । ग्रन्थारम्भे इत्यादिवाक्यप्रतिपाद्य-वैशिष्ट्यावगमादेव लक्षणां विना तत्प्रतीतिसम्भवात् । शक्त्यैवोपपत्तौ लक्षणायाः अन्याय्यत्वाच्च ॥

यत्तु काव्यदर्पणे पितृचरणैरुक्तम्—"**परामृशति**—प्रतिसन्धत्ते, स्तुतिविषयतयेति शेषः" इति, तत्—परामृशतीत्यस्य स्तौतीत्यर्थः लक्षणया यो भास्करादिभिरुक्तः, सः लक्षणासामग्र्यभावात् शेषद्वारा प्रतिपाद्यताम् । न हि तत्रापि प्रयोजनापेक्षा । वस्तुतस्तु स्मृतिपरमेव तत्—इत्यभिप्रायकम् । अत एव—शेषलक्षणयोः शेषस्य जघन्यतया वाक्यार्थप्रयोजनप्रतीतेश्च तेन विनाऽपि सम्भवात् स न स्यादेव—इति निरस्तम् ॥

श्लोकार्थस्तु—**कवेः निर्मितिं आदधती भारती जयति**—सर्वोत्कर्षेण वर्तते । न तु कविभारती जयतीत्यर्थः । कविभारत्याः काव्यात्मतया समुचितेष्टदेवतात्वाभावात् । तदधिष्ठातृदेवतायां च कविपद-वैयर्थ्याच्च । कविशब्दसमभिव्याहृतभारतीशब्दस्य काव्यार्थपरतया प्रसिद्धस्य सरस्वत्यां निहतार्थत्वापत्तेश्च [1] । अत एव वृत्तिकारः "एतद्विलक्षणा तु

1 'निहतार्थेष्टापत्तेश्च'–च.

# ह्लादैकमयीं अनन्यपरतन्त्राम् ।

---

## सङ्केतः

अस्यां चेतनाः अपि भावाः कविभिर्बध्यमानाः [1] अचेतनवत्, अचेतनाः अपि चेतनवच्च प्रतिभासन्ते ॥ **एकः** प्रकृतो यस्यां सा तथा । [2] " तत्प्रकृतवचने मयट् " । [3] ततः **ह्लादेनैकमयी** सा तथा । **अनन्यपरतन्त्रामिति** । इयमपि तावत् निर्मितिः परतन्त्रैव । तथा पारतन्त्र्येऽपि किं सर्वस्यापि परतन्त्रा ? नेत्याह [4]—**अनन्येति** । कवेरपेक्षया अन्यशब्दनिर्देशात् [5] ततो नान्येषां अन्यैर्वा परतन्त्रा सा तथा । कवेरेव कविनैव वा परतन्त्रेत्यर्थः ॥

## -मधुमती

कविवाङ्निर्मितिः " इत्याह । **नियतिकृतेत्यादि** । नियम्यते अनेनेति **नियतिः**—असाधारणो [6] धर्मः, कमलत्वादिः अदृष्टं वा । **तत्कृतो नियमः** सौरभविशेषादिनियमः, स्थिरविनश्वरत्वादिनियमो वा । **तद्रहिताम्** । यतः कमलसौरभं कामिनीमुखे, विनश्वरत्वं स्थिरे च प्रतिपाद्यते । अत्र नियम-रहितत्वं कविवाङ्निर्मितावपि नास्ति [7], कविसम्प्रदायनियमस्य तत्रापि सत्त्वात् । अत उक्तं—**नियतेति** । एवं नियतिकृतराहित्यमप्यसम्भवि, स्वतःसिद्धार्थव्यञ्जक-स्थले तस्याप्यपेक्षणात् । अतः नियमपर्यन्तमुपात्तम् । **ह्लादैकमयीमिति** । एकं प्राचुर्येण यत्रास्ते सा **एकमयी** । ह्लादेन एकमयी ह्लादैकमयी । अन्यथा " पूर्वकाले "[8]त्यादिना एकशब्दस्य पूर्वनिपातापत्तेः । वस्तुतस्तु—एकशब्दोऽयं

---

1 ' कविना निबध्यमानाः '–ख. 2 एकमयीत्यर्थः । 3 पा. सू. ५-४-२१.
4 ' परतन्त्रा उत न वेत्याह '–ग. 5 ' निर्देशः '–ग. 6 ' साधारणो '–च.
7 ' निर्मितिपदे नास्ति '–च. 8 पा. सू. २-१-४९.

# नवरसरुचिरां निर्मितिं
# आदधती भारती कवेर्जयति ॥१॥[1]

---

## सङ्केतः

ननु 'अनन्यपरतन्त्रा' इत्येतावतैव स्वार्थसिद्धेः, परशब्दः अपुष्टार्थः इति चेत् व्याख्यान्तरं क्रियते—**तन्त्र** शब्दः भावसाधनः, ततः न अन्यपरः। अन्यनिष्ठः तन्त्रः—अधीनत्वं व्युत्पादनं वा[2] यस्याः सा तथा। **नवरसा** चासौ **रुचिरा** चेति विग्रहः कार्यः। न तु पुनः नवसंख्योपलक्षितैः रसैः रुचिरेति। तथासति ब्राह्मी[3]निर्मितेः वचनगुम्फस्वभावायाः सकाशात् ब्रह्मनिर्मितेः संख्ययैव हीनत्वं अभिमतं स्यात्, न तु रुचिरत्वेन। यदि

## मधुमती

विजातीयव्यवच्छेदपरः। तथा च सामानाधिकरण्याभावात् नोक्तसूत्रावतारः इति द्रष्टव्यम्। **अनन्यपरतन्त्रामिति**। परतन्त्रशब्दः आयत्तवचनः। तेन अन्यपरशब्दयोः[4] पर्यायतया न पौनरुक्त्यम्, "कर्मादिसहकारिकारण-परतन्त्रे"त्यग्रिमवृत्तिसंवादात्। **नवरसरुचिरामिति**। नवभिः रसैः रुचिरां इति संख्यापूर्वकः त्रिपदतत्पुरुषः। 'त्रिमुनि लक्षणम्' इतिवत्। अन्यथा 'नवरसीरुचिराम्' इति स्यात्। एवं च नवरसशब्दवाच्यरुचिरां इत्यर्थः।

---

1 अयं भावः—कालतत्त्वात् परत्वेन निर्णीता सप्तविंशतितमतत्त्वात्मिका या नियतिः—पदार्थेषु तत्तद्धर्माविनाभावसम्पादिका तत्कृतव्यवस्थारहितां, आनन्दमात्र-स्वरूपां, स्वतन्त्रां, शृङ्गारादिभिः नवभिरपि रसैः हृद्यां, काव्यरूपां कृतिं प्रकाशयन्ती, कवेः शक्तिविशेषरूपा सरस्वती सर्वोत्कर्षेण राराज्यते इति। 2 व्यवहारवृद्धैः व्युत्पादनाभावे शक्तिग्रहाद्यसम्भवात् इति भावः। 3 'इतिकृते हि ब्राह्मी,-ग. 4 'अन्यपरतन्त्रयोः'-च.

**नियतिशक्त्या नियतरूपा,[1] सुखदुःखमोहस्वभावा,[2]**

---

## सङ्केतः

संख्ययैव हीनत्वं अभिप्रेतं स्यात्, तदा ग्रन्थकृत् "षड्रसा न च हृद्यैव तैः" इति व्याख्यां न कुर्यात्। अपरं च—नवरसैः रुचिरा इति वृत्तौ षड्रसायाः सृष्टेः आधिक्यं स्यात् इति।[3] तथा भारती च चिद्रूपा स्वाधिष्ठातृभारतीदेव्या सह अभेदाध्यवसाये समुचितेष्टदेवता स्यात्। कविरेव[4] कविः ब्रह्मेति श्लिष्टशब्दहेतुकं रूपकम्। एवं सति 'वाक्सृष्टिः ब्रह्मसृष्टेरधिका, कविश्च[5] ब्रह्मणोऽधिकः' इति सिद्ध्यति॥

## मधुमती

अन्यथा ब्रह्मनिर्मितिसाधारणस्य रसस्य अभावात्[6] तदपेक्षया कविनिर्मितेः उत्कर्षो न प्रतीयेतेति भावः। व्यतिरेकालङ्कारद्वयं च व्यङ्ग्यम्। ब्रह्म-निर्मित्यपेक्षया कविनिर्मितेः, ब्रह्मापेक्षया च कवेः उत्कर्षप्रतीतेः॥

तमिमं व्यतिरेकालङ्कारं अस्मात् श्लोकात् स्फुटयितुं निर्मितिपदवर्जं व्यतिरेकमुखेन व्याचष्टे—**नियतिशक्त्येति। सुखदुःखमोहस्वभावेति।** यत्[7]—एकैव स्त्री रूपयौवनादिसम्पत्त्या स्वामिनं सुखयति, तं प्रति तस्याः सुखरूपसत्त्वसमुत्थत्वात्। सैव सपत्नीः दुःखाकरोति, ताः प्रति दुःखात्मक-रजस्समुत्थत्वात्। सैव अन्यं स्वमविन्दन्तं मोहयति, तं प्रति मोहरूपतम-स्समुत्थत्वात्। अत एव गुणत्रयमयत्वं अनया रीत्या विश्वस्येति दिक्॥

---

1 अनतिक्रमणीयस्वस्वभावा। 2 सत्त्वरजस्तमोमयत्वात्। 3 इदं वाक्यं न दृश्यते-ख. 4 क्रान्तदर्शी कविः। 5 तादृशसरसवाचां स्रष्टा कविश्रेत्यर्थः। 6 'भावात्'-च. 7 'यथा'-च.

परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा,[1] षड्रसा।[2] न च हृद्यैव तैः।[3] तादृशी ब्रह्मणो निर्मितिः-निर्माणम् ॥[4]

---

## मधुमती

परमाण्वादीति। कारणशब्दः प्रत्येकमन्वेति। द्वन्द्वपरश्रुतत्वात्।[5] यद्यपि उपादानापेक्षा[6] कविनिर्मितावपि। तथापि तदिच्छाधीनत्वात् विशेषः।[7] ब्रह्मनिर्मितेः तदिच्छाधीनत्वेऽपि तदिच्छा सन्मात्रगोचरा। कवीच्छा तु सदसदुभयगोचरेति औत्प्रेक्षिकार्थ[8]बहुलतया ब्रह्मनिर्मितेरपि कविनिर्मितिः चमत्करोति। यदाहुः—

"अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथाऽस्मै रोचते विश्वं तथैव परिवर्तते ॥"[9] इति ॥

इदं त्ववधातव्यम्—यदा नियतिपदं असाधारणधर्मपरं, तदा कर्मपदं अदृष्टपरम्। यदा तु तदेव अदृष्टपरं, तदा परमाणुकर्मपरं इति। **न च हृद्यैव तैरिति।** यद्यपि बीभत्सादयः प्रकृतेऽप्यरुचिराः एव, तथापि काव्याभिनयाभ्यां अस्वाद्यमानतादशायां तेषामपि हृद्यत्वमेव। यत् वक्ष्यति—"सद्यः परनिर्वृतये" इति। **निर्मितिः—निर्माणम्** इति व्याख्यान-व्याख्येयभावेन अन्वयः ॥

---

1 नैयायिकैः—उपादानं समवायिकारणमिति, सहकारि तु असमवायिनिमित्तान्यतरात्मकमिति चोच्यते। 2 मधुराम्ललवणकटुकषायतिक्तभेदात् रसानां षड्विधत्वम्। 3 प्रकृतिभेदेन कट्वादीनां अहृद्यत्वस्य अनुभववेद्यत्वात्। 'तैः ब्रह्मणो'—क. 4 जगद्रूपम्। 5 द्वन्द्वान्ते श्रूयमाणं प्रत्येकं संबध्यते इति न्यायादिति भावः। 6 'पेक्षया'—च. 7 'तथापि कवीच्छाधीन एव विशेषः'—च. 8 'उत्प्रेक्षैकार्थ'—च. 9 अग्निपुराणे 339–10.

**एतद्विलक्षणा तु कविवाङ्निर्मितिः। अत एव जयति। जयत्यर्थेन च नमस्कारः आक्षिप्यते**[1]

---

## सङ्केतः

**एतद्विलक्षणेति।** विलक्षणा—विसदृशी। यदि वा विशिष्ट-लक्षणा—चारुस्वरूपा। **वाङ्निर्मितिरिति।** वक्तीति वाक्—शब्दः। उच्यते इति वाक्—अर्थः। उच्यते अनयेति वाक्—अभिधाव्यापारः। सर्वत्र निपातनात् शब्दसिद्धिः। तेषां निर्मितिः। **जयति**—सर्वोत्कर्षेण वर्तते। सर्वोत्कर्षवर्तित्वं च विश्वव्यापिब्रह्मनिर्मितिजयेनेति। अत एव अकर्मकः। नियतोत्कर्षे तु सकर्मकोऽयं स्यात्। यथा—'शत्रुं जयति' इति। यस्याश्च सर्वोत्कृष्टत्वेन वर्तनं तां को वा न प्रणमतीति अर्थात् वक्तुः प्रणतिः उक्तैवेत्याह—**जयत्यर्थेनेति**॥

## मधुमती

**अक्षिप्यत इति।** व्यज्यते इत्यर्थः, न तु अनुमीयते इति। व्याप्त्यभावात्। **न च**—'यः सर्वोत्कृष्टः सः नमस्कार्यः' इत्यस्ति व्याप्तिरिति वाच्यम्। तथापि नमस्कारालाभात्। **न च**—'अयं ततोऽपकृष्टः, तन्निष्ठोत्कर्षावधित्वात्' इत्यनुमानात् तल्लाभः इति वाच्यम्। स्वापकर्षबोधहेतुक्रियाया एव नमस्कारत्वात्, तस्याश्च अनेनाप्यलाभात्। **यद्यपि** "भारती नमस्कार्या, सर्वोत्कृष्टत्वात्। एवं च अहं तन्नमस्कारवान्, मङ्गलप्रवृत्तत्वे सति तद्विशेष्यकोत्कृष्टत्वप्रकारकज्ञानवत्त्वात्" इत्यनुमितिः

---

1 अर्थसिद्धो भवतीत्यर्थः।

इति 'तां प्रत्यस्मि प्रणतः' इति लभ्यते[1] ॥ १ ॥

---

## सङ्केतः

अयमभिप्रायः—यो हि सर्वोत्कर्षेण जयी सः सर्वैरपि नमस्यः[2] इति जयतिनमस्यतिक्रिययोः अविनाभावः।[3] अत एव आक्षिप्यते इत्युक्तम्। तत्त्वमिदम्—अत्र अविनाभावमूलः आक्षेपः, ततोऽनुमानम्। लक्षणामूले त्वाक्षेपे लक्षणैव। यथा—कुन्ताः प्रविशन्तीत्यत्र। मुख्यार्थबाधाभावात् नात्र लक्षणा।[4] लोकरूढ्याऽपि जयतिक्रियया नमस्कारः आक्षिप्यमाणो दृश्यते। तथाहि जनकादयः शिशून् शिक्षयन्ति—'देवानां जयेति कुरु' इति। नमस्कारं कुर्वित्यर्थः। कविब्राह्मी[5]निर्मितेः ब्रह्मनिर्मितेः सकाशात् स्वरूपप्रयोजनकारणविशेषप्रतिपादकेन नियतीत्यादिविशेषणचतुष्टयेन

## मधुमती

भवत्येव। तथापि एतन्मते व्यञ्जनायाः सम्भृतसामग्रीकत्वेन तयैव तद्बोधनात् अनुमितानुमानस्य विलम्बितत्वात्[6] इति।

आक्षेपस्वरूपमाह—**प्रणतोऽस्मीति**।

**यद्यपि** नतिवत् देवतास्मृतिरपि मङ्गलमेवेति नमस्कारव्यञ्जनं अफलम्। तथापि नमस्कारातिरिक्तं न[7] मङ्गलं इत्यभिमानेन एतदुक्तम् ॥

---

1 'नमस्त्वैक्यं प्रचक्षते' इति स्मृत्यनुसारेण तया देवतया सह मदीयं मनः एकीभवतीति लभ्यते इति परमार्थः। बुद्धिधर्मैः इन्द्रियधर्माणां एकीभवनवत्। 'तां प्रणतोऽस्मीति लभ्यते'—क. 2 नन्तव्यः इति स्यात्। 3 व्याप्यव्यापकभावः। 4 इदं वाक्यं—ख. पुस्तके नास्ति। 5 'कविब्रह्मब्राह्मी'—ख. 6 'अविलम्बितत्वात्'—च. 7 'न' इति नास्ति—च.

## सङ्केतः

आधिक्ये, नियतीत्यादेः उपमेयोत्कर्षहेतोः उक्त्या समाक्षिप्ते च उपमानोपमेयभावे व्यतिरेकालङ्कारः [1] व्यङ्ग्यः ॥

**ननु** व्यङ्ग्यस्य प्राधान्यात् अलङ्कार्यता स्यात्, नालङ्कारता । तत् कथं व्यङ्ग्यस्य अलङ्कारता अत्रोक्ता । सत्यम् । अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेन अलङ्कारतेति । कविब्राह्मीप्रभावख्यापने अतीव ग्रन्थकृतः रतिरिति अलक्ष्यक्रमः स्थायिभावः अत्र काव्ये व्यङ्ग्यः ॥ १ ॥

कार्यस्य कारणस्वरूपविशेषानन्तरमेव प्रक्रममाणत्वेन, फलस्य प्रथमतः अवाच्यत्वेऽपि यत् प्रागुक्तं [2] तत् शिष्यौन्मुख्यार्थम् । ते हि ज्ञातफलाः तल्लिप्सवः कारणादिज्ञानाय उत्सहन्ते । अन्यथा अस्य कीदृक् फलं भवतीति सन्दिहानाः क्लेशभीरुत्वेन पूर्वं कारणादिषु नोत्सहेरन् इत्याह—

## मधुमती

**नन्वेवमपि** विघ्नविघाताय स्मरणं अनुपपन्नम् । स्मृत्याक्षिप्तनमस्कारस्य विघ्नविघातकत्वाभावात् इति चेत्—न । प्रयोजकत्वमात्रेण तथा अभिधानात् । विघ्नबाहुल्यशङ्कया वा मङ्गलान्तराचरणं सर्वोत्कृष्टं नमामीत्येव च न कृतम् । व्यञ्जनीययोः व्यतिरेकालङ्कार-नमस्कारयोः शाब्दत्वापत्तौ चमत्कारानुपपत्तेः । **एवं** कविनिर्मितिपदेन अभिधेयनमस्कारव्यञ्जनया च चमत्कारमुपस्थापयन् अयं श्लोकः मङ्गलाभिधेयपरः इत्यपि बोद्धव्यम् ॥ १ ॥

---

1 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः'। इति तल्लक्षणम् । 2 'काव्यं यशसे' इत्यादिनेति शेषः ।

इह अभिधेयं सप्रयोजनमित्याह—

**काव्यं यशसे[1]ऽर्थकृते**
**व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये**
**कान्तासंमिततयोपदेशयुजे[2] ॥ २ ॥**

---

## सङ्केतः

इहाभिधेयमिति । दोषपरिहारेण सगुणं सालङ्कारं काव्यं अभिधेयम्,

## मधुमती

ननु अभिधेयस्य आद्यश्लोकेनैव प्रतिपादनात् 'काव्यं यशसे' इत्यादेः वैयर्थ्यमित्यत आह—**इहाभिधेयमिति** । तथा च अभिधेयप्रतिपादनेऽपि प्रयोजनाप्रतिपादने न प्रेक्षावत्प्रवृत्तिरिति भावः । **केचित्तु** प्रयोजनवत् अभिधेयमप्यत्रैवेति वदन्ति । तदसत् । 'इहाभिधेयं सप्रयोजनमित्याह' इति 'इति'शब्ददर्शनात् । अन्यथा तद्वैयर्थ्यापत्तेः । **काव्यं यशसे इति** । कृत्, युज्, विद्, शब्दाः सम्पदादित्वात् भावे क्विबन्ताः । असान्दृष्टिकत्वशङ्कां[3] अपनिनीषन्नेव सोदाहरणं सूत्रं

---

1 लोकातिशायिवर्णनानिपुणस्य क्रान्तदर्शिनः कवेः कर्म काव्यम् । तच्च यशसे । साधूनां मनसि विभाव्यमानं हि यशः आत्मानं तारयतीति स्मृतिः । "यशोजनेऽसानि । श्रेयान् वस्यसोऽसानि" इति च श्रौती प्रार्थना । 2 कान्तया संमितं—तुल्यम् । तस्य भावः तत्ता । उपदेशयुजे—युक्तोपदेशाय । सर्वत्रात्र तादर्थ्ये चतुर्थी । 3 'सांसृष्टिकत्व-शङ्कां'—च.

कालिदासादीनामिव यशः, श्रीहर्षादेः धावकादीना-
मिव धनम्,[1] राजादिगतोचिताचारपरिज्ञानम्,[2]
आदित्यादेः मयूरादीनामिव अनर्थनिवारणम्,[3]
सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं

---

## सङ्केतः

शास्त्रं अभिधायकम्। तयोः अभिधानाभिधेयलक्षणः सम्बन्धः। प्रयोजनं च सर्वत्रापि प्रवृत्त्यङ्गम्। यतो न प्रेक्षापूर्वकारिणः निष्प्रयोजनाः प्रवर्तन्ते। तदपि[4] दृष्टादृष्टत्वात् द्विधेत्याह—**काव्यमिति** ॥

## मधुमती

व्याचष्टे—**कालिदासादीनामिवेति**। यशःप्रभृतेः करोतीत्यनेनान्वयः। कालिदासादौ यशःप्रभृत्युपादानं प्राधान्याभिप्रायेण।[5] न तु प्रयोजनान्तर-व्यवच्छेदपरमिति द्रष्टव्यम्। **सद्यः परनिर्वृतये** इत्यत्र परपदव्याख्यानं **सकलप्रयोजनमौलिभूतमिति**। सद्यःपदव्याख्यानं **समनन्तरमेवेति**। निर्वृतिपदव्याख्यानं **रसास्वादनेत्यादि**। रसास्वादनपदं करणव्युत्पत्त्या

---

1 धावकनामा श्रीहर्षनाम्ना रत्नावलीं विरच्य दत्त्वा धनममितं लब्धवानिति कथा। 2 राजादीनां राजादिविषये च प्राप्तः यः समुचितव्यवहारः तस्य परिचयः। 3 कुष्ठरोगपीडितो मयूरः सूर्यस्तवनेन नीरोगी संपन्नः इति कथा। 4 काव्यप्रयोजन-मपीत्यर्थः। 5 'प्राधान्यात् प्रायेण'—च.

**विगलितवेद्यान्तरं आनन्दं,[1] प्रभुसम्मितशब्दप्रधान-वेदादिशास्त्रेभ्यः, सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहा-**

---

## सङ्केतः

प्रभुसम्मितेति । शब्दपरावृत्त्यसहत्वेन आज्ञाप्रधानेभ्यः ।[2] वेदादीति । आदिशब्दात् मानवधर्मशास्त्रचिकित्सतादिपरिग्रहः ।[3] सुहृत्संमितेति । 'अस्येदं वृत्तं अस्मात् कर्मणः' इत्येवं युक्तियुक्तकर्मफल-सम्बन्धप्रकटनकारित्वात् अर्थप्रधानेभ्यः[4] इत्यर्थः । **पुराणेतिहासादीनां**

## मधुमती

विभावादिज्ञानपरम् । अतो नानन्वयः । **विगलितवेद्यान्तरत्वं** च विषयान्तर-सञ्चाराभावः । अयमेव चमत्कारः इत्यभिधीयते । **प्रभुसम्मितेत्यादौ** सम्मितशब्दः सदृशवचनः । शब्दरचनापरिवृत्त्यसहिष्णुत्वं शब्दप्राधान्यम् । न हि "अग्निमीळे पुरोहितम्" इत्यादौ वह्निमीडे इति, ईडेऽग्निं इति वा अभिमतसिद्धिः । **प्रभुसम्मितत्वं** च वेदस्य—यथा प्रभुः अनिष्टसाधने निष्फलेऽपि नियोजयति, तथा वेदोऽपि अनिष्टसाधने श्येनादौ, निष्फले संध्यावन्दनादौ च नियोजयतीति । **अर्थप्राधान्यं** च शब्दादिपरिवृत्तिसहत्वं, तच्च पुराणादौ । तत्र हि तत्तदर्थः वक्तृभेदेन भिन्नभिन्नवाक्येन प्रतिपाद्यमानः पुरुषं प्रवर्तयति । **सुहृत्सम्मितत्वं** च तस्य हितसाधने एव प्रवर्तनात् ।

---

1 निर्वृतिः—आनन्दः, स च आन्तरः उत्तमोत्तमः इत्यर्थकस्य परशब्दस्य विवरणं सकलेत्यादि । 2 स्वरवर्णपदादिकिञ्चिद्वैपरीत्येऽपि अनिष्टोत्पत्तेः । 'शब्द-प्रधानेभ्यः'—ख. 3 चिकित्सितं—वैद्यशास्त्रम् । 4 तत्त्वाख्यानमात्रप्रवृत्तवाच्यार्थ-प्रधानेभ्यः ।

**सेभ्यश्च शब्दार्थयोः गुणभावेन[1] रसाङ्गभूतव्यापार[2]-**

---

## सङ्केतः

लक्षणं अन्यतः ज्ञेयम् ।[3] केचित्तु पुराणस्य शब्दप्राधान्यमाहुः । तदुक्तम्—

"पुराणं मानवो धर्मः साङ्गो वेदः चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥"[4] इति ।

एतत्पक्षाश्रयणे "पुराणादीतिहासेभ्यः" इति आदिशब्दः अवयवार्थः तत्पुरुषवृत्त्या व्याख्येयः ।[5] ततश्च[6] पुराणस्य शब्दप्राधान्यं, तदवयवानां इतिहासानां अर्थप्राधान्यं च सिद्धम् । पुराणावयवविशेषणविशिष्टेतिहासज्ञापनेन च धूर्तकल्पितेतिहासानां नार्थप्राधान्यम् । एवं च आदिशब्दस्य अस्थानपतितत्वं परिहृतम् । अन्यथा पुराणेतिहासादीति ब्रूयात् इति । रसाङ्गेति । रसस्याङ्गिनः यः अङ्गभूतः व्यञ्जनाव्यापारः तत्परतया

## मधुमती

यत्र काव्ये शब्दः वाक्यार्थश्च अर्थान्तरं व्यञ्जयन् पुरुषं स्ववशीकृत्य उपदिशति तत्रैव व्यञ्जनाप्राधान्यम् । तस्य कान्तासम्मिततत्वं च स्ववशीकरणेन । एवं सुहृत्कान्तयोः इष्टोपदेशकत्वाविशेषेऽपि स्ववशीकरणेन कान्तैव प्रकृष्यते इति तत्सम्मितस्य काव्यस्यापि प्रकर्षः इति । यद्वा वस्तुतत्त्वाख्यानमात्रं सुहृद्व्यापारः इति न साङ्कर्यम् ॥

---

1 अप्रधानतया । तत्र हेतुः रसाङ्गेत्यादि । 2 व्यापारश्च विभावानुभावव्यभिचारिभावानां मेलनं, व्यञ्जना वा । 3 पुराऽपि नवमिति व्युत्पत्त्या विषयबोधनप्रधानं पुराणम्, इति ह आसेति व्युत्पत्त्या व्यक्तिचरित्रप्रधानः इतिहासः इति चानयोः भेदः । तत्तत्कालदृष्टश्रुतचरव्यक्तिविषयत्वे सदा नवत्वानुपपत्तेः । 4 अपरिपक्वबुद्धिप्रतिभातयुक्त्यसिद्धतामात्रेण नानादरणीयानीति भावः । 5 पुराणस्यापि यः आदिः इतिहासः इति । 6 इत्थं व्याख्याने इति यावत् ।

**प्रवणतया विलक्षणं यत् काव्यं लोकोत्तरवर्णना[1]निपुण-**

---

## सङ्केतः

**विलक्षणं शब्दार्थयोः गुणभावेन काव्यम्** । पूर्वेभ्यः **विलक्षणं**—विसदृशं, रसाङ्गभूतव्यापारप्रवणतया च विलक्षणं—विशिष्टलक्षणं चारुस्वरूपं चेति रहस्यम् । यदाह **भट्टनायकः**—

"शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग् विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥"[2] इति ॥

ननु व्यञ्जनाव्यापारस्य विश्रान्तिधर्मत्वाभावेन वाक्यार्थत्वाभावात् विषयमुखेन च स्वात्मलाभात् तत्प्राधान्येन प्राधान्यात् स्वरूपेण विचाराक्षमत्वात् गुणालङ्कारोपकर्तव्यस्य व्यङ्ग्यनाम्नः विषयस्यैव काव्ये प्राधान्यं, न व्यापारस्येति, तत्कथं व्यापारप्राधान्ये काव्यगीरित्युक्तम्? उच्यते—भट्टनायकाभिप्रायेण प्रयोजनविशेषवशात् इत्थमूचे ।[3] न स्वाभिप्रायेण । अग्रे स्वयमेव काव्ये व्यङ्ग्यप्राधान्यस्य प्रतिपादयिष्यमाणत्वात् । **वर्णनानिपुणेति** । तथाचोक्तं **काव्यकौतुके**—

## मधुमती

**काव्यपदं** व्याचष्टे—**लोकोत्तरेति** । लोकोत्तरवर्णनारूपं निपुणं कविकर्मेत्यर्थः । तथाच विवक्षितविवेकेन लोकोत्तरवर्णनैव **काव्यम्** ।

---

1 प्राकृते लौकिके एव वस्तुनि तन्मूलभूताप्राकृतालौकिकवर्णवत्तायाः इन्द्रियागोचरायाः चित्रणं लोकोत्तरवर्णनम् । 2 श्लोकोऽयं हृदयदर्पणस्थः इति हेमचन्द्रानुशासने उक्तम् । 3 मूले व्यापारेत्युक्तमित्यर्थः ।

## सङ्केतः

" प्रज्ञा नवनवोल्लेख[1]शालिनी प्रतिभा मता ।
तदनुप्राणनाजीवद्वर्णनानिपुणः कविः ॥
तस्य कर्म स्मृतं काव्यम् । " इति ॥

## मधुमती

वर्णनामात्रं "गोरपत्यं"[2] इत्यादौ काव्याभासेऽपि गतम्, अतः लोकोत्तरत्वं विशेषणम् । एवं च रसादिविषयतौचित्येन शब्दार्थयोर्योजनं इह कविकर्मत्वेन अभिमतम् । न तु उच्चारणम् । मौनिश्लोकानुरोधात् । यदाहुः **आनन्दवर्धनपादाः**—

" वाचकानां च वाच्यानां यदौचित्येन योजनम् ।
रसादिविषयेणैतत्कर्म मुख्यं महाकवेः ॥ " इति ॥

यदि च वर्णना चमत्कारानुकूलपदकदम्बः, तदा लोकोत्तरत्वविशेषणेन शब्दार्थविषयककविकर्मण्येव काव्यपदप्रयोगः, सुखविशेषे स्वर्गपदवत्[3] इति बोध्यम् । 'शब्दाधिक्यादर्थाधिक्यम्' इति न्यायात् । यद्वा—लोकोत्तरवर्णनानिपुणत्वं कविविशेषणम् । अत्र च करणव्युत्पत्त्या **वर्णना**पदं शक्तिपरम् । तावन्मात्रं काव्याभासेऽपि गतम् । अतः लोकोत्तरत्वविशेषणम् । तच्च चमत्कारानुकूलत्वम् । व्युत्पत्त्यभ्याससहकृतमिति यावत् । केवलायाः तस्याः चमत्कारानुत्पत्तेः । इयान् भेदः—कविशक्त्यादि काव्यद्वारा सहृदयस्य तत्साक्षाच्चमत्कृतिहेतुः । तथा च यादृशि कर्मणि लोकोत्तरवर्णनानैपुण्यं

1 'नवनवोन्मेष'–घ. 2 "गोरपत्यं बलीवर्दः तृणान्यत्तिमुखेन तु" इति वाक्यम् । 'गोपवतामित्यादौ'–च. 3 यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥" इत्युक्तेः ॥

**कविकर्म, तत् कान्तेव सरसताऽऽपादनेन अभिमुखीकृत्य[1]**
**"रामादिवत् वर्तितव्यं, न रावणादिवत्" इत्युपदेशं च**

---

## मधुमती

प्रयोजकं तत् काव्यम्। अतो नातिव्याप्त्याद्यवकाशः इति। इदं तु स्वरूपनिर्वचनम्। लक्षणं तु—लोकोत्तरवर्णनानैपुण्यजन्यकर्मत्वं अवसेयम्। यद्वा—लोकोत्तरवर्णनावत्त्वं निपुणकविकर्मत्वं चेति लक्षणद्वयम्। निपुणत्वं च रसाभिव्यक्त्यनुकूलत्वम्। कविकर्मत्वं च पदकदम्बत्वम्। अतो नाद्भुत-रसाभिव्यक्त्यनुकूलकथाऽऽदिकर्मणि [2] अतिव्याप्तिः।

**रामादिवद् वर्तितव्यमिति।** अत्र रामरावणाभ्यां नायकप्रतिनायका-वुक्तौ। तेन—रामकृतः छद्मना वालिवधः हेयः,[3] रावणकृतस्तु हरप्रणामादि-रूपः उपादेय एव। 'रामवत् वर्तितव्यम्, कृष्णवत् वर्तितव्यम्' इत्याद्यनन्तोपदेशकल्पनापत्तिश्च इत्यादिदूषणं अलग्नकं वेदितव्यम्।[4] **वर्तितव्यम्**—हितसाधने प्रवर्तितव्यम्, अहितसाधनात् निवर्तितव्यं[5] चेत्यर्थः। अत एव—नायकस्य यत् विरुद्धं इतिहासादौ दृश्यते तस्य काव्ये त्यागः, अन्यथा वा करणं इति वदन्ति। उपदेशपरत्वकथनेन च विधिशेषीभूततया [6] स्वर्गाद्यर्थवादस्येव साध्यार्थशब्दप्रामाण्याभ्युपगन्तृमीमांसक-मतेऽपि अस्य प्रामाण्यमित्युक्तम्। **यथायोगमिति।** यथासम्भवमित्यर्थः।

---

1 विषयपरवशतया अतिकठिनमपि हृदयं द्रवीभूय, प्रतिपाद्यमानं विषयं यथा आस्वादयेत् तथा कृत्वेत्यर्थः। 2 'रथादिकर्मणि'—च. 3 'वालिवधोपायः'—च. 4 निरुपाधिकस्य धर्मस्य उपादेयता, सोपाधिकस्य धर्मस्यापि अधर्मस्येव हेयता च ग्राह्येति सारम्। 5 अहितेत्याद्यंशः च पुस्तके नास्ति। 6 'विशेषीभूततया'—च.

**यथायोगं[1] कवेः सहृदयस्य च करोतीति[2] सर्वथा तत्र यतनीयम् ॥ २ ॥**

---

## सङ्केतः

**यथायोगमिति ।** यशः कवेरेव, न तु सहृदयस्य । ननु कथं रसास्वादः सम्पद्यते ? यतः तस्य काव्यार्थचिन्तनपरस्य सर्वदैव दुःखमग्नत्वात् । यदुक्तम्—

"कविरेव विजानाति कवेः काव्यपरिश्रमम् ॥" इति ।

न । तस्यापि भावकत्वलक्षणद्वितीयावस्थायां रसास्वादः सम्पद्यत एव । प्रथमकारकत्वावस्थायां तु भवतु वा दुःखम् । परमार्थतः कविः भावकावस्थायां सहृदय एवेति, प्रीतिः सहृदयस्यैव । "भूतपूर्वकः तद्वदुपचारः" इति न्यायात्तु कवेरप्युपचर्यते इति सर्वं सुस्थम् ॥ २ ॥

## मधुमती

यशः अर्थः अनर्थनिवारणं च द्वयोरपि कविसहृदययोः । व्यवहारज्ञानं आनन्दः उपदेशश्च सहृदयस्यैव । न च भावयतः कवेरपि निर्वृतिः । तदा तस्यापि सहृदयत्वात् इति । इदं च काव्येऽपि द्रष्टव्यम् । तेन व्यवहारज्ञानं उपदेशश्च प्रबन्धात्मकस्यैव । शेषाणि तु प्रबन्धाप्रबन्धात्मकयोः फलमिति बोद्धव्यम् । **सर्वथेति ।** दृष्टार्थतया अदृष्टार्थतया चेत्यर्थः ।[3] एवं च सप्रयोजनकाव्याङ्गतया अस्यापि प्रयोजनवत्त्वमिति भावः ॥ २ ॥

---

1 अधिकारिकक्ष्यानुगुण्येनेत्यर्थः । 2 'सहृदयस्य करोतीति'—क. 3 न हि सर्वथा सर्वदा सर्वस्याप्यदृष्टमिति किञ्चिद्विद्यते इति, अदृष्टव्यवहारः देशकालावस्थाद्युपाधिनिमित्त एवेति द्रष्टव्यम् ।

एवं अस्य प्रयोजनमुक्त्वा कारणमाह—[1]

**शक्तिः निपुणता लोक-**
**शास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाऽभ्यासः**
**इति हेतुस्तदुद्भवे ॥ ३ ॥**

शक्तिः—कवित्वबीजरूपः संस्कारविशेषः कश्चित् ।[2]

---

## सङ्केतः

एवं काव्यप्रयोजनान्युक्त्वा तदङ्गान्याह—**शक्तिरिति । संस्कारेति ।** वर्ण्यपदार्थ[3]नवनवोल्लेखशालिनी प्रतिभा,[4] तल्लक्षणो विशेषः । यदुक्तम्—'प्रतिभाऽस्य हेतुः' इति । यदि वा तस्य विशेषः रसावेशचारुकाव्यकरण-

## मधुमती

एवं प्ररोचिते तस्य उपायजिज्ञासायां उपायप्रदर्शनपरं श्लोकमवतारयति—**अस्य कारणमाहेति ।** **अस्य**—चमत्कारस्य । तेन निर्माणे समुल्लासे चेत्यनेन न विरोधः । **कवित्वबीजरूप इति ।** ऊहापोहसामर्थ्यं, उत्प्रेक्षेति यावत् । इमामेव दण्ड्यादयः प्रतिभानमाहुः । प्राक्तनमदृष्टं

---

1 'अस्य कारणमाह'–क. 2 मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य । अक्लिष्टानि च पदानि विभान्ति यस्यामसौ शक्तिः ॥ इति केचित् । प्रतिभैव शक्तिरित्यपरे । स्मृतिः व्यतीतविषया मतिरागामिगोचरा । बुद्धिः तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता । प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः । द्वे वर्त्मनी गिरां देव्याः शास्त्रं च कविवर्त्म च । प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम् ॥ इति ह्युक्तम् । 'कश्चित्' इति नास्ति–क. 3 'पदार्थविषय'–ख. 4 'प्रतिभा संस्कारः'–ख.

यां विना काव्यं[1] न प्रसरेत्, प्रसृतं वा उपहसनीयं[2] स्यात्। लोकस्य—स्थावरजङ्गमात्मक[3]लोकवृत्तस्य, शास्त्राणां—छन्दोव्याकरणाभिधानकोश[4] कलाचतुर्वर्ग-

---

### सङ्केतः

क्षमत्वमेव। प्रधानकारणत्वात् अस्याः प्राङ् निर्देशः। न प्रसरेत्—न निष्पद्येत। लोकस्येति। तात्स्थ्योपचारात् लोकवृत्तस्य। प्रधानमङ्गमदः,[5] तत्प्रतिपादनपरत्वात् काव्यस्य। छन्दोव्याकरणेति। एतेषां पूर्वपूर्वप्रधानता,

### मधुमती

वा। यां विनेति। काव्यपदं वर्णनासामान्यपरम्। न प्रसरेत्। प्रायेणेति शेषः। प्रसृतं वेति। अत्र अव्ययानां अनेकार्थत्वात् 'वा' शब्दः एवकारार्थः भिन्नक्रमश्च। तेन तया विना यत् प्रसृतं तत् उपहसनीयमेव स्यात्—काव्यमेव न भवतीत्यर्थः। यथाश्रुते तु विरोधः। लोकस्येति। लोकज्ञानेऽपि तद्वृत्तज्ञानं विना न वर्णनं भवतीति, लोकपदं लक्षणया तद्वृत्तपरमिति भावः। शास्त्राणामित्यादिग्रन्थेन सकलशास्त्राभिज्ञस्य काव्यकरणाधिकारः इत्युक्तम्। उक्तं च साहित्यमीमांसायाम्—

"न स शब्दो न तद्वाच्यं न सा विद्या न (ताः कथाः) सा कला।
जायते यन्न काव्याङ्गं अहो! भारो महान् कवेः॥" इति॥

---

1 'कवित्वं'–क. 2 'वा हसनीयं'–क. 3 'मात्मनः'–क. 4 'व्याकरणकोश'–क. 5 अदः—लोकवृत्तमेव।

गजतुरगखड्गादिलक्षणग्रन्थानां, काव्यानां च महाकवि-संबन्धिनां, आदिग्रहणात् इतिहासादीनां च विमर्शनात्[1] व्युत्पत्तिः[2]। काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिः[3]—इति त्रयः[4] समुदिताः, न तु व्यस्ताः,

---

## सङ्केतः

काव्यबन्धेऽपेक्षणीयत्वात्। व्युत्पत्तिः—सकलपदार्थपौर्वापर्यपर्यालोचन-कौशलम्॥

**उपदेशेनेति।** नदीजलाशयाद्रिप्रभृतिषु सामान्येष्वपि असत्पद्महंस-रत्नादिवर्णनं उपदेशः।[5] **करणे योजने चेति।** विशकलितरूपे,[6] प्रबन्धादीनां गुम्फरूपे च। यदि वा काव्यं कर्तुं ये जानन्ति तदुपदेशेन करणे निष्पादने, ये च काव्यं विचारयितुं जानन्ति तदुपदेशेन योजने

## मधुमती

**काव्यानां चेति।** स्वकृतकाव्यापेक्षणे अन्योन्याश्रयः इत्यतो व्याचष्टे—**महाकविसम्बन्धिनामिति।** **व्युत्पत्तिः**—निपुणता। तद्वर्णनं—

---

1 अवेक्षणं–विमर्शनं–तद्विषयकबुद्ध्यनुभवयोः सामरस्यपरीक्षा। 2 व्युत्पत्तिः–कार्यकारणभावविषयकः दृढतरः संस्कारः। 3यावत्सिद्धि पुनःपुनः विषयाभिमुखं मनसः क्षेपणमेव अभ्यासपदार्थः। 'असु क्षेपणे' इति धातुः। 'पुनःपुनः प्रवृत्तिः'–क. 4 शक्तिनिपुणताभ्यासाः। 5 न च तत्र असत्त्वमात्रेण मिथ्यात्वमस्य शङ्कनीयम्, अस्योपदेशस्य आध्यात्मिकयोगभूमिषु परिदृश्यमानपदार्थतद्धर्मविशेषाणां परिचायकत्वेन साधनासोपानभूतत्वात्। 6 'रूपेण'–ग.

**तस्य काव्यस्य उद्भवे—निर्माणे समुल्लासे च हेतुः ।**
**न तु हेतवः [1] ॥ ३ ॥**

---

## सङ्केतः

विचारणे चेत्यर्थः । उद्भवनं—उद्भवः इति व्युत्पत्त्या निर्माणे प्रादुर्भावे च, उत्कृष्टं भवनमिति व्युत्पत्त्या समुल्लासे च इति यावत् ॥ ३ ॥

## मधुमती

**काव्यं कर्तुमित्यादि । कवेरिति ।** एवं च कर्तृबोद्धृभेदेन उपदेशभेदः इति दर्शितम् । **उद्भवे—निर्माणे समुल्लासे चेति ।** **इदमत्राकूतम्**—शक्त्यादित्रयं काव्यकरण इव काव्यचमत्कारेऽपि हेतुः । अयं विशेषः—यस्य काव्यकर्तुरुपदेशात् अभ्यासः सः कर्तैव, यस्य तु बोद्धुरुपदेशात् सः बोद्धैव, यस्योभयोपदेशात् सः कर्ता बोद्धा चेति । [2] तत्राद्यः कविः, द्वितीयः सहृदयः, अन्यः कविः सहृदयश्चेति । यदाहुः—

"सरस्वत्याः तत्त्वं कविसहृदयाख्यं विजयते ।" इति ॥

एवं च करणबोधयोः शक्त्यादीनां संख्यामात्रेण साधर्म्यं, न तु शक्त्यादिविशेषतो विवक्षितमिति भावः ॥

नन्‌ु अभ्यासस्य हेतुत्वे अन्योन्याश्रयः, करणेन अभ्यासः अभ्यासात् करणमिति चेत्—न । पूर्वपूर्वजन्माभ्यासस्य उत्तरोत्तरकाव्यहेतुत्वात् । वस्तुतस्तु काव्यार्थोन्नयनाभ्यासः अत्र अभ्यासत्वेनाभिमतः, तस्य च काव्यहेतुत्वमेवेति । **हेतुः, न तु हेतवः इति ।** अत्र हेतुपदं फलोपहितपरम् ।

---

1 दण्डचक्रादिन्यायेन परस्परसापेक्षाणामेव हेतुत्वं, न तु तृणारणिमणिन्यायेन व्यस्तानामिति भावः । 'न च हेतवः'–क. 2 इदमत्राकूतमित्यारभ्य एतदन्तं–च. पुस्तके नास्ति ।

एवं अस्य कारणं उक्त्वा स्वरूपमाह -[1]

---

## मधुमती

एवं च ' त्रयः समुदिताः हेतुः न तु हेतवः ' इति, ' व्यस्ताः हेतवः न तु हेतुः ' इति च वाक्यद्वयं सम्पद्यते । तथा च प्रत्येकं फलोपधानं समुदाये स्वरूपयोग्यतां च निषेधयता काव्यस्येयं सामग्री, न तु गोमयवृश्चिकादिवत् करणमित्यर्थः सूचितः । यत्र देवताराधनादिना[2] विनाऽपि बालस्य पद्यकरणं तत्रापि जन्मान्तरीयशक्त्यादि[3] कारणमिति न व्यभिचार इति भावः ॥ ३ ॥

प्रासङ्गिकं कारणाभिधानं समाप्य पूर्वोक्तकाव्यस्य धर्मिणमाह— एवमिति । एवं व्याचख्युः पितृचरणाः काव्यदर्पणे ॥ भास्करादयस्तु— स्वरूपं—काव्यस्वरूपमित्याहुः । तत्र पूर्वं साधीयः । उत्तरत्र तु पूर्वोक्तकाव्यस्वरूपविरोधः । तत्र कविकर्मणः, अत्र तु तद्विषयीभूतशब्दार्थयोः काव्यत्वाभिधानात् ॥

यद्यपि —लोकोत्तरवर्णनारूपं निपुणं कविकर्म यत्र इति बहुव्रीह्याश्रयणे को विरोधः ? किञ्चेदं स्वरूपकथनं वृत्तिकृत एवेति, सूत्रे तद्विरोधोऽप्यकिञ्चित्करश्च । तथापि ' कवेर्भावः काव्यम् ' इति योगात् कविसम्बन्धिनि व्यापारे काव्यपदप्रयोगात् काव्यपदं योगरूढतया वाक्यविषया वा तत्प्रतिपादक[4]मित्यन्यदेतत् । अन्यथा शब्दार्थयोः सकलकविसाधारण्येन ' रघुवंशादि कालिदासादिकृतम् ' इत्यादिव्यवहारः न स्यात् । एवं च—यथा सूत्रपुष्पयोः साधारण्येऽपि ग्रथनमेव मालाकारव्यापारः, तथा अत्रापि शब्दार्थयोः साधारण्येऽपि योजनमेव कविव्यापारः इति बोध्यम् । तदेव च काव्यम् ।

---

1 अत्र स्वरूपपदं लक्षणपरमिति केचित् ।　2 ' देवतादिना '—च.
3 ' भक्त्यादि '—च.　4 ' तत्प्रतिपद '—च.

## मधुमती

लिखितध्वनिवचनसंवादात्, कर्मधारयापेक्षया बहुव्रीहेः जघन्यत्वात्, कवेः निर्मितिमादधतीति सूत्रविरोधाच्च व्याख्यानान्तरे दुरुद्धरो विरोधः । एतेन—कविव्यापारविषयीभूतौ शब्दार्थौ, तदुभयविषयः कविव्यापारो वा काव्यमित्यत्र नियामकाभावात्, नागृहीतविशेषणान्यायस्य [1] उभयत्रापि साम्यात् उभयमपि काव्यमिति निरस्तम् ॥

न च कविकर्मवत् तद्विषयीभूतौ तावपि तत्सम्बन्धिनावेवेति वाच्यम् । साक्षात्सम्बन्धे बाधके सत्येव परम्परासम्बन्धस्वीकारात् । न च आकरविरोधः । काव्याश्रयतया तयोरुभयोः [2] काव्यपदप्रयोगात् । अत्रापि शब्दः साक्षात् कविव्यापारविषयः, अर्थश्च व्यवच्छेदकतया । तादृशानुपूर्वीकेष्टार्थव्यवच्छिन्नपदकदम्बकस्यैव योजनात्मककविव्यापारत्वात् । अत एव दण्डी—

"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ।" [3] इत्याह ॥

नन्वेवं तददोषौ शब्दार्थौ इत्यग्रिमग्रन्थविरोधः, तत्र द्वन्द्वस्वरसात् उभयप्राधान्यप्रतीतेः इति चेन्न । काव्यं हि व्यङ्ग्यपरामर्शनं विना न चमत्करोति, अचमत्कृतं च न वशयेत्, अवशयच्च नोपदेशे पर्यवस्येत् इति तत्प्रतिपत्तिरावश्यकी, सा च व्यञ्जनाधीना, तस्याश्च शब्दार्थौ आश्रयौ, इत्येतावन्मात्रेणैव उभयोः समप्राधान्यं विवक्षित्वा [4] द्वन्द्वसमासाश्रयणात् । एतच्च—'एकज्ञानानन्तरज्ञानविषयत्वं अपरवर्णस्य आनुपूर्वी' इति पक्षे । यदि तु—'एकवर्णसमानकालपदार्थप्रतियोगिकध्वंस[5]समानकालत्वं अन्यस्य आनुपूर्वी' इति पक्षः, तदा तथाविधस्यापि कविव्यापारत्वाभावात् रसाभि-

---

1 नागृहीतविशेषणा बुद्धिः विशेष्यमुपसंक्रामति इति न्यायः । 2 'तयोः'—च. 3 काव्यादर्शे । 4 'प्राधान्यस्य विवक्षितत्वात्'—च. 5 'योगिकद्वन्द्व'—च.

**तददोषौ शब्दार्थौ सगुणौ**
**अनलङ्कृती पुनः क्वापि ।**

---

## सङ्केतः

तत् इति काव्यम् । शब्दार्थौ मिलितौ जातिव्यक्तिवत् अन्योन्याव्यभिचारित्वेन । एतेन शब्दार्थयोः भेदवादिनः प्रत्युक्ताः । तैर्हि उक्तम् — 'मुखे शब्दमुपलभामहे,' भूमौ अर्थम्' इति । एतेन कविनिर्मितकमनीयतातिशायिनोः शब्दार्थयोः प्रत्येकं काव्यत्वमिति पक्षद्वयमपि निराकृतम् । यतः द्वयोराह्लादकारित्वं, न तु प्रत्येकमिति ।[2] द्विवचनेन च शब्दार्थजातिद्वित्वमभिधीयते । व्यक्तिद्वित्वाभिधाने तु एकपदस्थयोरपि काव्यत्वं स्यात् । सगुणाविति । अनेन शाकटिकवाक्यानां[3] काव्यत्वं निरस्तम् ॥

## मधुमती

व्यक्त्यनुकूलं शब्दतदर्थयोः प्रतिसन्धानमेव काव्यम् ।[4] अत एव 'शब्दार्थौ' इति उभयप्राधान्यज्ञापनाय द्वन्द्वः । 'तददोषौ' इत्यादि तु रसव्यञ्जकतावच्छेदकं रूपं इति परमार्थः ॥

तददोषाविति । अत्र केचित्—दोषाभावो न लक्षणान्तर्निवेशितः ।[5] तथात्वे—'तथाभूतां दृष्ट्वा' इत्यस्य न्यूनपदत्वलक्षणदोषाश्रयस्य काव्यत्वं न

---

1 पठितं, श्रुतं, गीतं, रचितं, बुद्धं इत्यादिव्यवहारस्तु प्राधान्यादिविवक्षया प्रवृत्तः इति भावः । 2 एतत्तु व्यवहारतः । परमार्थतस्तु परस्परं धर्मधर्मिभाव एवेति भाति । 3 'शाटिकवाक्यानां '-ख. अस्मिन् पाठे शाटिकः—तन्तुवायकः । 4 'कार्यम् '-च. 5 निवेशी '-च.

## मधुमती

स्यात्। न चेष्टापत्तिः। स्वयमेव उत्तमकाव्यत्वाभिधानात्। किन्तु शरीरे कालुष्यादिवत् हेयताप्रतिपादकत्वं दोषाणाम्। किञ्चैवं काव्यं प्रविरलविषयं [1] स्यात्। अपि च—शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम्, तस्य रसधर्मत्वात्। उपचारस्वीकारे तु रसासत्त्वात् उपचारस्याप्यसम्भवात्। रससत्त्वे तु रसवन्तौ इत्येव वक्तुं युक्तम्। न हि 'प्राणिमन्तो देशाः' इति वाच्ये 'शौर्यादिमन्तो देशाः' इति वक्तारो भवन्ति" इत्याहुः। तदसत्। चमत्कारजनकं हि काव्यं इह निरूप्यम्। न च सदोषस्य चमत्कारजनकता। अन्यथा तद्गतो हेयताऽनियमात्। 'तथाभूतां' [2] इत्यादौ 'अस्माभिः, इत्थं' इति पदद्वयघटितस्यैव [3] ध्वन्युदाहरणे विवक्षितत्वात्। 'गुरुः खेदं खिन्ने' इत्यादिचतुर्थपादस्यैव वा तथात्वेन अभिधानात्॥

वस्तुतस्तु—काव्याभासस्यापि प्रकृतपद्यस्य न्यूनपदतादोषाज्ञाने प्रकृतमर्थं व्यञ्जयितुं [4] काकुवैशिष्ट्यज्ञानापेक्षणात् तावन्मात्रपुरस्कारेणैव अत्र उदाहृतत्वादिति ध्येयम्। एवं अन्यत्रापि यद्दोषवतस्तत्रोदाहरणं तत् तत्काव्यविशेषता [5] प्रयोजकरूपोदाहरणपरम्। सदोषादपि तदज्ञाने चमत्कार-निष्पत्तेः। यत्र तु सामान्यलक्षणवति तादृशरूपसम्भवः तत्र उत्तमादित्वमिति तत्त्वम्। तस्मात् **अदोषौ शब्दार्थौ** काव्यम्, सदोषौ तु तदाभासः इति स्थितम्। अन्यथा काव्यतदाभासविवेक एव [6] न स्यात्। प्रविरलविषयता तु काव्यस्य इष्टैव। यदाहुः ध्वनिकाराः—"अत एव द्वित्रा एव कवयः,

---

1 'प्रसिद्धविषयं'–ज. 2 वेणीसंहारे। 3 'पदद्वयध्वंसे तस्यैव'–ज. 4 'व्यञ्जयतः'–च. 5 'यद्दोषपरः तत्र तदोदाहरणं तत्काव्यविषयता'–च. 6 'एव' इति नास्ति–च.

दोषगुणालङ्काराः वक्ष्यन्ते । क्वापीत्यनेन एत-

---

## सङ्केतः

दोषगुणेति । श्रुतिकटुप्रभृतयः अनित्याः दोषाः,[1] माधुर्यादयस्त्रयः[2] अनित्याश्च गुणाः रसस्य अपकर्षोत्कर्षहेतवः ।[3] ते च अन्वयव्यतिरेकानु-

## मधुमती

द्वित्राण्येव काव्यानि"[4] इति । गुणस्य रसधर्मत्वेऽपि रसाभिव्यञ्जकत्वात् शब्दार्थयोरपि तद्वत्त्वं अप्रत्यूहम् । रसाभिव्यञ्जकत्वं तु रसाभिव्यक्तिस्वरूप-योग्यत्वम् । तच्च रसासत्त्वेऽप्यस्ति । तदवच्छेदकं च "मूर्ध्नि वर्गान्त्यगाः"[5] इत्यादिना वक्ष्यति । तदिदमभिधास्यति—

"गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ।"[6] इति ।

यद्वा—'शरीरे सुखं'[7] इतिवत् 'वने सिंहनादः' इतिवच्च शब्दार्थयोः माधुर्यादिप्रतीतेः तयोरपि तत्परम्परासम्बन्धो न विरुद्धः ॥

क्वापीत्यनेनेति । एवं च अत्र अलङ्कारगर्भत्वं, न तु स्फुटालङ्कार-गर्भत्वम्,[8] उक्तस्थलाव्याप्तेरिति बोद्धव्यम् । यत्तु—नञः अत्र अभावार्थकतैव, अतः क्वापि अलङ्कारशून्यमपि काव्यम् । यदाह—

"दोषहानं गुणादानं कर्तव्यं नियमात् कृतौ ।

कामचारः पुनः प्रोक्तोऽलङ्कारेषु मनीषिभिः ॥" इति, **गोपालस्वामी ;** तन्न । अलङ्कारं विना चमत्कारानिष्पत्तेः तत्सत्त्वस्यावश्यकत्वात् ।[9] न च

---

1 दोषाः—रसास्वादप्रतिबन्धकाः । 2 माधुर्यौजःप्रसादाख्याः । 3 यथा-संख्यमन्वयः । 4 'द्वित्राः पञ्चषा वा महाकवयः' (ध्वन्या. ६) इति तत्रत्यं वाक्यम् । 5 का. प्र. ७. ७४. 6 का. प्र. ८–७२. 7 'सुखं'–च. 8 'न तु' इत्यादि नास्ति–च. 9 'तत्सर्वस्यावश्यकत्वम्'–च.

**दाह—[1]यत् सर्वत्र सालङ्कारौ, क्वचित्तु [2] स्फुटालङ्कार-विरहेऽपि न काव्यत्वहानिः इति। यथा—**

---

## सङ्केतः

विधानात् रसाश्रयाः तद्धर्माश्च। भक्त्या [3] तु तदुपकारिणोः शब्दार्थयोः। एवं अलङ्कारा अपि। एतत्सर्वं अग्रे विस्तरेण व्याख्यास्यते। अनलङ्कृती इत्यत्र नञः अल्पार्थकतया [4] काप्यस्फुटालङ्कृती इति ज्ञेयम्। न तु सर्वथा निरलङ्कृती इति। निर्दोषसगुणकाव्यस्य अलङ्कारमात्राव्यभिचारात्। अत एव स्फुटालङ्कारविरहेऽपि इत्युक्तम्। अन्यथा तु अलङ्कारविरहेऽपीत्येव ब्रूयात्। विरहशब्दः सर्वथा न अभावं सूचयति, तत्र संयोगाशासद्भावात्।[5] न काव्यत्वहानिरिति। अत्र कवेः कर्म काव्यम्, तस्य भावः काव्यत्वं इति व्युत्पत्तिः। यदि वा—'कबृ वर्णे' इत्यस्य धातोः, कव्यते इति काव्यं, तस्य भावः तत्त्वं,[6] इति व्युत्पत्तिः॥

## मधुमती

विलिखितवचनविरोधः। यथा गुणानां सर्वेषामुपादानं दोषाणां च हानं, न तथा [7] अलङ्काराणामिति तदर्थात्। यद्वा—दोषाणां च गुणानां च वर्णव्यङ्ग्यादिनियतत्वम्, न तथा अमीषामपि। अन्यथा गुणशून्यमपि काव्यं स्यात्—

"मुख्या महाकविगिरां अलङ्कृति[8]भृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्॥" (ध्वन्या. ३. ३७)

---

1 'त्यनेन नैतदाह'–क. 2 'क्वचित्'–क. 3 परम्परया लक्षणयेत्यर्थः। 4 "तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता। अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः॥" 5 'तस्य हि संयोगांशे सद्भावात्'–ख. 6 धातुस्तु 'कबृ' इत्येव। वबयोरभेदात्तु इयमुक्तिः। काव्यत्वमित्यर्थः। 7 'हानं तथा'–च. 8 'अलङ्कार'–च.

**यः कौमारहरः स एव हि वरः, ता एव चैत्रक्षपाः**

---

## सङ्केतः

यः कौमारेति। अत्र—**रेवारोधसि** यत् **वेतसीतरुतलं**, तत्र—यः पूर्वं सुरतविधिः तत्र **चेतः समुत्कण्ठते** इत्यन्वयः। **सुरभि**—कदम्बानिलोक्तिवलात्, अर्कगतचित्रायां भवाः **चैत्र्यः**, ताश्च ताः **क्षपाश्च** इति व्याख्या।[1] यदा तु **चैत्रस्य**—वसन्तस्य **क्षपा** इति पक्षः,[2] तदा

## मधुमती

इति ध्वनिकारिकायामपि 'अपि'शब्दः अनास्थावचनः, न तु अनुक्त-समुच्चयार्थकः, येन अनलङ्कृतानामपीति समुच्चयेन विरोधः स्यात्। अत एव **गुप्तपादाः**—"बाह्यालङ्कारधारिणीनामपि नायिकानां यथा लज्जा मुख्यं भूषणं, तथा कविगिरां प्रतीयमानकृता छाया" इति तदर्थमाहुः। **एतेन** स्फुटत्वं अलङ्कारविरहविशेषणमित्यपास्तम्। "स्फुटो न कश्चिदलङ्कारः" इति अग्रिमग्रन्थविरोधाच्च॥

**यः कौमारहरः इति**। कदम्बशब्दः अत्र धूली[3]कदम्बपरः। तेन **ता एव चैत्रक्षपाः** इत्यनेन न विरोधः। यत्तु—एतदनुरोधेन 'ता एव भाद्रक्षपाः' इति पाठकल्पनं तत् वार्षिकम्, तस्य[4] नदीकच्छे अवर्ण-

---

1 'इति विग्रहः'–ख. 2 'इत्यर्थः'–ख. 3 'धूलि'–च. 4 'तद्वार्षिक-रतस्य'–च.

ते चोन्मीलितमालतीसुरभयः प्रौढाः[1] कदम्बानिलाः ।
सा चैवास्मि, तथाऽपि तत्र सुरतव्यापारलीलाविधौ[2]
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ १ ॥[3]

---

## सङ्केतः

उत्कर्षेण मीलिताः विकासरहिताः याः मालत्यः ताभिः सुरभयः सुभगाः । तासां अविकासे हि कदम्बोत्कर्षः इति व्याख्येयम् । यद्वा—उन्मीलित-मालतीव सुरभयः इत्यपि व्याख्यानम् । तथा 'यः कौमारहरः स एव हि वरः' इत्याद्यनुत्कण्ठाकारणसम्भवेऽपि अनुत्कण्ठालक्षणफलस्य अनुत्पत्तौ[4] विशेषोक्तिरलङ्कारः । सा च फलस्यानुत्पत्तिः 'चेतः समुत्कण्ठते' इति विरुद्धफलोत्पत्तिमुखेन उपनिबद्धा ॥[5]

## मधुमती

नीयत्वात् तच्च कलनमेव । मालतीपदमपि, यन्मते जातिर्वर्ण्या वसन्ते, तन्मते तत्परम् । मतान्तरे तु वासन्तीपरमिति ध्येयम् । प्रौढाः—स्वकार्यकरणशक्ताः । अन्यथा झञ्झामारुतत्वेन अपकर्षापत्तेः इति ध्येयम् ॥

---

1 प्रौढाः—रत्युद्दीपकाः । 2 विधिः—सम्पादनम् । 3 शीलाभट्टारिकास्थोऽयं श्लोक इति सूक्तिमुक्तावल्यां उक्तम् । 4 'लक्षणकार्यस्य अनुत्पत्तौ'—ख.
5 अत्र चैत्रक्षपासमुल्लासितमालतीकुसुमपरिमलामोदितकदम्बकोरकामर्शनमन्दी-भवन्मलयमारुतविसारिशीतलनर्मदावेलावनोद्भूतवेतसीतरुतलविश्रान्तायाः मत्सौभाग्यसर्वस्वमनुभवतः नायकस्य संनिधानं रहसि प्राप्तवत्याः अपि तदीयप्रेमास्पदस्य मम तत्संयोगादिविषये चेतः समुत्कण्ठते – इत्युक्ते नायिकावचसि सम्भोगानुकूलवसन्त-मालतीमलयानिलादियावत्सामग्रीसत्त्वदशायामपि सम्भोगरूपकार्यानुत्पत्तिः विरुद्ध-फलोत्पत्तिमुखेन उपनिबद्धेत्यर्थः । अत्र 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे ।' इत्युक्तः विशेषोक्तिभेदः ।

अत्र स्फुटो न कश्चिदलङ्कारः ।

---

## सङ्केतः

अत एव विशेषोक्तेः अस्फुटत्वमित्याह—अत्र स्फुटो नेति । यदि तु वरादेः कारणस्य सामग्र्ये सत्यपि सुरतविधेः कार्यस्य अनुक्तेः [1] विशेषोक्ति-

## मधुमती

अत्र स्फुटो न कश्चिदलङ्कारः इति । न च अस्मि इत्यस्य क्रिया-रूपत्वात्, तस्य च परिणामेन [2] वरादौ अन्वयात् क्रियादीपकम् । तस्य प्रस्तुताप्रस्तुतविषयत्वात्, अत्र वरादेः प्रस्तुतत्वात् । [3] विभक्तिपरिणामेन अन्वये अस्फुटत्वाच्च । नापि तुल्ययोगिता, औपम्याप्रतीतेः । गुणक्रिया-यौगपद्याभावाच्च न समुच्चयः । न च स्मरणालङ्कारः, 'स एव हि' इत्यादेः प्रत्यभिज्ञानशरीरत्वात् । सदृशदर्शनेन सदृशस्य अस्मरणाच्च । स्मरणमात्रस्य उक्तिवैचित्र्याभावात् अनलङ्कारत्वात् । अत एव न परिसंख्यालङ्कारोऽपि । एवकारस्य अभेदार्थकतया [4] व्यवच्छेदाबोधकत्वात् । किन्तु—विभावना—विशेषोक्ति—तत्संसृष्टि—काव्यलिङ्गरूपाः चत्वारोऽपि अत्र अस्फुटाः । तत्र अनुत्कण्ठाकारणमभिधाय अनुत्कण्ठानभिधानात्, उत्कण्ठाकारणानभिधानेऽपि तदभिधानाच्च विशेषोक्तिविभावने । अनुत्कण्ठाकारणरूपकार्याभावस्य, उत्कण्ठाकारणाभावस्य च अर्थलभ्यत्वेन अशब्दत्वात् अस्फुटत्वम् । अस्फुटा-लङ्कारद्वयघटितत्वाच्च संसृष्टेरप्यस्फुटत्वम् । वस्तुतस्तु—

"स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम् ।"

---

1 'अनुत्पत्तेः'—ख.  2 'विपरिणामेन'—च.  3 'अप्रस्तुतत्वात्'—च.
4 'एवकारस्य अवच्छेदार्थकतया'—च.

## सङ्केतः

रिति व्याख्यायते, तदा नास्फुटत्वं विशेषोक्तेः, किन्तु स्फुटत्वमेव स्यादिति। **अथ**—एकस्य वेतसीतरुतलात्मनः अन्यस्य कस्यापि वा कारणस्य वैकल्यात् विशेषोक्तेः अस्फुटत्वं व्याख्यास्यते, तदसत्। कारणसामग्र्यभावेनैव विशेषोक्तेः उत्पत्तिरेव नास्तीति कस्यास्फुटत्वं कल्प्यम्? । न च रसवदलङ्कारः। यत्र प्रधानत्वेन वाक्यार्थीभूतस्य अन्यार्थस्य अङ्गं रसः, तत्रैव रसवदलङ्कारात्। यत्र तु अङ्गी रसः तत्र प्रधानत्वात् अलङ्कार्यो रसध्वनिरेवेति ॥

## मधुमती

इत्यभिधानात् अस्फुटघटिता संसृष्टिरपि न। तुल्यन्यायात्। 'यतः मालतीसुरभयः अतः प्रौढाः' इति हेतुत्वस्य अशाब्दत्वाच्च अस्फुटत्वमिति ॥

**यद्यपि** अनुप्रासलक्षणशब्दालङ्कारः अत्र स्फुट एव। तथापि नार्थालङ्कारः स्फुटः इत्यर्थः। न च तस्य स्फुटत्वे किं अर्थालङ्कारगवेषणया? इति वाच्यम्। उभयोरप्यलङ्कृतयोः काव्यत्वात् इति सम्प्रदायः ॥ **वस्तुतस्तु** व्यङ्ग्यापेक्षया चमत्काराजनकत्वं अस्फुटत्वम्। **एवं च वस्तुना** यत्र अलङ्कारव्यञ्जनं तद्विहाय उत्तममध्यमकाव्ययोः अलङ्काराणां अस्फुटत्वम्। अत एव 'भम धम्मिय' इत्यादौ काव्यलिङ्गानुप्रासौ, 'निश्शेषच्युतचन्दनं' इत्यादौ अपह्नुत्यनुप्रासौ सन्तावपि न चमत्कारकारिणौ। अलङ्कारस्य अप्रतीतौ, द्रागर्थप्रतीतौ वा व्यञ्जकत्वमेव न स्यात्। स्फुटत्वं च[1] अधमे। अत एव तत् चित्रमित्युच्यते। अत एव च अव्यङ्ग्यमित्यत्रापि एतदेवास्फुटत्वं वक्ष्यति। एतेन '**स्फुटो न कश्चित्**' इत्यत्रापि न सङ्कोचः।

---

1 'अस्फुटत्वं'—च.

रसस्य च [1] प्राधान्यात् नालङ्कारता ॥

---

## सङ्केतः

रसस्येति । सूक्ष्मेक्षिकया तु 'ता एव, ते च' इत्यादौ भेदे अभेद इति रूपकातिशयोक्तिः [2] स्फुटैवेति उदाहरणान्तरमेवान्वेष्यम् । तथा अत्र अलङ्कारान्तरं व्याख्यानान्तरं चास्तीति स्वयमूहनीयम् ॥ [3]

## मधुमती

सतामप्यलङ्काराणां चमत्काराजनकत्वात् । अत एव चमत्कारितया रसस्य तत्त्वं आशङ्क्य निरस्तं इति युक्तमुत्पश्यामः ॥

**रसस्येति** । न हि चमत्कारकारित्वमात्रेण अलङ्कारत्वम्, अपि तु इतराङ्गीभूय तथात्वेन । न चात्र रसस्य उपकार्यमस्ति, प्राधान्यात् इति भावः । बह्वलङ्कारस्फुरणे कोऽत्र [4] कवितात्पर्यविषयः ? इति अनिश्चयरूप-संशयात्मकालङ्कारसङ्कर एव अत्र स्फुटत्वेनोक्तः । अत एव रसरूप एवालङ्कारः कवितात्पर्यविषयः इति निश्चितत्वात् नास्फुटत्व[5]मित्याशङ्क्य **रसस्येत्यादिना** निरस्यतीत्यप्याहुः ॥

---

1 'रसस्य हि'–क. 2 इदं चिन्त्यम्, निगीर्याध्यवसानाभावात् । 3 व्यतिरेकविभावनासमुच्चयतुल्ययोगितादिकं अलङ्कारान्तरं, कदम्बानिलाः इत्यादेः समूहानिलाः इत्यादिव्याख्यानान्तरं च स्वयमूह्यमित्यर्थः । 4 'कोऽत्र' इति नास्ति–च. 5 'न स्फुटत्व'–च.

तद्भेदान् क्रमेणाह—

**इदमुत्तममतिशयिनि व्यङ्ग्ये**
**वाच्यात् ध्वनिः बुधैः कथितः ॥४॥**

इदमिति काव्यम् । बुधैः—वैयाकरणैः, प्रधानभूत-

---

### सङ्केतः

काव्यविशेषानाह—**इदमिति** । वाच्यात् अतिशयिनि[1] व्यङ्ग्ये—वस्त्वलङ्काररसरूपे **उत्तमं** काव्यं—काव्यविशेषः ध्वनिः । **बुधैः** इति बहुवचनेन ध्वनिव्यवहारस्य अनादित्वं सूच्यते ॥

### मधुमती

सिद्धे[2] सामान्यलक्षणे विभागपुरस्सरं विशेषलक्षणमाह—**तद्भेदानिति** । अत्र भेदपदस्य भावकरणव्युत्पत्तिभेदेन [3] विभागविशेषलक्षण[4]परत्वं बोद्धव्यम् । अत्र वाच्यातिशायित्व—तदनतिशायित्व—अलङ्कारवस्तुरूपोपाधित्रयविशेषभेदात् काव्यभेदः इति स्मर्तव्यम् , 'यद्यपि स नास्ति' इत्यादेः वक्ष्यमाणत्वात् । **इदमुत्तममित्यादि** । ननु ध्वनिलक्षणे काव्ये अतिव्याप्तमित्यत आह—**ध्वनिरिति** । ध्वनिः—ध्वनिविषयः । ध्वननतद्विषयतत्करणेषु ध्वनिपदप्रयोगात् । **बुधैः**—ध्वनिपण्डितैः । तथा च यदेवात्र उत्तममित्युच्यते तदेव तैः ध्वनिरित्युच्यते । संज्ञामात्रभेदाच्च नातिव्याप्तिरित्यर्थः । एवमेवाग्रेऽपि । यन्मध्यमं तत् गुणीभूतव्यङ्ग्यम् , यदवरं तत् चित्रं—वाच्यचित्रमित्यर्थो [5] बोद्धव्यः । यदि तु यथाश्रुतवृत्त्यनुरोधेन **बुधैः** इति **वैयाकरणैः**

---

1 अतिशयेन चमत्कारजनके । 2 'निर्दिष्टे'—च. 3 भेदनं भेदः—विभागः इति भावे, भिद्यते अनेनेति भेदः—विशेषलक्षणं इति करणे च व्युत्पत्तिः । 4 'लक्षणा'—च. 5 'तत् शब्दचित्रं वाच्यमित्यर्थो'—च.

**स्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति** [1] **व्यव-**

---

## सङ्केतः

नतु ध्वन्यते—द्योत्यते इति ध्वनिः—व्यङ्ग्यम्, स च काव्यस्यात्मा, तत् कथं काव्यमेव ध्वनिरिति? आह—आत्मात्मवतोरभेदेनोपचारात्। यदा तु ध्वनतीति ध्वनिः इति कर्तृव्युत्पत्तिः तदा नोपचारः। **स्फोटरूपव्यङ्ग्य-व्यञ्जकस्येति**। स्फुटति—विकसति अर्थः अस्मादिति स्फोटः। श्रूयमाणस्य शब्दस्य प्राक् प्रत्येकमेव तत्तद्वर्णात्मतया स्फोटं अस्फुटं व्यञ्जयतः पूर्वविषय-संस्कारसाचिव्यात् पश्चात् अन्ते स्फुटं स्फोटमाभासयतः प्रयत्नभेदानुपातिनः वायवीयध्वनेरित्यर्थः॥

**यद्यपि** ध्वननमिति भावव्युत्पत्त्या ध्वनिः शब्दार्थव्यापारः, ध्वन्यत इति कर्मव्युत्पत्त्या व्यङ्ग्योऽर्थः, ध्वनतीति कर्तृव्युत्पत्त्या ध्वनिः शब्दोऽर्थो वा, शब्दार्थयुगलं काव्यरूपं वा। तथापि कारिकायां शब्दार्थसमुदाय एव काव्यरूपः मुख्यतया ध्वनिनाम्ना प्रख्यापितः, यथोक्तप्रकारध्वनिमयत्वात्॥

## मधुमती

इत्यत्र अन्वीयते, तदा मध्यमकाव्यलक्षणे **गुणीभूतव्यङ्ग्य**पदं, अधमलक्षणे **शब्दचित्रादि**पदं च अनर्थकमापद्येत। एवं च वृत्तौ—**बुधैः** इति **तन्मतानु-सारिभिरन्यैरपि** इत्यत्रान्वितमिति ध्येयम्। **वैयाकरणैः** इति तु असान्दृष्टिकत्व[2]शङ्कामपनेतुमिति ध्येयम्॥

---

1 शब्दादर्थे ज्ञायमाने अपेक्षिता आनुपूर्वी आशुविनाशिनां वर्णानां कथं वा संभवेत् इत्याशङ्कां. पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितान्तिमवर्णानुभवेन व्यज्यमानः स्फोट एव सर्वविधार्थप्रत्यायनक्षमः, स एव व्यङ्ग्यात्मकः नित्यः ब्रह्मस्वरूपः, व्यञ्जनावृत्त्या तद्व्यञ्जकः वर्णात्मकः शब्द एव ध्वनिरित्युच्यते इति समादधुः वैयाकरणाः इति भावः। 2 'असान्दृष्टिकत्वं—असाक्षिकत्वम्। अप्रामाणिकत्वमिति यावत्।

हारः कृतः। ततः[1] तन्मतानुसारिभिः अन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य।[2] यथा—

---

## सङ्केतः

अन्यैः – आलङ्कारिकैः। न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्येति। उच्यते येनार्थः सः वाच्यः शब्दः। बाहुलकात् घ्यण्।[3] यदि वा वाचि साधुः वाच्यः। साधौ यः।[4] उच्यते कण्ठादिभिः इति वा वाच्यः शब्दः। उच्यते असौ इति च वाच्यः अर्थः। तौ वाच्यौ शब्दार्थौ न्यग्भावितौ उपसर्जनीकृतौ[5] येन व्यङ्ग्येनार्थेन स चासौ व्यङ्ग्यश्च। तस्य व्यञ्जने क्षमस्य शब्दार्थयुगलस्य काव्यमिति व्यपदेश्यस्य व्यञ्जकत्वसामान्यात्[6] ध्वनिर्व्यवहारः।[7] हृदयदर्पणकृता न्यग्भावितशब्दार्थस्वरूपता व्यञ्जनव्यापारस्यैवोक्ता। मम्मटस्य तु[8] व्यञ्जनव्यापारविषयस्य व्यङ्ग्यस्येति तात्पर्यार्थः॥

## मधुमती

न्यग्भावितेति। न्यग्भावितं—उपसर्जनीकृतं वाच्यं येन तादृशं यद् व्यङ्ग्यं तद्व्यञ्जनक्षमस्येत्यर्थः॥

---

1 'अतः'–क. 2 तद्वदुत्तमकाव्यस्येति यावत्। व्यवहारः क्रियते इत्यनुषङ्गः। 3 'ण्यत्'–ख. घ्यण् इति पाठे हेमचन्द्रशब्दानुशासनप्रक्रिया अनुसन्धेया। प्रायेणास्य माणिक्यस्य हेमचन्द्र एव प्रमाणमिति ज्ञायते। 4 'साधौ यः' इति नास्ति–ख. 5 अप्रधानीकृतावित्यर्थः। 6 तस्यैव ध्वनिपदप्रवृत्तिनिमित्तत्वात् ध्वननेनैव चमत्कारकारित्वाच्च। 'साम्यात्'–ख. 7 तथा च वृत्तिस्थं अन्यपदं आलङ्कारिकपरमिति भाव्यम्। 8 'मम्मटेन तु'–ख.

निःशेषच्युतचन्दनं स्तनतटं, निर्मृष्टरागोऽधरः,
नेत्रे दूरमनञ्जने, पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गताऽसि, न पुनः तस्याधमस्यान्तिकम् ॥२॥[1]

अत्र तदन्तिकमेव रन्तुं गताऽसि इति प्राधान्येन अधमपदेन व्यज्यते [2] ॥ ४ ॥

## सङ्केतः

व्यङ्ग्यश्चार्थः वस्त्वलङ्काररसादिभेदात् त्रिविधोऽपि वाच्यात् दूरं भिन्नः । तथाहि—आदिमो भेदस्तावत् वाच्यादन्यः । स हि विधौ प्रतिषेधरूपः प्रतिषेधे विधिरूपश्च ॥

तत्र प्रथमं प्रतिषेधे विधिरूपं उदाहरति [3]—**निःशेषेति** । **च्युतं**, न तु क्षालितम् । क्षालितमित्युक्ते व्यङ्ग्यार्थप्रतीतिरेव न स्यात् । वाप्यामेव क्षालनभावात् । **निर्मृष्टः** न तु किञ्चिन्मृष्टः । [4] **दूरं अनञ्जने** निकटे तु साञ्जने । **पुलकिता** इति **तन्वी** इति च उभयं विधेयम् । व्यङ्ग्यपक्षे **अधम**पदस्य, अधमपदसहायानां **चन्दनच्यवनादीनां** च व्यञ्जकत्वमित्येषः

## मधुमती

**प्राधान्येनेति** । चन्दनच्यवनादीनां उपभोगस्नानसाधारणतया अधमत्वस्य असाधारण्येन तत्प्रतिपादकपदस्यापि प्राधान्यमिति भावः । प्राधान्येनेति वदता, **च्युतं** न तु च्यावितं, **मृष्टं** न तु मार्जितं, **निश्शेषतः**

1 कयाचन नायिकया स्वनायकानयनाय प्रेषितां, चौर्येण तमुपभुज्यैवागतां दूतीं प्रति इयमुक्तिः । बान्धवेति । मदीयमनोवेदनां अजानाना इति यावत् । अमरुशतकम् 105. 2 'गतासीत्येव प्राधान्येन व्यज्यते'–क. 3 'प्रतिषेधे विधिरूपो यथा'–ग. 4 मृष्टः—शुद्धः । अपसृतः इति यावत् ।

## सङ्केतः

अर्थशक्तिमूलः वाक्यप्रकाश्यः [1] ध्वनिः। तथा अत्रैव 'स इव त्वं, त्वमिव सोऽपि अधमः' इति उपमेयोपमालङ्कारः [2] व्यङ्ग्यः ॥ ४ ॥

## मधुमती

न तु किञ्चित्, दूरं न त्वीषत्, इत्यादिव्यञ्जनाद्वारा अपराण्यपि पदानि व्यञ्जकानीत्युक्तम् [3]। न चैवं स्नानसाधारण्येनानुपस्थितौ अधमपदप्राधान्यं न स्यादिति वाच्यम्। प्रथमं तत्साधारण्येनोपस्थितौ पश्चात् च्युतादिपदं अर्थान्तरमभिव्यञ्जयत्, अधमपदं तु साक्षादेव प्रकृतार्थव्यञ्जकं, इति उभयोः प्राधान्याप्राधान्याभ्यां व्यञ्जकत्वम्। अधमपदं विना च्युतादिपदानां अर्थान्तराव्यञ्जकत्वाच्च ॥

यत्तु नायकस्वरूपपर्यालोचनेन सहकारेण बोद्धुः विपरीतलक्षणया विपरीतोऽर्थः प्रतीतिपथ[4]मवतरति। तेन तदन्तिकं गताऽसीति लक्ष्यमेव [5]। रन्तुमिति च प्रयोजनांशो व्यज्यते इति, तन्न। अनुपपत्त्यप्रतिसन्धानेऽपि वक्त्रादिवैशिष्ट्यावगमात् उक्तप्रकारस्यापि अदुष्टत्वात् ॥ ४ ॥ [6]

---

1 'वाक्यप्रकाशः'–ग. अस्मिन् पाठे वाक्येन प्रकाशः यस्येति विग्रहः। 2 'पर्यायेण द्वयोस्तच्चेत् उपमेयोपमा मता' इति तल्लक्षणम्। 3 'व्यञ्जकादित्युक्तम्'–च. 4 'प्रतीतिपद'–च. 5 तथाच विशेषगवाक्यार्थानां वापीस्नाने बाधावतारात् स्नातुं गताऽसीत्यत्र विरोधिलक्षणया न गताऽसीति निषेधस्य, तस्यान्तिकं न गताऽसीत्यत्र गताऽसीति विधेश्च प्रतीत्या, तदन्तिकमेव रन्तुं गताऽसीति व्यञ्जकत्वं अनुपपन्नमिति भावः। 6 चित्रमीमांसायां तु उत्तमध्वनेः 'स्थिताः क्षणं पक्ष्मसु' इत्यादि कालिदासपद्यमुदाहृतम्। निर्दिष्टकाव्यप्रयोजनाकांक्षिणां हृदये इदमेव उत्तमपदमधिरोहतीति भाव्यम्।

## अताद्दशि गुणीभूत-
## व्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।[1]

अताद्दशि—वाच्यादनतिशायिनि । यथा—

ग्रामतरुणं तरुण्याः
　नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्याः भवति मुहुः
　नितरां मलिना मुखच्छाया ॥ ३ ॥[2]

---

### सङ्केतः

विधौ निषेधरूपस्तु यथा—'भ्रम धर्मिके'ति ।[3]

"भ्रम धार्मिक! विश्रब्धः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥"

कस्याश्चित् सङ्केतस्थानं धार्मिकसञ्चरणान्तरायदोषात् तदवलुप्यमान-पल्लवादिविच्छायीकरणाच्च त्रातुं इयमुक्तिः । अत्र धार्मिकेति—पुष्पाद्यर्थं युक्तं ते भ्रमणम् । विस्रब्धः इति—शङ्कायाः अभावात् । सः इति—यः त्वां सभयमकृत । तेनेति—यः प्राक् त्वया कर्णपरम्परया श्रुतः । अत्र 'भ्रम' इति विधौ च—"तत्र गहने सिंहोऽस्ति, त्वं च शुनोऽपि बिभेषि, तत् त्वया तत्र न गन्तव्यम्" इति निषेधः व्यज्यते । एवं अलङ्काररसादयश्च वाच्यात् भिन्नाः अग्रे व्याख्यास्यन्ते ॥ ४ ॥

---

1 व्यङ्ग्ये अताद्दशीत्यन्वयः । गुणीभूतव्यङ्ग्यमिति तु मध्यमस्यैव संज्ञान्तरमिति भावः । 2 स्वयमेव सङ्केतं कृत्वा पश्चादनवकाशात् अगता काचित्, तत्र गत्वा तत्रत्यामेव मञ्जरीं कांचन आदाय आगतं उपनायकं दृष्ट्वा, विषण्णा सती वर्तते । तस्याः वर्णनमिदम् । छाया—कान्तिः । रुद्रटकाव्यालङ्कारे—६–३९. 3 प्रायशः सङ्केतानुसारेण अयं श्लोकः पञ्चमोल्लासे इव अत्रापि पठितः स्यादिति भाति ।

**अत्र 'वञ्जुललतागृहे दत्तसङ्केता नागता' इति व्यङ्ग्यं गुणीभूतम् । तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ॥**[1]

---

## सङ्केतः

**तदपेक्षयेति** । नागता इति व्यङ्ग्यार्थस्य मलिना मुखच्छाया इत्येतयैव उक्त्या विषयीकृतत्वमिति वाच्यमेव चमत्कारीति भावः । तदिदमत्र **तत्त्वम्**—यथा मुखमालिन्यच्छायया कामिन्याः कामुकं प्रति रागोत्कर्षः प्रतिपाद्यते, न तथा व्यङ्ग्येन । प्रेम्णि हि खलु सङ्केतच्युतायाः मुखमालिन्य-भावात् । व्यङ्ग्यं तु अन्यथाऽपि स्यादिति ॥

## मधुमती

**तदपेक्षयेति** । व्यङ्ग्ये तु स्वीकृतहान्या अपकर्षः प्रजायते । स च [2] अनुचितः । अनौचित्यं च रसभङ्गहेतुरिति भावः । **वस्तुतस्तु**—**तरुणं** इत्यनेन आलम्बनं, **नववञ्जुले**त्यनेन उद्दीपनं, **मुहुः पश्यन्त्याः** इत्यौत्सुक्यं, **मलिने**त्यनुभावः इति एभिरेव अभिव्यक्तः विप्रलम्भः चमत्कुरुते । व्यङ्ग्यस्तु प्रतीयमानः न तथा चमत्कुरुते । तं विनैव चमत्कारोदयात् । तथाहि—'दत्तसङ्केताऽपि नागता' इत्यत्र स्वरूपमेवात्र व्यङ्ग्यम् । यदि च अनुरणनन्यायेन तदपि विप्रलम्भव्यञ्जकं, उभयथाऽपि गुणीभूतमेव । प्रथमे वस्तुध्वन्यपेक्षया रसध्वनौ चमत्कारातिशयात् । द्वितीये तन्निरपेक्ष्येण वाच्यादेव विभावादेः तद्व्यञ्जनोपपत्तेः । अवान्तरध्वनिस्तु विभावादिगत्यपेक्ष एव [3] रसव्यञ्जकः, अन्यथा रसानभिव्यक्तेः । तत्र प्रथमे असुन्दरत्वम्, द्वितीये तु अपराङ्गत्वमिति ॥

---

1 'चमत्कारकारित्वात्'–क. 2 'न च'–च. 3 'विभावादिसव्यपेक्ष एव'–च.

शब्दचित्रं वाच्यचित्रं
अव्यङ्ग्यं त्ववरं स्मृतम्[1] ॥५॥

चित्रं इति गुणालङ्कारयुक्तम्। अव्यङ्ग्यं इति स्फुटप्रतीयमानार्थ[2]रहितम्। अवरं—अधमम्। यथा—[3]

---

### सङ्केतः

यच्च काव्यं केवलवाच्यवाचकवैचित्र्यभाक् तत् चित्रम्, रसादि-व्यङ्ग्यार्थरहितत्वेन[4] काव्यानुकारित्वात् विस्मयकारिवृत्तादियोगाद्वा आलेख्य-सादृश्याद्वा कलामात्रादिना वा इत्याह—**शब्दचित्रमिति**। **अव्यङ्ग्यं** इत्यत्र नञः ईषदर्थत्वेन, ईषत्—अस्फुटतमं व्यङ्ग्यं यत्र तत्तथा। न तु सर्वथा निर्व्यङ्ग्यम्। यतः—'स नास्ति कश्चिद्विषयः यत्रान्ततो विभावादि-रूपतया रसपर्यवसायिता नास्ती'ति[5] उत्तरत्र वक्ष्यमाणत्वात्। **स्फुटप्रतीय-मानेति**। अत्र स्फुटं प्रतीयमानार्थेन रहितं इति विग्रहः, न तु स्फुटेन

### मधुमती

**गुणालङ्कारयुक्तमिति**। तदुभयनिबन्धनचमत्कारनिबन्धन-मित्यर्थः।[6] सम्बन्धमात्रस्य सकलसाधारण्यात्। गुणपदमपि भामहादि-

---

1 शब्दचित्रवाच्यचित्रभेदेन उभयविधमपि व्यङ्ग्यहीनं काव्यं अधमं स्मृत-मित्यन्वयः। 2 व्यङ्ग्यार्थः—प्रतीयमानार्थः। 'मानव्यङ्ग्यार्थरहितं यथा'–क. 3 तत्र शब्दचित्रं यथेत्यर्थः। 4 'रसादिव्यङ्ग्यार्थत्वेन'–ख. 5 काव्यप्रकाश-पञ्चमोल्लासस्थवाक्यस्य अर्थतोऽनुवादः। 6 'गुणालङ्कारयुक्तं—तदुभयनिबन्धन-चमत्कारं'–च. एवं चात्र चमत्कारस्यैव आकर्षकता, न तु रसस्य। तस्य च पार्ष्ठिकत्वादिति भावः।

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा[1]
मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः ।

---

## सङ्केतः

प्रतीयमानेन रहितं इति । एवं कृते हि अस्फुटव्यङ्ग्ययुक्तत्वप्रसङ्गः ।[2] ततश्च अस्फुटनामा मध्यमकाव्यभेदः स्यात् । अतिस्फुटत्वे तु अगूढाख्यो मध्यमकाव्यभेदः ।

तदिदमत्र तत्त्वम्—यत् अस्फुटनामव्यङ्ग्यसद्भावेऽपि अव्यङ्ग्यमेव काव्यं भण्यम् । यतः—'तन्नास्ति किमपि काव्यम् यत्रान्ततो विभावादिरूपतया रसपर्यवसायित्वं नास्ति' इति षष्ठोल्लासेऽपि भणिष्यमाणत्वात् इति ॥

स्वच्छन्देति । छातं—कृशम् । मूर्छन्—आगच्छन् मोहः—अज्ञानं येषां ते तथा । यदि वा मूर्छन्—बहूभवन् प्राणायामवशात्[3] मोहः—श्वासनिरोधात्मकः येषामित्यर्थः ॥

## मधुमती

सिद्धशब्दार्थगुणपरम् । अमीषां गुणस्य रसधर्मतया तन्निबन्धनचमत्कारित्वे चित्रत्वानुपपत्तेः इति स्मर्तव्यम् ॥

स्वच्छन्देति । अत्र दर्दुरः मण्डूक एव, न पर्वतः । गङ्गायाः तेन सह सम्बन्धाभावात् इति सम्प्रदायः । वस्तुतस्तु—दर्दुरः पर्वतविशेष एव ।

---

1 'राम्भश्छटा'–कां 2 'व्यङ्ग्यत्वप्रसङ्गः'–ख. 3 'घुडनिकावशात्'–ग.

भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम
द्रोहोद्रेकमहोर्मि[1]मेदुरमदा मन्दाकिनी मन्दताम् ॥[2]

वाच्यचित्रं यथा—

विनिर्गतं मानदमात्ममन्दिरात्
भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।

---

## सङ्केतः

विनिर्गतमिति । अमरावती भवति इत्यन्वयः । तथा द्रुतपातित-क्रियापेक्षया उपश्रुत्य इत्यत्र पूर्वकालता । अर्गलाशब्दः सामीप्यलक्षणया

## मधुमती

मन्दाकिनी तु न गङ्गा । किन्तु तद्भिन्ना ऋक्षवत्पर्वतविनिर्गता नद्येवात्र विवक्षिता । कूर्मपुराणसंवादात्,[3] "बध्नाति मे बन्धुरगात्रि! चक्षुः"[4] इत्यभिधाय, "मन्दाकिनी भाति नगोपकण्ठे"[5] इति रघुकाव्यप्रयोगाच्च । 'दैर्घ्या दरिद्रद्रुमा' इति पाठस्तु न युक्तः । अत्र प्रथमे अनुप्रासः शब्दालङ्कारः ॥

विनिर्गतं इत्यादौ तु उत्प्रेक्षालङ्कारः । यद्यपि तात्त्विकरूपेण-उत्प्रेक्षणं अनुचितम् । तथापि तदज्ञानदशायां उदाहरणमित्युक्तप्रायम् ।

---

1 'मदोर्मि'—क. 2 अयं भावः—तटप्रान्तजलप्रवेशनिःसरणैः सञ्जात-वेगातिशयानां सहजोद्गच्छन्निर्मलसलिलानां छटाभिः निरस्ताज्ञानगन्धमहर्षिसङ्घस्य सहर्षस्नानाह्निकविधानं कल्पयन्ती, प्रकाशमानबहुविधभेकपूरितकोटरान् आयतान् बृहतश्च बहून् तटद्रुमान् प्रवाहान्तःपातयन्ती, ऊर्ध्वप्रसृतामन्दतरङ्गपरम्पराभिः गर्वभूयिष्ठेव शशाज्यमाना मन्दाकिनी युष्माकं सर्वासमपि जडतां झटित्यपनयतात् इति । अत्र केवलमनुप्रासे शब्दालङ्कारे एव कवेस्तात्पर्यमिति । मन्दता—पापं इति केचित् । पापेनाप्रकृष्टत्वमित्यन्ये । 3 'मन्दाकिनी चित्रकूटा तामसी च पिशाचिका । ऋक्षवत्पादजा नद्यः ।' (कू. पु. १. ४६. ३३.) परं तु ३३ अध्याये गङ्गात्वमप्युक्तम् । 4 'दसः ककुद्मानिव चित्रकूटः' इति शेषः (रघु. १३-४७). 5 'मुक्तावली कण्ठगतेव भूमेः' इति शेषः (रघु. १३-४८.)

ससम्भ्रमेन्द्रद्रुतपातितार्गला
निमीलिताक्षीव भियाऽमरावती [1] ॥५॥

इति श्रीकाव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेष-
निर्णयो नाम प्रथमोल्लासः

---

## सङ्केतः

कवाटवृत्तिः । [2] अभिधया वा पिधायकत्व[3]मात्राभिधायी ॥५॥

सच्छब्दार्थशरीरस्य काऽलङ्कारव्यवस्थितिः ।
यावत् कल्याणमाणिक्यप्रबन्धो न निरीक्ष्यते ॥

इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
प्रथमोल्लासः

## मधुमती

अत्र स्थितोऽपि वीररसो न विवक्षितः [4] इति उत्प्रेक्षाप्राधान्यविवक्षया अर्थचित्रत्वमुक्तम् । एतच्च दशमोल्लासे वृत्तिकार एव वक्ष्यति ॥५॥

इति रत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां
मधुमत्यां प्रथमोल्लासः

---

1 निजगृहात् अकस्मात् बहिर्निर्गतं मानवातकं हयग्रीवनामानमसुरं श्रुतवता इन्द्रेण महाद्वारपिधानपूर्वकं ससंभ्रमं झटिति निक्षिप्तार्गला अमरावती भयेन निमीलिताक्षीव भातीति भावः। अत्र च केवलं उत्प्रेक्षारूपार्थालङ्कारे एव कवेस्तात्पर्यमिति । अमरावतीति स्त्रीत्वाध्यवसानमूलः। (मेण्ठकृते हयग्रीववधे।)
2 अर्गला–कीलकम् । न तु कपाटद्वयमेव इति केचित् । 'कपाटवृत्तिः'–ख.
3 'व्यवधायकत्व'–ख. 4 'रसभावादिविषयविवक्षाविरहे सति । अलङ्कारनिबन्धो यः स चित्रविषयो मतः' इति ध्वनिकृत् ।

अथ शब्दार्थस्वरूपनिर्णयो नाम

## द्वितीयः उल्लासः

—०—

शब्दार्थयोः स्वरूपविभागौ —

स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।
वाच्यादयः तदर्थाः स्युः तात्पर्यार्थोऽपि केषुचित्[1] ॥ ६ ॥

तयोः व्यञ्जकत्वं च —

सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।[2]

वाचकस्वरूपम् —

साक्षात् सङ्केतितं योऽर्थं अभिधत्ते स वाचकः[3] ॥ ७ ॥

सङ्केतितार्थविभागः —

सङ्केतितः चतुर्भेदः जात्यादिः जातिरेव वा ।[4]

सङ्केतितस्यैव मुख्यत्वं, अभिधास्वरूपं च —

स मुख्योऽर्थः तत्र मुख्यो व्यापारोऽस्याभिधोच्यते[5] ॥ ८ ॥

---

1 शब्दोऽत्र त्रिविधः शक्तलक्षकव्यञ्जकात्मना । तदर्थोऽपि त्रिधा शक्यलक्ष्यव्यङ्ग्यविभेदतः ॥ १० ॥ तुर्यः तात्पर्यविषयः वाक्यार्थ इति तार्किकाः । अन्ये शक्यं तमप्याहुः अपरे लक्ष्यमूचिरे ॥ ११ ॥ 2 वाच्यादयः त्रयोऽप्यर्थाः प्रायशो व्यञ्जका मताः । जयत्यधिवसन् गङ्गां देवस्तःपैरनीक्षितः ॥ १२ ॥ 3 साक्षात् —वाचकः । घनश्यामः क्रियाद्रामः श्रियं सुग्रीवराज्यदः ॥ १३ ॥ 4 जातिर्गुणः क्रिया द्रव्यमिति सङ्केतिता मताः । जातिरेवाथवा तद्वानेव वाऽपोह एव वा ॥ १४ ॥ 5 व्यापारः शक्यधीहेतुः मुख्यः शब्दगतोऽभिधा । रूढिर्योगो योगरूढिरिति सा त्रिविधा मता ॥ १५ ॥ रूढिस्त्वखण्डशक्त्यैव स्यादेकार्थाभिधायिता । पीनौ वधूकुचौ उच्चैः मुक्ताहारौ च राजतः ॥ १६ ॥ योगोऽवयवशक्त्यैव स्यादेकार्थाभिधायिता । रागिन्! कान्तापदाघातः तवाशोकस्य साम्प्रतम् ॥ १७ ॥ योगरूढिस्तु शक्तिभ्यां एकार्थप्रतिपादनम् । मृगाक्षी पद्मनाभस्य मन्दिरे वसतान्मम ॥ १८ ॥

लक्षणायाः स्वरूपम्—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽऽरोपिता क्रिया[1] ॥ ९ ॥

लक्षणायाः उपाधिकृतःषोढा विभागः, तत्र शुद्धे उपादानलक्षणा-लक्षणलक्षणे—

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥ १० ॥

शुद्धे गौण्यौ च सारोपलक्षणा–साध्यवसानलक्षणे—

सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।
विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥ ११ ॥

अनयोः गौण–शुद्धरूपेण द्वेधा विभागे निमित्तोपपादनेन निगमनम्—

भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा[2] ॥ १२ ॥

---

1 तात्पर्यविषयीभूतार्थान्वयानुपपत्तितः । शक्यभिन्नार्थधीहेतुः व्यापारो लक्षणोच्यते ॥ १९ ॥ द्विविधा सा रूढिपूर्वा फलपूर्वेति भेदतः । 2 स्याद्रूढिलक्षणा द्वेधा गौणी शुद्धेति भेदतः ॥ २० ॥ शक्यसादृश्यसम्बन्धरूपा गौणीति सा मता । लावण्यनिधिरेषैव प्रवीणा युववञ्चने ॥ २१ ॥ शुद्धा सा सादृश्यभिन्नशक्यसंबन्धरूपिणी । पुष्पं धनुः ज्या द्विरेफाः स्मरः तदपि दिग्जयी ॥ २२ ॥ जहती चाप्यजहती जहत्पूर्वाऽजहत्यपि । सारोपा साध्यवसितिः इत्यन्या पञ्चधा मता ॥ २३ ॥ स्याजहल्लक्षणा यत्र स्वार्थं त्यक्त्वाऽन्यवृत्तिता । साक्षी मुकुन्दकेलीनां यमुनायां अयं व्रजः ॥ २४ ॥ स्वसिद्धये पराक्षेपे त्वजहल्लक्षणोच्यते । वीक्ष्यानुद्रवतः कुन्तान् द्रवन्ति च्छत्रिणो रणात् ॥ २५ ॥ स्वार्थैकदेशे वृत्तौ तु जहत्यजहती मता । पुष्पितं वनमालोक्य पथिकाः पुञ्जिताधयः ॥ २६ ॥ सारोपा तत्र यत्रोक्तौ विषयी विषयस्तथा । सारोपा द्विविधा ज्ञेया गौणी शुद्धेति भेदतः ॥ २७ ॥ सादृश्यात्मकसम्बन्धरूपा सागौण्युदीर्यते । शुद्धा तदन्यसंबन्धरूपा सा तु निगद्यते ॥ २८ ॥ मुखेन्दुः नयनानन्दः तन्व्या विजयतेतराम् । निगीर्य विषयं यत्र विषय्येव निबध्यते ॥ २९ ॥ तत्र साध्यवसाना स्यात् गौणी शुद्धेति सा द्विधा । सरोजकाहलीरम्भासैकताकाशभूधरैः ॥ ३० ॥ शङ्खेन्दुतिमिरैः सृष्टा वल्ली कामिजनोत्सवः । एवं निरूपिता रूढिलक्षणाफललक्षणे ॥ ३१ ॥

(अव्यङ्ग्य)रूढिलक्षणा-(गूढागूढव्यङ्ग्य)फललक्षणाभेदेन पुनः लक्षणायाः व्यञ्जनकृतः त्रिधा विभागः—

व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।
तच्च गूढमगूढं वा तदेषा कथिता त्रिधा [1] ॥ १३ ॥

लाक्षणिकस्वरूपम्—

तद्भूः लाक्षणिकः । [2]

व्यञ्जनस्वरूपम्—

तत्र व्यापारो व्यञ्जनात्मकः । [3]

व्यञ्जनायाः लक्षणया अगतार्थत्वोपपादनपूर्वकं व्यञ्जनास्थापनम्—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ १४ ॥
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।
नाभिधा समयाभावात् हेत्वभावान्न लक्षणा ॥ १५ ॥
लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥ १६ ॥
एवमप्यनवस्था स्यात् या मूलक्षयकारिणी ।
प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १७ ॥
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।
विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते [4] ॥ १८ ॥

---

1 तत्राद्या व्यङ्ग्यरहिता सव्यङ्ग्या फललक्षणा । तच्च व्यङ्ग्यं क्वचित् गूढं अगूढं च क्वचित् भवेत् ॥ ३२ ॥ विकासिहासाः निर्यान्ति, चुम्बत्यैन्द्रीमिने स्त्रियः । तद्व्यङ्ग्या तथा गूढागूढव्यङ्ग्येति सा त्रिधा ॥ ३३ ॥ 2 भवेल्लाक्षणिकः शब्दः लक्षणायाः समाश्रयः । 3 फले लाक्षणिकस्यास्य व्यापारो व्यञ्जनोच्यते ॥ ३४ ॥ 4 यस्य प्रतीतिं – – स्खलद्गतिः । फलान्तरस्य तत्रापि कल्प्यत्वे त्वनवस्थितिः ॥ ३७ ॥ प्रयोजनविशिष्टस्य लक्षणा तु न युज्यते । ज्ञानस्य विषयादन्यदतो वाच्यं प्रयोजनम् ॥ ३८ ॥ तस्माल्लक्ष्ये प्रतीते तु पावनत्वादिधीर्मता । अभिधालक्षणाभिन्ना व्यञ्जनैवात्र कारणम् ॥ ३९ ॥

नानार्थस्थले अभिधातिरिक्त-तन्मूलव्यञ्जनास्थापनम्—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैः अवाच्यार्थधीकृद्व्यापृतिरञ्जनम् [1] ॥ १९ ॥

व्यञ्जकयोः शब्दार्थयोः स्वरूपम्—

तद्युक्तो व्यञ्जकः शब्दः यत् सोऽर्थान्तरयुक् तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः [2] ॥ २० ॥

— —

1 अनेकार्थस्य—अञ्जनम् ॥ ४० ॥ संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥ ४१ ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ ४२ ॥ संयोगस्तु स्ववाच्यैकनिष्ठार्थान्तरसङ्गतिः । पुष्णात्वधिकां भूतिं शङ्खचक्रधरो हरिः ॥ ४३ ॥ विप्रयोगस्तु संयोगाभाव एव निगद्यते । अशङ्खचक्रः स हरिः अपिनाको भवो भवान् ॥ ४४ ॥ साहचर्यं स्ववाच्यैकवस्तुना सहचारिता । वन्दारुजनमन्दारौ वन्देऽहं रामलक्ष्मणौ ॥ ४५ ॥ सहानवस्थितिः वध्यहन्तृत्वं च विरोधिता । दिनं निशां च संयुध्य रामोऽजैषीत् दशाननम् ॥ ४६ ॥ अर्थः प्रयोजनं, स्थाणुं संसारच्छित्तये नुमः । वित्तः प्रकरणं वक्तृश्रोतृबुद्धिस्थतां विदः ॥ ४७ ॥ जानाति सकलं देवः, प्रश्नोऽयं वितथोऽधुना । लिङ्गं स्ववाच्यान्तरेभ्यः व्यावृत्तो धर्म इष्यते ॥ ४८ ॥ जय्यो जगति कैनैषः कुपितो मकरध्वजः । सामानाधिकरण्यं यत् नियतार्थपदेन तत् ॥ ४९ ॥ शब्दान्तरस्य सांनिध्यं, देवोऽव्यात् त्रिपुराहितः । सामर्थ्यं स्यात् कारणत्वं, मत्तोऽयं मधुना पिकः ॥ ५० ॥ औचित्यन्वययोग्यत्वं, पातु वो दयितामुखम् । देशः पुरादिः, भात्यत्र नगरे परमेश्वरः ॥ ५१ ॥ कालो निशादिः, तामस्यां चित्रभानुर्विराजते । व्यक्तिः पुल्लिङ्गमुख्या स्यात्, मित्रं मित्रश्च राजतः ॥ ५२ ॥ उदात्तादिः स्वरः स स्यात्, इन्द्रशत्रुरिति श्रुतौ । वाच्यलक्ष्यविभिन्नार्थधीकृद्व्यापृतिरञ्जनम् ॥ ५३ ॥
2 व्यञ्जनेनार्थधीहेतुः शब्दो व्यञ्जक इष्यते । सामोदसुमनोजातजुष्टो जयति माधवः ॥ ५४ ॥ अत्रार्थप्रत्ययद्वारेणोपमादेस्तु या मतिः । तस्यां च शब्दशक्त्युत्था व्यञ्जनैवैव कारणम् ॥ ५५ ॥ यतोऽर्थधियमुत्पाद्य शब्दोऽर्थान्तरबुद्धिकृत् । ततोऽर्थो व्यञ्जकः शब्दसहकारितया मतः ॥ ५६ ॥

## अथ शब्दार्थस्वरूपनिर्णयो नाम
## द्वितीयः उल्लासः

—o—

क्रमेण शब्दार्थयोः स्वरूपमाह—[1]

**स्याद्वाचको लाक्षणिकः**
**शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

अत्रेति काव्ये[2] । एषां स्वरूपं वक्ष्यते[3] ॥

---

### मधुमती

ननु विभागः विशेषलक्षणं च व्यञ्जनां विना[4] नोपपद्यते । न च वाचकलाक्षणिकाभ्यां अन्यः शब्दो वा, वाच्यलक्ष्याभ्यामन्योऽर्थो वा अस्तीत्यत आह—**क्रमेणेति** ॥

यत्तु अत्र पितृचरणैः काव्यदर्पणे—सर्वशून्यताविज्ञानालयशब्दार्थ-तादात्म्यवादिमतावतारः, तन्निराकरणं च कृतं, न तत् संभवदुक्तिकम् । कविप्रौढोक्तिनिष्पन्नादप्यर्थात् चमत्कारोदयेन, तत्र सदसद्विवेचनस्य अप्रकृत-त्वात् । अत एव "तद्वानपोहो वा" इत्यभिधाय, "प्रकृतानुपयोगात्" इत्येवानुपदं वृत्तिकारः वक्ष्यति ॥

---

1 क्रमेण—'तददोषौ शब्दार्थौ' इति लक्षणवाक्योक्तक्रमेणेत्यर्थः । 'स्वरूपं वक्ष्यते' इत्यग्रिमग्रन्थपर्यालोचनया अत्र स्वरूपपदं विभागपरमिति केचित् । केचित्तु विभागपूर्वकमिति शेषः इत्याहुः । 2 शास्त्रे तु शक्तलक्षकभेदेन द्वैविध्यमेव । यदाह भोजः—'तात्पर्यमेव वचसि ध्वनिरेव काव्ये' इति । 3 'साक्षात् सङ्केतितं' इत्यादिनेति शेषः । 4 व्यञ्जनायाः साधनं विनेत्यर्थः । तदेवोपपादयति—नचेत्यादिना ।

## मधुमती

**यद्वा**—तयोरलीकत्वे स्वतस्सम्भवीत्यादिविभागविरोधः। ज्ञानाकारत्वाभ्युपगमे तु "न केवलं फणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः" इति अर्थव्यञ्जकस्थलीयबहिःपदविरोधः। बहिःपदस्य ज्ञानभिन्ने एव शक्तेः। अभेदे तु "शब्दार्थौ" इति द्विवचनानुपपत्तिरिति अप्रकृतत्वमेवास्य [1] द्रष्टव्यम् ॥

स्वरूपं निर्धारयन्नेव विभजते—**स्याद्वाचक इति**। अत्र विभागादेव त्रित्वे लब्धे '**त्रिधा**' इति न्यूनाधिकसंख्याव्यवच्छेदाय। व्यञ्जनास्थापनेन न्यूनत्वस्य, गौण्युपचारयोः लक्षणान्तर्भावेण आधिक्यस्य च निरासात् इति तात्पर्यम्। अत्र लक्षणायाः शक्त्यधीनतया, व्यञ्जनायाश्च तदुभयमूलत्वेन प्रकृतक्रमेणोद्देशः इत्यवधेयम् ॥

यद्यपि वाचकस्यैव लाक्षणिकत्वात् व्यञ्जकत्वाच्च विभागोऽयं अनुपपन्नः। तथापि वृत्तिविभागद्वारा शब्दविभागे तात्पर्यम् ॥

नन्वत्र व्यञ्जनायाः नामापि नास्तीत्यत आह—**व्यञ्जकः इति**। तथाच व्यञ्जकशब्दस्यापि प्रामाणिकत्वात् न विभागविशेषलक्षणयोः अनुपपत्तिरिति भावः। **यद्वा**—योऽन्यत्र वाचको लाक्षणिकश्च स एवात्र—काव्ये व्यञ्जकः इति त्रिधा शब्दः स्यादित्यर्थः ॥

विभक्ते तल्लक्षणं वक्तुमुचितम्। तदुलङ्घ्य कथं अर्थस्वरूपमुच्यते इत्यत आह—**एषामिति**। **स्वरूपम्**—लक्षणम्। तथाच शिष्यजिज्ञासाऽनुरोधात् नेदानीमेव तदुच्यते इत्यर्थः।

---

1 'प्रकृतत्वमेवास्य'–क.

## वाच्यादयः तदर्थाः स्युः

वाच्यादयः—वाच्यलक्ष्यव्यङ्ग्याः ।

## तात्पर्यार्थोऽपि केषुचित्[1] ॥ ६ ॥

---

### सङ्केतः

विषयभेदात् शब्दभेदः, न तु स्वाभाविकः[2] इत्याह—**वाच्यादयः** इति ॥

**केष्विति ।** अभिहितान्वयवादिषु भट्टेषु ॥

### मधुमती

अर्थान् विभजते—**वाच्यादयः इति ।** ननु अर्थानां वाच्यलक्ष्य-व्यङ्ग्यात्मकत्वात्, वाच्यस्य च वाच्यादित्वाभावात् 'वाच्यादी' इति स्यात्,[3] न तु वाच्यादयः इति, इति चेन्न । वाच्याः आदयः येषां लक्ष्यव्यङ्ग्यानां ते तथा, इति व्यक्तिभेदमादायोक्तेः, विरोधाभावात् । तद्गुणबहुव्रीहिस्वीकाराच्च न वाच्यानन्वयः ॥[4]

न्यूनत्वमाशंक्याह—**तात्पर्यार्थोऽपीति ।** तथा च असार्वत्रिकत्वात् न तत्समशीर्षकतया विभागः कृतः इति भावः । कोऽसौ इत्यत आह—

---

1 अभिहितान्वयवादिनां मतेषु । शब्दः तात्पर्याख्यया वृत्त्यैव वाक्यार्थरूपं संसर्गं बोधयतीति तस्य तात्पर्यार्थत्वमेव युक्तमिति भावः । 2 वाच्यादिरूपार्थभेद-प्रयुक्त एव शब्दे वाचकादिभेदव्यवहारः, न तु शब्दस्वरूपप्रयुक्तः इत्यर्थः । 3 वाच्यः आदिः ययोस्तौ इत्येव विग्रहस्य कार्यत्वादिति भावः । 4 यो बहुव्रीहिः स्वार्थस्या-न्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः स तद्गुणसंविज्ञानः । यथा—भूवादयो धातवः, चैत्रादीन् भोजय, लम्बकर्णमानय इत्यादौ । तदसमर्थस्तु अतद्गुणसंविज्ञानः । यथा—दृष्टसागरमानय, चित्रगुमानय इत्यादौ ।

आकाङ्क्षासन्निधियोग्यतावशात् वक्ष्यमाणस्वरूपाणां
पदार्थानां परस्परसमन्वये [1] तात्पर्यार्थो विशेषवपुः [2]

---

## सङ्केतः

बोद्धुः संबन्धिषु जिज्ञासा **आकांक्षा** [3]। आकांक्षितस्यानन्तर्यं **सन्निधिः** [4]। संबन्धार्हत्वं **योग्यता** [5]। **वक्ष्यमाणस्वरूपाणामिति**। 'जात्यादिर्जातिरेव वा' इत्यत्र। अभिधाऽनन्तरं अन्वयप्रतिपत्तिनिमित्तं तात्पर्यशक्तिरप्यस्ति, ततः तद्विषयः तात्पर्यलक्षणोऽर्थोऽपि समस्ति, तौ च वाक्य-

## मधुमती

**अकांक्षेत्यादि**। इह द्विविधः आप्ताभिप्रायः—पदे वाक्ये च। 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याद्यः। 'मिथः साकांक्षाऽसन्नयोग्यप्रतियोगिकसंसर्गपरमिदं वाक्यं' इत्येवंरूपः द्वितीयः। तत्र प्रथमः पदशक्तिः अभिधा। द्वितीयो वाक्यशक्तिरेव तात्पर्यमित्युच्यते। तथाच अभिधालभ्यः **वाच्यार्थः**, तात्पर्यलभ्यस्तु **तात्पर्यार्थः** इति। **यद्यपि** पदशक्तेः वाक्यशक्तिर्नाधिका। तथापि आकांक्षादिसहकारिणी पदशक्तिरेव तथा व्यवह्रियते इति बोध्यम्। **विशेषवपुः**—घटानयनादिरूपः।

---

1 जातिगुणक्रियायदृच्छारूपाणां पदार्थानां परस्परसम्बन्धे बुभुत्सिते सतीत्यर्थः। 'पदार्थानां समन्वये'–क. 2 तात्पर्याख्यवृत्तिप्रतिपाद्यः वाच्याद्यर्थविलक्षणसंसर्गतारूपः। 3 तस्याः शब्दार्थापर्यवसानोत्थापितायाः शब्दार्थधर्मत्वेनोपचारः। 4 स च सम्भवे शब्दव्यपेक्षकः, अन्यथा तु बुद्धिव्यपेक्षकः। 5 बाधप्रतीत्यभावो योग्यता।

अपदार्थोऽपि वाक्यार्थः[1] समुल्लसति[2] इति अभि-
हितान्वयवादिनां[3] मतम् ।

वाच्य एव वाक्यार्थः इति अन्विताभिधानवादिनः ॥[4]

---

## सङ्केतः

विषयावेव इत्याह—अपदार्थोऽपीति । आकांक्षादिवशात् अन्योन्यमन्विताः पदार्थाः तात्पर्यान्यनामधेयं वाक्यार्थं प्रतिपादयन्ति । प्राक् सामान्यार्थ-प्रतीतिः, ततोऽन्वये सति पदार्थेभ्यो विशिष्टार्थप्रतीतिः । यदुक्तम्—

"पदानि स्वं स्वमर्थमुक्त्वा निवृत्तव्यापाराणि ।
अथेदानीं अर्थोऽवगतः अर्थान्तरं बोधयति ॥" इति ।

प्राभाकरपक्षे तु—आकांक्षादिवशात् मिथः सामान्यतया अन्वितानि पदान्येव प्रधानगुणत्वेन मिथोऽनुगतपदसमूहरूपं[5] विशेषरूपतया वाक्यार्थं वदन्तीति वाच्य एव वाक्यार्थः, पदान्येव वाक्यम्, पदार्थ एव तदर्थः, न तु पदार्थेभ्यो वाक्यार्थः इति ॥ ६ ॥

## मधुमती

अभिहितान्वयवादिनामिति । अत्र बहुवचनेन गौरवं प्रतिपादितम् ।

असार्वत्रिकं मतं दर्शयति—वाच्य एवेति । अन्विताभिधान-वादिनः मतं इत्यनुषङ्गेनान्वयः । अत्र च एकवचनेन पूर्वमतापेक्षया लाघवं अभिव्यनक्ति । तदेतत् पञ्चमोल्लासे स्फुटीभविष्यति ॥ ६ ॥

---

1 प्रत्येकपदवृत्त्यविषयोऽपि विशिष्टपदसमूहगम्यः । 2 अनुभवविषयो भवति । 3 नैयायिकादीनाम् । 4 प्राभाकराः । वाक्यार्थश्च लक्ष्य एवेति भाट्टाः वेदान्तिनश्च । तत्र अभिहितानां—स्वस्ववृत्त्या पदैरुपस्थापितानां अर्थानामन्वयः—अभिहितान्वयः । पदानि अन्वितान्येव भूत्वा पश्चात् विशिष्टार्थं कथयन्तीति अन्विताभिधानम् । 5 'रूप'-ख.

**सर्वेषां प्रायशो[1]ऽर्थानां**
**व्यञ्जकत्वमपीष्यते ।**

---

## सङ्केतः

**सर्वेषां प्रायशः इति ।** न केवलं प्रत्येयत्वं, किन्तु व्यञ्जकत्वमपीत्यपि-शब्दार्थः । वक्तृबोद्धव्यादिवैशिष्ट्यात् अर्थानां व्यञ्जकत्वम् । तत्र वक्तृ-वैशिष्ट्याद्यथा—**माए इति ।** अत्र तस्याः असाध्वीत्वेऽवगते व्यङ्ग्य-प्रतीतिः ॥

## मधुमती

अर्थव्यञ्जकत्वमाह—**सर्वेषामिति ।** **यद्यपि** उद्देशक्रमानुरोधात् शब्दव्यञ्जकत्वं प्रथमं अभिधातुमुचितम् । तथापि शब्दव्यञ्जकत्वं स्फोट-व्यञ्जकवर्णेष्वेव दृष्टं, अर्थव्यञ्जकता तु न दृष्टाऽस्तीति असांदृष्टिकत्वशङ्कामात्र-मपनेतुं इदमुक्तम् । न तु प्राधान्येन अर्थव्यञ्जकोपदर्शनम् । अत एव अग्रे शब्दव्यञ्जकत्वमुदाहृत्य 'अर्थव्यञ्जकतोच्यते' इति सूत्रकारः वक्ष्यति । **व्यञ्जकत्वमपि** इत्यत्र अपिना व्यञ्जकतादशायामपि तदर्थानां वाच्यत्वाद्य-प्रच्यवः इत्यभिधीयते । **केचित्तु** 'अपिशब्दो भिन्नक्रमः, अर्थानामपीति । तथाच अपिना शब्दव्यञ्जकत्वं समुच्चीयते' इत्याहुः । **अत्रेति ।** अयं चार्थः तात्पर्यव्यङ्ग्यः ॥

---

1 वक्तृबोद्धव्यादिवैशिष्ट्याज्ञाने अर्थान्तरव्यञ्जनायाः असम्भवात् प्रायशः इत्युक्तम् ।

तत्र वाच्यस्य यथा[1]—

माए घरोवअरणं
　　अज्ज हु णत्थित्ति साहिअं तुमए ।
ता भण किं करणिज्जं
　　एमेअ ण वासरो ठाइ ॥ ६ ॥

[मातः गृहोपकरणं अद्य खलु नास्तीति साधितं त्वया ।
तद्भण किं करणीयं एवमेव न वासरः स्थायी[2] ॥ ६ ॥]

अत्र[3] स्वैरविहारार्थिनीति व्यज्यते ।

---

## मधुमती

नचैवं—'वाच्यस्य यथा' इत्यादिविरोधः । पदार्थसंसर्गरूपतात्पर्यार्थस्य व्यञ्जकत्वे सम्बन्धिनः पदार्थस्यापि व्यञ्जकत्वात् । सम्बन्धिनः अभावे तत्सम्बन्धाभावात् । अत एव पदार्थव्यञ्जना प्राधान्येनोक्ता । अन्वयाज्ञानेऽपि पदार्थज्ञानात्, तद्व्यञ्जकोदाहरणेऽपि तात्पर्यार्थव्यञ्जकत्वे उदाहरणालाभेन 'सर्वेषां प्रायशः' इत्यादिविरोधापत्तेः । प्राधान्येन तु पदार्थानां व्यञ्जकत्वं काव्यदर्पणे अनुसन्धेयम् ॥

---

1 वाच्यस्य व्यञ्जकता यथेत्यर्थः । एवमग्रेऽपि । 2 उपनायकसङ्गमाय उपकरणानयनव्याजेन बहिर्गन्तुमुत्सुकायाः उक्तिरियम् । तैलेन्धनाधिकं—गृहोपकरणम् । वासरः—दिवसः । रात्रेः संनिहितत्वात् एवमुक्तिः । अत्र मातः इति वृद्धता, गृहेति अवश्यसम्पादनीयत्वम्, अद्येति अपलापाशक्यता, त्वयेति स्वेच्छातिरोधानम्, भणेति अज्ञानाभिनयः, एवमिति विलम्बासह्यता च व्यज्यते । (गाथासप्तशती 389) । 3 गृहोपकरणसम्पादनव्याजेनेति शेषः ।

लक्ष्यस्य यथा—

साहेन्ती सहि! सुहअं
खणे खणे दुम्मिआसि मज्झकए।
सब्भावणेहकरणिज्ज-
सरिसअं दाव विरइअं तुमए॥ ७॥

[साधयन्ती[1] सखि! सुभगं क्षणेक्षणे दूनाऽसि[2] मत्कृते।
सद्भावस्नेहकरणीयसदृशं तावत् विरचितं त्वया[3]॥ ७॥

अत्र मत्प्रियं[4] रमयन्त्या त्वया शत्रुत्वमाचरितं इति लक्ष्यम्। तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्[5]॥

---

## सङ्केतः

बोद्धव्यविशेषात् यथा—साहेन्तीति। साधयन्ती—कथयन्ती प्रतिपादयन्ती वा। अत्र विपरीतलक्षणया वाक्यस्य शत्रुत्वं लक्ष्योऽर्थः। तन्मूलं[6] सापराधत्वप्रकाशनं व्यङ्ग्यम्। तेनाप्यधमेन किं कार्यमित्यर्थः।

## मधुमती

**साहन्तीति। मत्कृते सुभगं शासती** इति सम्बन्धः। **अत्रेति।** अयमप्यर्थः पूर्वन्यायेन[7] तात्पर्यार्थव्यङ्ग्य एव।

---

1 'साहन्ती'ति पाठे शासतीति च्छाया. 2 'दूयमानासि'–क. 3 नायिकया स्वप्रियानुनयार्थं प्रेषिता काचित् दूती तं प्रियं स्वयमेवोपभुज्य आगच्छति। तां च दृष्ट्वा क्रोधेन नायिका एवमाह। तं सुन्दरं मत्प्रियं मया सह संघटयितुमेव प्रवृत्ता त्वं हन्त! अतीव विश्रान्ताऽसीति। साधयन्ती—अनुनयन्ती। (गा. स. 640)। 4 'मम प्रियं'–क. 5 कामुक्याः कामुकस्य च सापराधत्वमेषा प्रकाशयतीति सहृदयैः व्यञ्जनया गम्यते इत्यर्थः. 6 'तन्मूलं हि'–ख. 7 'मातः गृहोपकरणं' इत्यत्रोक्तन्यायेनेत्यर्थः।

व्यङ्ग्यस्य यथा —

उअ णिच्चलणिप्पन्दा
भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअण-
परिट्ठिआ सङ्खसुत्तिव्व ॥ ८ ॥

[पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता [1] शङ्खशुक्तिरिव [2] ॥ ८ ॥

---

### सङ्केतः

प्रयोजनं तु अत्यन्तानुपकारित्वादि लाक्षणिकवाक्यमूलमिति नार्थप्रकाश्यम् । **निश्चला** इति बहिरङ्गव्यापारस्य निवृत्तिः । **निस्पन्दा** इति अन्तरङ्गव्यापारस्य । [3] **बिसिनीपत्रे राजते बलाका** इति वचनात् विपरीतरतादिकं व्यङ्ग्यं [4] स्वयमूह्यम् । एतच्च तृतीयोल्लासे वक्ष्यते ॥

### मधुमती

ननु—यत्र वाक्यार्थाबाधेऽपि वक्त्रादिवैशिष्ट्यात् व्यङ्ग्यार्थप्रकाशः तत्र असाङ्कर्येऽपि, यत्र वाक्यार्थो बाधितः तत्र 'निःशेषच्युते'त्यादौ वाच्यलक्ष्ययोः व्यञ्जकत्वे साङ्कर्यम् । वाक्यार्थबाधस्य उभयत्रापि तुल्यत्वात् इति चेन्न । लक्ष्यव्यञ्जकत्वस्थले पदार्थस्यापि बाधात् । अत एव 'लक्षणामूलव्यङ्ग्ये अविवक्षितवाच्यत्वं, अभिधामूले तु विवक्षितवाच्यत्वं' इति चतुर्थे वक्ष्यते ॥

उअ णिच्चलेति । शङ्खशुक्तिः—मुक्ताशुक्तिः । अत्रेति ।

---

1 'भाजनोपरि स्थिता'–क. 'भाजनप्रतिष्ठिता'–ख. 2 सङ्केतार्थिनं, कृतसङ्केतस्थानं प्रत्यनागतं वा कामुकं प्रति कस्याश्चित् वचनमिदम् । शङ्खशुक्तिः—मुक्तास्फोटः । उत्पतनादिरूपशारीरक्रिया चलनं, अवयवमात्रचालनं स्पन्दनमिति विवेकः । (गा. स. 1–4) । 3 'इति अन्तरङ्गस्य'–ग. 4 'वचनात् व्यङ्ग्यं'–ख.

अत्र निष्पन्दत्वेनाऽऽश्वस्तत्वं, तेन च[1] जनरहितत्वं, अतः सङ्केतस्थानमेतदिति कयाचित्[2] कश्चित् प्रत्युच्यते। अथवा—मिथ्या वदसि न त्वमत्रागतो[3] भूः इति व्यज्यते ॥

वाचकादीनां क्रमेण स्वरूपमाह[4]—

साक्षात् सङ्केतितं योऽर्थं
अभिधत्ते[5] स वाचकः ॥७॥

---

मधुमती

पूर्वत्र सम्भोगः, अत्र तु विप्रलम्भो व्यङ्ग्यः।[6] वचनस्य स्फुटत्वात्। व्यङ्ग्यान्तरं तु समानमिति पक्षयोः भेदः ॥

प्राप्तावसरमाह—वाचकादीनामिति। स्वरूपं—लक्षणम्। साक्षादिति। अभिधत्ते—प्रतिपादयतीत्यर्थः। न त्वभिधया प्रतिपादयतीति। अभिधायाः वाचकशब्दव्यापारत्वेन अन्योन्याश्रयात्। तावत एव सम्यक्त्वे शेष[7]वैयर्थ्याच्च। साक्षात्त्वं च अर्थान्तरप्रतिपत्ति[8]मद्वारीकृत्य प्रत्यायकत्वम्। अस्माच्छब्दादयमर्थो बोद्धव्यः इत्याकारकश्च आप्ताभिप्रायः

---

1 'च'—इति नास्ति–क. 2 'कया च'–क. 3 'वदसि त्वं तत्र नागतो'–क. 4 स्वं रूप्यते—लक्ष्यते इतरव्यावृत्त्या ज्ञायते अनेनेति स्वरूपं लक्षणम्। 5 तथाच अर्थान्तरप्रतीतिमद्वारीकृत्य गृहीतसङ्केतमर्थं यः शब्दः प्रतिपादयतीत्यर्थः। 6 उदाहृतवाक्यस्य सम्भोगशृङ्गारपोषकत्वमितिमते पूर्वं, विप्रलम्भशृङ्गारपोषकत्वमितिमते अथवेत्यादि इति भावः। अनेन सम्भोगाद्विप्रलम्भस्यैव माधुर्यं सूचितमिति केचित्। प्रथमोपात्तस्य पूर्वपक्षत्वाभिप्रायेण सङ्गतत्वमिव, सिद्धान्ततया स्वमतत्वेन प्राधान्येन विवक्षितत्वमपि सङ्गच्छते इति भाव्यम्। 7 'सम्यग्विशेष–ग. 8 'प्रतीति'–च.

इह [1] अगृहीतसङ्केतस्य शब्दस्य अर्थप्रतीतेरभावात् [2]
सङ्केतसहाय एव शब्दः अर्थविशेषं प्रतिपादयतीति,

---

## मधुमती

इह सङ्केतः, न तु ईश्वराभिप्रायमात्रम्, स्वाभाविकः सम्बन्ध एव वा, यदृच्छाशब्दाव्याप्तेः [3]। 'सङ्केतितश्चतुर्भेदः' इत्यनेन तस्यापि संग्राह्यत्व-कथनात्। एवं च सङ्केतितार्थप्रतिपादकत्वं लाक्षणिकशब्दस्यापीत्यत उक्तं—साक्षादिति। तावन्मात्रं च घटादिपदे सम्बन्धितया आकाशस्मारकेऽप्यस्तीत्यत उक्तं [4]—सङ्केतितमिति। शब्दत्वेन च विशेषणात् न चेष्टायामतिव्याप्तिः॥

**पितृचरणास्तु**—'तद्भूर्लाक्षणिकः' इत्यत्र यथा [5] लक्षणाश्रयत्वं लाक्षणिकत्वं, तथा अत्रापि अभिधाश्रयत्वमेव **वाचकत्वम्**। न च अन्योन्याश्रयः। सङ्केतभिन्नायां अभिधायां मानाभावेन तस्याः तद्व्यापारत्वासिद्धेः। न च आकरविरोधः। तत्कार्यकारित्वपुरस्कारेण सहकारिणि व्यापारपदप्रयोगात्। अत एव **वृत्तिकारः** सङ्केतसहायत्वमाह शब्दस्य। तावन्मात्रं च लाक्षणिकत्वदशायामप्यस्तीति प्रकृतक्रमेणाभिधानम्। तदर्थश्च [6] शब्द [7] शक्त्या साक्षात्प्रतिपादकत्वमिति। पदात् शक्त्या शक्योपस्थितिः, तस्माच्च लक्ष्योपस्थितिः इति परम्परया तत्त्वं लाक्षणिकस्यापीत्युक्तं—**साक्षात्**

---

1 इह—लोकव्यवहारे. 2 'शब्दादर्थविशेषप्रतिपत्तेरभावात्'–क. 3 'शब्दव्याप्तेः'–च. 4 'तावन्मात्र'मित्यादि नास्ति–ज. 5 'यथा' इति नास्ति–च. 6 साक्षादित्यादिकारिकार्थश्चेत्यर्थः। 7 'शब्द' इति नास्ति–च.

यस्य यत्र[1] अव्यवधानेन सङ्केतः गृह्यते सः तस्य[2] वाचकः ॥ ७॥

सङ्केतितश्चतुर्भेदः
जात्यादिः जातिरेव वा[3] ।

---

सङ्केतः

यस्य – शब्दस्य । यत्र—जात्यादौ ॥ ७ ॥

मधुमती

इति पदं इत्याहुः[4] । वयं तु—यस्य यत्र अव्यवधानेन इति वृत्ति-दर्शनात्, साक्षात् सङ्केतितो योऽर्थः तत्प्रतिपादकत्वं लक्षणम् । सङ्केतश्च आप्ताभिप्रायः । लक्षणा तु[5] परम्परासङ्केतः । शक्यं बोधयित्वा लक्ष्यं बोधयतु इति आप्ताभिप्रायेण[6] लाक्षणिकपदप्रयोगात्[7] । व्यञ्जनायां अभिप्रायनियमो नास्त्येव, यत्राप्यस्ति तत्र परम्परयैवेति ब्रूमः ॥ ७ ॥

ननु सङ्केतितार्थाज्ञाने[8] तत्प्रतिपादकत्वेन लक्षणज्ञानमसम्भवि[9] इत्यत आह—**सङ्केतितः इति** । ननु आनयनादिव्यवहारः शक्तिग्राहकः, स च व्यक्तावेवेति तत्रैव शक्तिरुचिता, न तु जात्यादावित्यत आह—

---

1 यस्य शब्दस्य यत्रार्थे इत्यर्थः । 2 स शब्दः तस्यार्थस्येत्यर्थः । 3 सङ्केत-ग्रहविषयोऽर्थः जातिगुणक्रियायदृच्छाभेदात् चतुर्विधः, मीमांसकरीत्या जातिरित्येकविध एव वा इत्यर्थः । 4 'इत्याहुः' इति नास्ति–च. 5 'लक्षणायां तु'–च. 6 'इत्यभिप्रायेण'–ज. 7 'प्रयोगः'–ज. 8 'र्थज्ञाने'–च. 9 'ज्ञानं संभवि'–ज.

यद्यपि अर्थक्रियाकारितया[1] प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव। तथापि आनन्त्यात् व्यभिचाराच्च तत्र[2] सङ्केतः[3] कर्तुं न शक्यते[4] इति, 'गौः शुक्लः चलः

---

### सङ्केतः

**आनन्त्यादिति।** यद्येकस्मिन् गोपिण्डे सङ्केतः क्रियते तदा अन्येषु कर्तुं न शक्यते। **व्यभिचाराच्चेति।** यो हि पिण्डः सङ्केतविषयः क्रियते[5] सः व्यवहारकाले व्यभिचरति, बाल्यादिभेदात्। **गौः शुक्लः इति।** गोत्वशुक्लत्वचलत्वविशिष्टे एव गोपिण्डे सङ्केतात् गौः शुक्लः चलः

### मधुमती

**यद्यपीति।** यदि—यत्र शक्तिग्रहः तत्र शाब्दधीः, तदा अनन्तासु शक्तिग्रहाभावात् अगृहीतशक्तिके शाब्दधीः न स्यात्। अथ अन्यत्र शक्तिग्रहः अन्यत्र शाब्दज्ञानं, तदा शक्तिधीः शाब्दज्ञाने व्यभिचारिणी स्यादित्यर्थः। दूषणान्तरमाह—**गौः शुक्लः इति।** तथाच गोशुक्लादि-पदानां पर्यायतापत्तिरिति भावः॥

---

1 जलाहरणादिरूपप्रयोजनविशिष्टक्रियाश्रयतयेत्यर्थः। 2 'व्यभिचारात् तत्र'–क. तत्र—व्यक्तौ। 3 सङ्केतग्रहः इत्यर्थः। 4 'न युज्यते'–क. 5 'क्रियते' इति नास्ति–ख.

डित्थः' इत्यादीनां शब्दानां विषयविभागः न प्राप्नोतीति च,[1] तदुपाधावेव सङ्केतः[2] ॥

उपाधिश्च द्विविधः—वस्तुधर्मः[3] वक्तृयदृच्छासन्निवेशितश्च[4]। वस्तुधर्मोऽपि द्विविधः—सिद्धः[5]

---

## सङ्केतः

इत्यादीनां विषयो नास्ति, ज्ञातार्थानां[6] अप्रयोज्यत्वात्। तदुपाधौ इति। व्यक्तिविशेषणे ॥

## मधुमती

**वस्तुधर्मः इति।** स्वाभाविकवस्तुधर्मः इत्यर्थः। **वक्त्रिति।** वक्तृयदस्थोपाधिकः इत्यर्थः। **वस्तुधर्मोऽपीति।** अनेन जातिगुणयोः

---

1 'च' इति नास्ति–क. 2 यद्यपि प्रयोजनावाप्त्युपयोगिनयनानयनादिव्यवहारनिर्वाहकतया प्रवृत्तिनिमित्तविषयभूता व्यक्तिरेव पदार्थः। तथापि यावद्वस्तु संकेतग्रहस्य अशक्यत्वात्, प्रागभावविकारेष्वपितच्छब्देनैव व्यवहारदर्शनाच्च, व्यक्तौ संकेतः कर्तुं न शक्यते। तथा शुक्ले जले डित्थनाम्नि गवि च प्रयुक्तानां गौरादिशब्दानां एकव्यक्तिवाचकत्वे पर्यायताऽऽपत्त्या च शब्दानां प्रवृत्तिनिमित्ते एव शक्तिः न व्यक्तौ। न च जात्यादिविशिष्टे शक्तिः, आक्षेपात् लक्षणया वा तल्लाभादिति भावः। अयं च पक्षः वैयाकरणमीमांसकयोः। द्वयेऽपि शक्तिरिति नैयायिकाः। अन्यापोह एव शक्तिरिति बौद्धाः इति ज्ञेयम्। 3 उप–समीपवर्तिनि स्वीयं धर्मं आदधाति—संक्रामयतीत्युपाधिः। वस्तुनि समवेतः जातिगुणक्रियारूपः स्वाभाविको धर्मः इत्यर्थः। अत्र 'द्विविधः' इति नास्ति–क. 4 वस्तुनि विद्यमानत्वाविद्यमानत्वाद्यविवेकेन वक्त्रा स्वेच्छया सङ्केतितनामरूपादिविशिष्टः इत्यर्थः। या ऋच्छा–इच्छा—यदृच्छेति निपातः। 5 'वस्तुधर्मोऽपि सिद्धः'–क. 6 'ज्ञानार्थानां'–ख.

**साध्यश्च । सिद्धोऽपि द्विविधः—पदार्थस्य [1] प्राणप्रदः, [2] विशेषाधानहेतुश्च [3] । तत्र [4] आद्यः जातिः ॥**

---

## सङ्केतः

**पदार्थस्य प्राणप्रदः इति ।** न हि कश्चित् पदार्थः जातिसंबन्धमन्तरेण स्वरूपं लभते ॥

## मधुमती

क्रियातो भेदः [5] दर्शितः । साध्यत्वं च आख्यातार्थान्वितत्वम् । यदाहुः—

"कालानुपाति यद्रूपं धात्वर्थस्य क्रियेति यत् ।
सर्वतो यत् परिच्छिन्नं तद्भाव इति कथ्यते ॥" [6] इति ।

एवं च क्रमभावी तावद्व्यापारसमुदायः धात्वर्थः इति, एकदेशान्वयेऽपि [7] समुदायमाश्रित्य साध्यत्वप्रतीतिः । [8] अत एव क्रमवत्त्वात् क्रियेत्युच्यते । तदुक्तम्—

"यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥" [9] इति ।

इति केचित् [10] । वस्तुतस्तु अमीषां मते क्रियैकैव क्रमवत्तावद्व्यापार- [11] व्यङ्ग्या । तत्क्रमाच्च क्रमोपचारः इति तत्त्वम् । **प्राणप्रदः इति ।**

---

1 'सिद्धोऽपि पदार्थस्य'–क. 2 प्राणः—व्यवहारयोग्यता । 'पदार्थप्राणदः'–ख. 3 सजातीयेभ्यो व्यावर्तनप्रत्ययहेतुरित्यर्थः । 4 'तत्र' इति नास्ति–क. 5 'क्रियाभेदः'–च. 6 कालानुपाति यद्रूपं तदस्तीति प्रतीयते । परितस्तु परिच्छिन्नं भाव इत्यभिधीयते ॥ इति (वाक्यपदीये—३-८-७२.) 7 'एकदेशान्वयेऽपि'–च. 8 'असाध्यत्वप्रतीतिः'–ज. 9 (वाक्यपदीये—३-८-१.) 10 'कश्चित्'–च. 11 'क्रमवत्त्वात् व्यापार'–ज.

## मधुमती

प्राणप्रद इव प्राणप्रदः। आनाशं[1] अनपायीत्यर्थः। न च गुणनित्यता-पक्षे तत्रातिव्याप्तिरिति वाच्यम्। पाकादिना घटादौ तस्याप्यपगमात्[2]। अपगमश्च नित्यतापक्षे सम्बन्धाभावः, अनित्यतापक्षे तु प्रध्वंस इत्यन्यदेतत्। द्रव्योपगमापगमवत एव[3] वैयाकरणमते गुणत्वात्। यदाहुः—

"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।[4]
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥"[5] इति।

अस्यार्थः—**सत्त्वे**—द्रव्ये एव **निविशते, अपैति** च। अत्र अवधारणार्थक-पदं विनाऽपि अवधारणप्रतीतिः अब्भक्षादिवत्।[6] तथा **पृथग्जातिषु**—नानाजातीयेषु घटपटादिषु **दृश्यते**। यः सः गुणः[7] इत्यनेन सम्बन्धः। अनेन जातेर्भेदः। यद्यपि द्रव्यत्वादिकाऽपि जातिः नानाजातीयवृत्तिः, तथाऽपि इदं स्वरूपनिर्वचनम्। पूर्वविशेषणादेव च भेदो द्रष्टव्यः। न हि जातिः सत्त्वे एव निविशते, गुणादावपि सत्त्वात्। नापि द्रव्ये सत्यपि ततोऽपैति। एवमपि कर्मण्यतिव्याप्तिः। अत उक्तं—**आधेयश्चाक्रिया-जश्चेति**। आधीयते जन्यते इति **आधेयः**—जन्यः। क्रियाजातः क्रियाजः। न क्रियाजः **अक्रियाजः**। नित्य इत्यर्थः। चकारः मिथस्समुच्चये। स च[8] व्यक्तौ सम्भवति, यज्जातीयं नित्यमनित्यं च भवतीति। न च कर्म तथा, तज्जातीयस्य अनित्यत्वात्। पृथिवीवृत्ति-रूपादीनां पाकादपगमनात् अनित्यत्वेऽपि, जलपरमाण्वादिवृत्तीनां नित्यत्वेन

---

1 'अनाशं'–च. 2 'व्यपगमात्'–च. 3 'द्रव्यावगमापगमवत एव'–ग. 'द्रव्यापगमापगत एव'–च. 4 'जातिषु वर्तते'–ज. 5 (महाभाष्ये—४-१-४४.) 6 अप एव भक्षयति, वायुमेव भक्षयति, न त्वन्यत् इत्यर्थे अब्भक्षः वायुभक्षः इति प्रयोगवत् इत्यर्थः। 7 'यस्य गुणः'–च. 8 'न च'–ग.

उक्तं हि वाक्यपदीये[1]—

"न हि गौः स्वरूपेण गौः,[2] नाप्यगौः,

गोत्वाभिसम्बन्धात्तु गौः"[3] इति।

---

## मधुमती

रूपजातीयस्य[4] उभयरूपत्वात्, शुक्लं जलमित्यादौ शुक्लादिशब्दः गुणवचन एव। ये च गुणत्वेन प्रसिद्धा अपि स्वरूपतः सम्बन्धतो वा द्रव्यात् नापगच्छन्ति ते पदार्थप्राणप्रदा एवेति तद्वाचकानां जातिशब्दत्वमेव। पारिभाषिकं गुणत्वमाश्रित्य च गुणशब्दाः इत्युच्यन्ते। एतच्च 'परमाण्वादि-शब्दानां' इत्यत्र आकर एव स्फुटीभविष्यति। एवमपि द्रव्ये अतिव्याप्तिः। अत उक्तं—**असत्वप्रकृतिरिति**। पितृचरणैस्तु आनाशमनपायित्वमेव पदार्थव्यपदेशहेतुत्व[5]भङ्ग्या उक्तम्। तत्र च यावत्सत्त्वमिति शेषः। तेन यावत्सत्त्वं पदार्थव्यपदेशस्वरूपयोग्यत्वं लभ्यते। तथाच तादृशव्यपदेश-मजनयत्यपि न दोषः इति विशेषः ॥[6]

**उक्तं हीति**। भर्तृहरिणेति शेषः। **शुक्लादिना हीति**। **ननु** यथा गोत्वादिना लब्धसत्ताकं वस्तु[7] नीलः शुक्लः इत्यादिना गुणेन विशेष्यते, तथा शुक्लादिना लब्धसत्ताकं वस्तु गौर्हंसः इत्यादिना जात्याऽपि विशेष्यते इति चेन्न। 'क्षणं अगुणो भावः'[8] इत्यभ्युपगमात्, आद्यक्षणे गुणवत्तया

---

1 वाक्यानि पदानि चाधिकृत्य भर्तृहरिणा रचिते ग्रन्थे। 2 'पदीये—गौः स्वरूपेण न गौः'—क. 3 गोपदोद्देश्यो धर्मी सर्वोपाधिरहितव्यक्त्यात्मकस्वमात्रेण गौरिति वा न गौरिति वा व्यवहारं प्रति न प्रयोजकः। किन्तु नित्यैकानेकानुगत-गोत्वान्वयज्ञानादेव गौरिति व्यवहारहेतुरित्यर्थः। 4 'नित्यजातीयस्य'—च. 5 'पदार्थहेतुत्व'—च. 6 'इति न विशेषः'—ज. 7 'प्रतिवस्तु'—ज. 8 'क्षणमगुणाभावः'—च.

द्वितीयो गुणः। शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते।[1]

साध्यः पूर्वापरीभूतावयवः क्रियारूपः।[2]

---

## सङ्केतः

द्वितीयः इति। लब्धस्वरूपवस्तुनः[3] पटादेः पश्चात् सम्बध्य[4]-विशेषाधानहेतुः। यदि हि पटादिना गुणः सहभावी इष्यते, तदा 'पटादौ रूपादयः' इति प्रतीतिः न सङ्गच्छेत।[5] न हि शुक्लादेः गुणस्य पटादि-स्वरूपप्रतिलम्भहेतुत्वम्। जातिमहिम्नैव पटादेः प्रतिलब्धस्वरूपत्वात्। तदेवं यस्य प्राणप्रदोपाधिनिबन्धनत्वं स जातिशब्दः गवादिः। यस्मात्तु लब्धस्वरूपस्य वस्तुनः विशेषाधानहेतुः अर्थः प्रतीयते स गुणशब्दः। **साध्यः पूर्वापरीभूतेति**। पूर्वापरीभूतौ तुषबुसादिप्रक्षेप-विक्लेदादिरूपौ अवयवौ यस्याः क्रियायाः तद्रूपः इत्यर्थः॥

## मधुमती

लब्धसत्ताकत्वाभावात्। **यद्वा**—स्वाश्रय एव निर्विशेषत्वं विशेषकत्वं इह विवक्षितम्। यथा शुक्लो गुणः आमपाकदशायां[6] घटत्वादिना लब्धसत्ताकं स्वाश्रयं शुक्लोऽयं नीलोऽयमिति विशिनष्टि, न च तथा गोत्वादिकं इत्याशयात्। **पूर्वापरीभूतावयवः इत्यादि**। अवयवः इव अवयवः—आश्रय इति

---

1 गोत्वादिना धर्मेण प्राप्तव्यवहारयोग्यताकं वस्तु शुक्लत्वादिना गुणेन सजातीयेभ्यो व्यावर्त्यते इत्यर्थः। 'हि' इति नास्ति–क. 'विशेष्यते'–ख.
2 अधिश्रयणाद्यधःश्रयणान्तक्रमिकांशिकव्यापारविशेषविशिष्टः पाकादिक्रियारूपः इत्यर्थः। 'वयवक्रियादिरूपः'–क. 3 'लब्धरूपस्य वस्तुनः'–ख. 4 'सम्बन्ध्य'–ख.
5 'सङ्गच्छते'–ख. 6 'आद्यपातदशायां'–च.

डित्थादिशब्दानां अन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषु उपाधित्वेन संनिवेश्यते इति, सोऽयं संज्ञारूपः यदृच्छात्मकः

---

## सङ्केतः

अन्त्यबुद्धिनिर्ग्राह्यमिति । न खलु डिशब्दोच्चारे त्थशब्दः, त्थशब्दोच्चारे वा डिशब्दः । अत एव **संहृतक्रमं स्वरूपम्** । तत् खलु तां तां अभिधाशक्तिं अभिव्यञ्जयता **वक्त्रा यदृच्छया** उपाधितया संज्ञिनि तस्मिंस्तस्मिन् **संनिवेश्यते** । तस्मात् शब्दप्रवृत्तिनिमित्तानां चतुष्ट्वात् मुख्यः शब्दार्थः चतुर्विधः ॥ [1]

## मधुमती

यावत् । स च अधिश्रयणाद्यवतारणपर्यन्तः क्रियाकलापः । एवं च तदाश्रया क्रिया लभ्यते इत्यर्थः । **केचित्तु**—पूर्वापरीभूतः अधिश्रयणादिरवयवः जनको यस्य स तथा इति विक्लिष्टाभिप्रायेण [2] योजयन्ति ॥

यदृच्छात्मकं उपाधिं व्याचष्टे—**डित्थादीति** । यद्यप्यत्र वर्णा एव उपाधयः । तथाऽपि आशुविनाशिनां तेषां अर्थप्रत्यायकत्वाभावात् अन्यथा व्याचष्टे—**अन्त्येति** । चरमबुद्ध्या स्फुटतरग्राह्यमित्यर्थः । तेन वर्णान्तरबुद्धेरपि व्यञ्जकत्वम् । अत एव यथोत्तरं स्फोटबुद्धौ तारतम्यं संहृतक्रममेकम्, यदेकत्वात् एकं पदमिति प्रतीतिः । स एव च उपाधिः । स च

---

1 चतुर्विधत्वं त्वेवम्—पदार्थस्य प्राणप्रदः सिद्धो वस्तुधर्मः जातिरूपः प्रथमः, पदार्थस्य विशेषाधानहेतुः गुणात्मकः द्वितीयः, क्रियारूपः साध्यो वस्तुधर्मः तृतीयः, स्वेच्छापरिकल्पितः स्फोटरूपः चतुर्थः इति । 2 'विकृत्यभिप्रायेण'—च.

इति ॥[1]

"गौः शुक्लः चलो[2] डित्थः इत्यादौ
चतुष्टयी शब्दानां प्रवृत्तिः ।"[3]

---

सङ्केतः

ननु 'विशेषाधानहेतुः गुणः शुक्लादिः' इति पूर्वमुक्तम् । ततश्च परमाणुत्वादयो गुणाः परमाण्वादिद्रव्याणां न विशेषाधानहेतवः, नित्यत्वात् अनित्यानां हि विशेषाधानहेतुत्वम् । पूर्वापरकालविषयो हि विशेष्यविशेषक-

मधुमती

डित्थादिशब्दजन्यज्ञाने भासते । यथा जात्यादिशब्दानां जात्यादौ शक्तिः तथा यदृच्छाशब्दस्यापि स्वस्मिन् शक्तिः । व्यक्तिगुणाश्रयसंज्ञिनां तु लक्षणया अनुमानेन वा उपस्थितिः । अत एव गौः शुक्लः इत्यादिसामानाधिकरण्यमपि सङ्गच्छते । न च स्फोटस्य जात्यादिशब्दसाधारण्यात् न भेदकत्वमिति वाच्यम् । उपाधित्वेनैव साधारण्यात् । जात्यादिशब्देषु स्फोटसत्त्वेऽपि जात्यादेरेव उपाधितया[4] तस्यानुपाधित्वात्, शब्दस्य च तन्मते द्रव्यतया यदृच्छाशब्दे द्रव्यमुपाधिरित्युच्यते ॥

---

1 अयं भावः—प्रथमवर्णश्रवणेन किञ्चित् प्रकाशितं चरमवर्णश्रवणेन च निःशेषतः ग्राह्यं, वर्णवत् क्रमग्रहशून्यं, जातिप्रतीत्यनन्तरं व्यक्तिग्रहः इत्यादिक्रमशून्यं च स्फोटाख्यं स्वरूपं, तत्तन्नामनिर्देशकेन स्वेच्छया डित्थादिरूपार्थेषु बोधकतया परिकल्प्यते इति, सोऽयं संज्ञारूपः स्वेच्छाकल्पितत्वात् यदृच्छात्मकः व्यवह्रियते इति । अत्र 'वक्त्रा' इति नास्ति–क. 'ससंज्ञारूपः यदृच्छात्मकः उपाधिः'–ख. 2 'चलति'-क. 3 (पातञ्जलमहाभाष्ये प्रत्याहाराह्निके ऋलृक्सूत्रे.) 4 'उपाधिकतया'–ज.

**इति महाभाष्यकारः।[1] परमाणुत्वादीनां[2] तु गुण-मध्य[3]पाठात् पारिभाषिकं गुणत्वम् ॥[4]**

---

## सङ्केतः

भावः । तत् कथं तेषां गुणत्वम्? इत्याह—**परमाणुत्वादीनां गुणमध्य-पाठादिति** । "अणु महत् दीर्घं ह्रस्वं च"[5] इति कणादवचनात् । अन्यथा जातिशब्दत्वं स्यात् । न खलु स्वयं परमाणुः, परमाणुत्वयोगात्तु परमाणुरिति ॥

## मधुमती

ननु परमाणुपरिमाणस्य अनपायितया पदार्थप्राणप्रदत्वेन तद्वाचकपदस्य जातिवाचकशब्दत्वमुचितम् । तत् कथं गुणशब्दताव्यवहारः इत्यत आह—**परमाण्वादीनामिति** । **पारिभाषिकं**—वैशेपिकाभिप्रायमात्रसिद्धम् । वस्तुतो मन्मते जातिशब्दत्वमेव तस्येत्यर्थः ॥

---

1 तथाचेयं सारणी—




2 परममहत्त्वादिः आदिपदार्थः । 'परमाण्वादीनां'–ग. 3 'मध्ये'–क.
4 वैशेषिकशास्त्रसंकेतितमेव गुणत्वं, न तु वस्तुस्वभावसिद्धम् । आलङ्कारिकमते तु जातिशब्दत्वमेवास्येति भावः । 5 (कणादसूत्रे—पृ. १६.)

## सङ्केतः

ननु परमाणुषु परमाणुत्वं कस्मान्नेष्यते ?। उच्यते—पार्थिवपरमाणौ पृथिवीत्वपरमाणुत्वयोः परापरव्यवस्थायाः अभावात्। यदि पृथिवीत्वमपरं, तदा घटेऽपि परमाणुत्वप्रसङ्गः। अपरसद्भावे परस्य सद्भावप्रतिपादनात्। अथ परमाणुत्वमपरं, तदा तेजःपरमाणुष्वपि पृथिवीत्वप्रसङ्गः। तस्मात् न जातिशब्दत्वम्। परमाणुत्वादीत्यत्र[1] आदिशब्दात् येषां प्रागुक्तगुणलक्षणाभावः, अथ च गुणत्वेनेष्टाः, ते पारिमाण्डल्यादयो ग्राह्याः। "परिमण्डलाः—परमाणवः, तेषां भावः पारिमाण्डल्यम्। अनुशतिकादीनां च[2] इति उभयपदवृद्धिः। तच्च वर्तुलत्वम्" इति न्यायकुमुदचन्द्रे प्रभाचन्द्रो व्याख्यातवान्। अपरे तु पारिमाण्डल्यं परमाणु[3]-परिमाणमाहुः। पारिमाण्डल्यादीत्यत्र आदिशब्दात् आकाशादीनां परिमाणादयः ग्राह्याः॥

## मधुमती

ननु गुणादीनां नानात्वे व्यक्ताविव आनन्त्यव्यभिचारतादवस्थ्यम्, एकत्वे भेदप्रतीतिरनुपपन्ना इत्यत आह—गुणेति। एकैकाः एव हि नीलारुणादिव्यक्तयः, क्रियाऽप्येकैव। यथा हि तत्तद्वर्णाभिव्यङ्ग्यः तत्तद्वर्णानुगतः स्फोटः एक एव, तथा अधिश्रयणादितत्तद्व्यापारव्यङ्ग्या[4] तत्तद्व्यापारानुगता क्रियाऽप्येकैव। अत एव उक्तव्यापाराभावेऽपि पचतीत्यादिप्रत्ययप्रयोगौ युज्येते। अन्यथा आशुविनाशिनां तेषां बोधकाभावात् तौ न स्याताम्। अत एव व्यञ्जकव्यापारक्रममुपादाय क्रमवती क्रिया इत्युच्यते। स्फोटस्यैक्यं तु साधितमेव। एवं सति भेदबुद्धिमुपपादयति—

---

1 'परमाण्वादीत्यत्र'–ख. 2 (पा. सू. ७-३-२०.) 3 'माण्डल्यमणु'–ख.
4 'तत्तद्व्यापारव्यङ्ग्या'—इति नास्ति–ज.

**गुणक्रियायदृच्छानां वस्तुतः एकरूपाणामपि आश्रयभेदात् भेद इव लक्ष्यते, यथा—एकस्यैव[1] मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्[2] ॥**

---

## सङ्केतः

ननु गुणक्रियायदृच्छाशब्दानां आनन्त्यात् कथं तेषु सङ्केतः? यतः प्रत्येकं सङ्केतः कर्तुं न शक्यते जातिं विना, इत्याशङ्क्याह—**गुणक्रियायदृच्छेति**। गुणक्रियायदृच्छादीनां परमार्थतः एकत्वमेव। यदुक्तम्—

"कर्मैकं जातिरप्येका जगत्येकः स्थितो गुणः।"[3] इति।

यस्तु भेदः प्रतीयते सः आश्रयभेदात्, न वस्तुतः इत्याह[4]—**आश्रयभेदादिति**। न तु भेद एवेति यावत्।[5] शुक्लादीनां आश्रयाः भिन्नाः

## मधुमती

**आश्रयभेदादिति**। तथा च गुणस्य द्रव्यं आश्रयः, क्रियायाः व्यापारकलापः, स्फोटस्यापि वर्णसमुदायः इति तद्भेदौपाधिक एव एतेषु भेदप्रतीतिरिति[6] भावः। अत एव समुचितं दृष्टान्तमाह— **यथेति** ॥

**भास्करमिश्रैः** तदनुगामिभिः **पितृचरणैश्च** तर्कदृष्ट्या क्रियैक्यस्फोटौ निरस्य, जातिरेवेति पक्षे अन्तर्भाव्य, **गुणक्रियेत्यादि** व्याख्यातम्। तथाहि—**गुणक्रियायदृच्छानां**—तद्वाचकशब्दानां **एकरूपाणां** जातिशब्दानामपि **भेदः आश्रयभेदात्**। यत्र गुणवृत्तिः जतिः तथा, तत्र गुणशब्दत्वम्। एवं **क्रियायदृच्छयो**रपि द्रष्टव्यमिति ॥

---

1 'एकस्यापि'–क. 2 आलम्बनं—प्रतिबिम्बाश्रयः। 3 (वा. प. ३-४-७२.) 4 'वस्तुतः अत आह'–ग. 5 'इति यावत्' इति नास्ति–ख. 6 'प्रतीतेरिति'–च.

**हिमपयःशङ्खाद्याश्रयेषु[1] परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्लः इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिः,[2] तत् शुक्लत्वादिसामान्यम् ।[3]**

---

## सङ्केतः

शङ्खाद्याः, पाकादीनां तण्डुलाद्याः, यदृच्छानां च वृद्ध[4]शुकाद्युक्ताः भिन्नाः ध्वनयः, बालाद्यवस्था वा । तदेव दृष्टान्तद्वारा द्रढयति—**यथैकस्येति** । यथा हि मुकुरतैलकृपाणादीनां प्रतिबिम्बनिबन्धनानां भेदात् एकमेव मुखं नानाकारमवभासते, तथैव[5] शुक्लादिव्यक्तिः एकैव शङ्खाद्याश्रयवशेन नानात्वेन स्फुरति । तस्मात् गुणादेरेकत्वात् जात्यभावे गुणादिशब्दानां गुणादौ सङ्केतः इति महाभाष्यकारमतम्[6] ॥

अन्ये तु गुणक्रियायदृच्छादीनां[7] वस्तुत एव भेदः, न त्वाश्रयभेदात्, इति मन्यमानाः सर्वत्र जातेरेव प्रवृत्तिनिबन्धनत्वं मन्वते ।[8] तन्मतं व्याकुर्वन् आह—**हिमपयःशङ्खादीति** । **अभिधानं**—शब्दः । **प्रत्ययः**—

## मधुमती

मतान्तरमाह—**हिमपय इति** । **सर्वेषां शब्दानामिति** ।[9] एतच्च तन्मते शब्दार्थयोः अभेदात् इत्यवसेयम् ॥

---

1 'शङ्खादिषु'–ख. 2 समानेन शब्देन तद्विषयकज्ञानोत्पत्तिरित्यर्थः । 'इत्याद्यनुगताभिन्नाभिधान प्रत्ययोत्पत्तिः ।'–क. 3 सामान्यं—जातिः । 4 'वृद्ध' इतिनास्ति–ग. 5 'नानाकारत्वेन भासते, तथैक'–ख. 6 युक्तमेवेति भावः इति शेषः । 7 'यदृच्छानां'–ख. 8 'जातिरेव प्रवृत्तिनिमित्तं मन्यन्ते'–ख. 9 'प्रसिद्धानामिति'–ज.

**गुडतण्डुलादिपाकादिषु च[1] एवमेव पाकत्वादि ।[2] बाल-वृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्य-मानेषु डित्थाद्यर्थेषु वा डित्थत्वादि च अस्तीति[3] सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये ॥[4]**

---

## सङ्केतः

ज्ञानम् । **पाकादिष्विति** । क्रियाशब्देष्वपि[5] **गुडतण्डुलादि**द्रव्याश्रिताः ये **पाकादयः** अन्योन्यमन्यत्वेन स्थिताः क्रियाविशेषाः तत्समवेतं सामान्यमस्ति । यद्वशेन अयं पाकः पाकः इति[6] अभिन्ना**भिधानप्रत्ययौ** स्याताम् । **डित्थादीति** । यदृच्छाशब्देषु **शुक**सारिका**द्युदीरितेषु** भिन्नेषु **डित्थ-त्वादिकं**[7] सामान्यमेव यथायोगं संज्ञिषु अध्यस्तं अभिधेयं । यदि वा उपचयापचययोगितया डित्थादौ संज्ञिनि **प्रतिक्षणं भिद्यमाने**ऽपि अभिद्यमानः यन्महिम्ना डित्थो डित्थः इत्येवमादिरूपत्वेन अभिन्नाकारः[8] प्रत्ययः स्यात्, तत् तथाभूतं डित्थादिशब्दावसेयवस्तुसमवेतमेव डित्थत्वादि सामान्यं, तच्च डित्थादिशब्दैरभिधीयते इति गुणक्रियायदृच्छाशब्दानामपि **जातिरेव** 'एकः शब्दार्थः इति ॥

---

1 'तण्डुलपाकादिषु '—क. 2 'पाकादित्वं '—क. 3 'डित्थाद्यर्थे वा डित्थत्वाद्य (दित्व) मस्तीति '—क. 4 अन्ये—मीमांसकाः । 5 'क्रियाशब्देष्वपि' इति नास्ति—ख. 6 'अयं पाक इति '—ख. 7 'डित्थशब्दत्वादिकं '—ग, 8 'इत्येवमभिन्नाकारः '—ख,

तद्वान् अपोहो वा शब्दार्थः कैश्चिदुक्तः इति ग्रन्थ-
गौरवभयात् प्रकृतानुपयोगाच्च न दर्शितम् ॥ [1]

**स मुख्योऽर्थः तत्र मुख्यो**
**व्यापारोऽस्याभिधोच्यते ॥८॥** [2]

---

### सङ्केतः

**तद्वानिति ।** जातेः अर्थक्रियाकारित्वाभावात् विफलः सङ्केतः, व्यक्तेस्तु अर्थक्रियाकारित्वेऽपि आनन्त्यव्यभिचाराभ्यां न सङ्केतः कर्तुं शक्यते इति जातिमती व्यक्तिः शब्दार्थः इति वैशेषिकादयः । **अपोह इति ।** जातिव्यक्तितद्योगजातिमद्बुद्ध्याकाराणां शब्दार्थत्वस्य अनुपपद्यमानत्वात्, गवादि[3]शब्दानां अगोव्यावृत्त्यादिरूपः अपोहः शब्दार्थः इति बौद्धाः ॥

अथ शब्दस्य मुख्येन लाक्षणिकेन व्यञ्जनात्मकेन वा व्यापारेण अर्थावगतिहेतुत्वमिति, तत्र मुख्यं तावदर्थमाह—**स मुख्योऽर्थः इति ।**

### मधुमती

**तद्वानिति ।** जातिमानित्यर्थः । **अपोहो वेति ।** अतद्व्यावृत्तिरित्यर्थः । गुरुरपि प्रयोजनवान् निरूप्यतामित्यत आह—**प्रकृतानुपयोगात् ।** व्यञ्जनायां तद्विवेचनस्य अनुपयोगादित्यर्थः ॥

**मुख्यो व्यापारः इति ।** **अभिधा**—सङ्केतः । **व्यापारपदं** वृत्तिपरम् । नात्र शब्दभावनारूपा अभिधा इति भ्रमः कर्तव्यः । तस्याः

---

1 उपाधिशक्तौ विशेष्यस्य व्यङ्ग्यत्वसंभवात्, तद्विचारस्यैव प्रकृतोपयोगित्वात् अन्येषां प्रकृतानुपयोगित्वाच्चेति भावः । 'न दर्शितः'–क. 2 तत्र मुख्यार्थे अस्य शब्दस्य यो व्यापारः सः अभिधेत्युच्यते इत्यर्थः । सा चाभिधा त्रिविधा—रूढिः योगः योगरूढिरिति । समुदायशक्तिमात्रेण अवयवशक्तिमात्रेण उभयेन च एकार्थप्रतिपादकत्वं एषां क्रमेण लक्षणमिति बोध्यम् । 3 'गवयादि'–ख.

स इति साक्षात् सङ्केतितः। अस्येति शब्दस्य ॥ ८ ॥

---

## सङ्केतः

सः—साक्षात्सङ्केतितः। मुखमिव हस्ताद्यवयवेभ्यः, अर्थान्तरेभ्यः प्राक् ज्ञायमानत्वात् मुख्योऽर्थः, तद्विषयः शब्दोऽपि—**मुख्यः**।[1] **तत्रेति**। अर्थविषये समयापेक्षा वाच्यावगमनशक्तिः **अभिधा**शक्तिः[2] ॥ ८ ॥

## मधुमती

विधिप्रत्यय एवोपगमात्। अत्र साक्षात्सङ्केतितार्थविषयत्वं शब्दव्यञ्जकस्थले व्यञ्जनायां, उपादानलक्षणास्थले लक्षणायामपीति **मुख्यपदोपादानम्**। **मुख्यत्वं** च व्यापारानुपजीवकत्वम्, लक्षणाऽऽदेरभिधोपजीवकत्वात्। **साक्षात् सङ्केतित इति**। 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति आप्ताभिप्रायविषयः इत्यर्थः। 'अस्माच्छब्दादमुमर्थं बुद्ध्वा ततः अयमर्थो ज्ञातव्यः' इत्यभिप्रायस्तु परम्परासङ्केतः। यथा 'गङ्गायां घोषः' इत्यादिलक्षणायाम्। तत्र हि गङ्गाशब्दः स्वार्थं बोधयित्वा तीरं बोधयतीति। संनिहितस्य मुख्यार्थस्य भ्रमं निवारयति—**शब्दस्येति** ॥ ८ ॥

---

1 तदर्थप्रतीतौ तद्गतव्यापारान्तरानपेक्षत्वमत्र मुख्यत्वम्। 2 शक्त्यादिग्राहकः सङ्केतः समयः। केचित्तु—शक्तिरेवाभिधा, शक्तिश्च सङ्केतयितुरिच्छा। सङ्केतयिता च जात्यादिवाचकपदेषु ईश्वरः, डित्थादिपदेषु तु तत्तत्पित्रादिः। तदिच्छायाश्च स्वरूपसम्बन्धेन शब्दनिष्ठत्वम्। अतश्च शक्त्यतिरिक्ताभिधायां न किञ्चित् प्रमाणमित्याहुः।

# मुख्यार्थबाधे तद्योगे[1]

## सङ्केतः

अथेदानीं लाक्षणिकस्य लक्ष्यार्थदर्शनद्वारेण व्यापारमाह[2]—**मुख्यार्थेति**। मुख्यस्य **अर्थस्य** अनुपपत्तेः अनुपयोगाच्च प्रत्यक्षादिप्रमाणेन **बाधे, तेन** मुख्यार्थेन सह लक्ष्यार्थस्य **योगे**—सम्बन्धे सादृश्यादौ सति,

## मधुमती

लाक्षणिकशब्दस्वरूपं विवेक्तुं लक्षणां तावद्विवेचयति—मुख्यार्थबाधे **इति**। अत्र यः इत्यर्थे यत् इत्यव्ययम्। तथा च—यः अन्योऽर्थो **लक्ष्यते** प्रतिपाद्यते **सा लक्षणा** इत्यन्वयः। नात्र लक्ष्यते इत्यस्य लक्षणयोच्यते इत्यर्थः। आत्माऽऽश्रयत्वात्। **यद्यपि** 'स लक्षणा' इत्येव वक्तुमर्हति। तथाऽपि—'सर्वनामशब्दानां विधेयोद्देश्यवाचकशब्दान्यतर-लिङ्गग्राहकत्वं' व्युत्पत्तिसिद्धमिति विधेयवाचकलक्षणाशब्दस्य स्त्रीलिङ्गत्वात् **'सा'** इत्युक्तम्। अत एव 'आधारोऽधिकरणम्'[3] इति सूत्रस्य 'यः आधारः तत् अधिकरणम्' इति व्याख्यानं सङ्गच्छते। **यद्यपि** च एवमपि 'यदा' परामृष्टव्यप्रतिपाद्यस्य 'तदा' परामर्शे तत्र लक्षणात्वविधानं

---

1 उभयत्रात्र निमित्तार्थे सप्तम्यौ। तेन रूढितः प्रयोजनादिति पञ्चमी-समानार्थकतया क्रियाऽभिसम्बन्धः। तदिति मुख्यार्थपरामर्शः। बाधो नाम अनुपपत्तिः। सा च अन्वयानुपपत्तिरेव इति प्राञ्चः। तथा सति 'गङ्गायां घोषः' इत्यादौ घोषपदस्यैव मकरादिलक्षणया, 'गङ्गायां पापी गच्छती'त्यादौ गङ्गापदस्यैव नरकादिलक्षणया च अन्वयानुपपत्तिपरिहारापत्तेः 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो यान्ति' इत्यादौ अन्वयानुपपत्त्यभावाच्च तात्पर्यानुपपत्तिरेव लक्षणाबीजं इति नवीनाः प्राहुः. 2 लक्षणावृत्तिरूपं व्यापारमाहेत्यर्थः. 3 (पा. सू. १-४-४५).

## रूढितोऽथ प्रयोजनात् ।[1]
## अन्योऽर्थो[2] लक्ष्यते यत्[3] सा

---

### सङ्केतः

**रूढेः प्रयोजनात्** वा अतिपाविञ्य[4]शैत्यादेः अशब्दान्तरवाच्यात् ताद्रूप्यप्रतीत्यादिरूपात् **अन्योऽर्थः यत् लक्ष्यते**—प्रतिपाद्यते **सा स्यात्**[5] अमुख्यः शब्दव्यापारः लक्ष्यार्थनिष्ठः लक्षणाशक्तिः। **यत्** इति वाक्यार्थनिर्देशः। **सा** इति विधीयमाना लक्षणा। सर्वनामपदं हि कचित् अनूद्यमानलिङ्गमादत्ते, कचित्तु विधीयमानलिङ्गमिति ॥[6]

### मधुमती

अनुपपन्नम्। तथाऽपि—'सविशेषणे हि'[7] इति न्यायेन तत् प्रतिपादने पर्यवसन्नम्। अत एव **काव्यदर्पणे** पितृचरणैरुक्तम्—'यदित्यनेन गुणीभूतं प्रतिपादनं परामृश्यते' इति। **मुख्यार्थबाधः**—ज्ञाप्यार्थबाधः। तेन च रूढिलक्षणासूलभूतायाः निर्वचनानुपपत्तेः सङ्ग्रहः। अन्यथा **कुशलशब्दस्य** कुशादानकर्तरि शक्त्यभावात् तस्य सङ्ग्रहो न स्यात्। अत्र अन्वयानुपपत्तिवत् तात्पर्यानुपपत्तिरपि द्रष्टव्या। तेन उपादानलक्षणासंग्रहो भवति। तथा च मुख्यार्थबाधतद्योगाभ्यां अशक्यार्थप्रतिपत्तिः लक्षणा इति **प्राञ्चः। नव्यास्तु—यत्** इत्यव्ययं यस्मादित्यर्थे। तथा च यस्मात् **अन्योऽर्थः** प्रतिपाद्यते

---

1 तथा च मुख्यार्थबाध–तद्योग–रूढिप्रयोजनान्यतररूपहेतुत्रयसहकारेणेत्यर्थः। 2 शक्यभिन्नोऽर्थः. 3 यया इत्यर्थः। वृत्त्येति शेषः. 4 'प्रयोजनात् पाविञ्य'–ग. 5 'यते यत्सास्यात्'–ग. 6 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इतिवत्। 7 'सविशेषणे हि वर्तमानौ विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायः। यथा—घटाकाशमानयेत्यादौ।

## मधुमती

**स लक्षणा** इत्यर्थः इत्याहुः । युक्तश्चायम् । अन्वयप्रतियोग्युपस्थित्यर्थं वृत्तिकल्पनात् । तथा च शक्यसम्बन्ध एव लक्षणा । न च 'अभिधेयाविनाभूते'[1]त्यागामिग्रन्थविरोधः । करणव्युत्पत्त्या प्रतीतिशब्दस्य तत्रैव विश्रामात् । अत एव 'तद्भूर्लाक्षणिकः शब्दः'[2] इत्युपसंहारः सूत्रकारस्य । वृत्तिकृताऽप्युक्तम्—'आरोपिता क्रिया— आरोपितः शब्दव्यापारः' इति । उपस्थितेः लक्षणात्वे **'अरोपितो व्यापारः'** इत्यसाधु[3]स्यात्, उपस्थितेः व्यापारत्वाभावात्॥

**न च** शक्यसंबन्धस्य लक्षणात्वे 'तद्योगे' इति व्यर्थम् । मुख्यार्थबाधतद्योगयोः लक्ष्यप्रतीत्यनुकूलत्वे समानेऽपि, मुख्यार्थबाधः मुख्यार्थान्वयप्रतिबन्धद्वारा तदुपस्थापकः, शक्यसम्बन्धस्तु साक्षादेव तदुपस्थापकः इति, स एव लक्षणेति च प्रतिपादनार्थत्वात् । **नचैवमपि** 'हेत्वभावान्न लक्षणा—मुख्यार्थबाधादित्रयं हेतुः'[4] इत्यनन्तरोक्तेन, 'मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा' इति पञ्चमोल्लासोक्तेन च विरोधः । न हि शक्यसम्बन्धाभावे शक्यसम्बन्धाभावेन वा अशक्य[5]सम्बन्धेन वा हेतुर्घटते इति वाच्यम् । प्रयोजनं न लक्षणा[6]जन्यज्ञानविषयः, हेत्वभावात् इति प्रथमस्यार्थः । 'नाभिधा समयाभावात्'[7] इत्यत्र साध्यावैशिष्ट्यभयेन—प्रयोजनं नाभिधाजन्यज्ञानविषयः— इत्यस्य अवश्यवाच्यत्वात् । मुख्यार्थबाधरूढिप्रयोजनरूपहेतुत्रयसापेक्षत्वे च द्वितीयस्य तात्पर्यात् । **वस्तुतो** लक्षणापदस्य भावकरणोभयव्युत्पन्नतया क्वचित् किञ्चित् पुरस्कृत्याभिधानमिति न पूर्वापरविरोधः । अत्र वृत्तिकृता तु करणव्युत्पत्तिरेवाश्रितेति [8] तत्त्वम् ॥

---

1 (२ उल्लासे १२ कारिकाव्याख्यानसमये उद्धृतोऽयं श्लोकः). 2 (का. प्र. १४ कारिका). 3 'इत्येव साधु'–च. 4 (का. प्र. १५ कारिका). 5 भावो न वा शक्य'–ज. 6 'प्रयोजनलक्षण'–ज. 7 (का. प्र. १५.का.) 8 'करणव्युत्पत्तिमूलैवेति'–ज.

## लक्षणाऽऽरोपिता[1] क्रिया ॥९॥

'कर्मणि कुशलः'[2] इत्यादौ दर्भग्रहणाद्ययोगात्,[3]
'गङ्गायां घोषः' इत्यादौ च घोषाद्याधारत्वासंभवात्,[4]

---

### सङ्केतः

उदाहरणद्वारेण व्याकरोति—**कर्मणीति**। कुशान् लातीति दर्भग्रहणायोगात् मुख्यार्थबाधे विवेचकत्वादौ सम्बन्धे रूढेः 'प्रवीणः' इत्यर्थः

### मधुमती

**रूढितोऽथ प्रयोजनादिति**। अयं विभागः, न तु लक्षणप्रविष्टः। प्रत्येकसमुदायाभ्यां अव्याप्त्यसम्भवयोः प्रसङ्गात्। ननु स्वार्थं बोधयित्वा विरते शब्दे, पश्चात् अर्थः तीरं प्रतिप्रादयतीति अर्थव्यापारोऽयं, न तु शब्दस्य इत्यत आह—**आरोपिता क्रियेति**। अर्थव्यापार एव शब्दे आरोप्यते इति लाक्षणिकः शब्दः उच्यते इति **प्राञ्चः**। **अस्मत्पितृचरणास्तु**—लाक्षणिकमपि पदं अनुभावकं, आरोपितत्वोक्तिस्तु साक्षात्सम्बन्धाभावनिबन्धनेति तर्कदृष्ट्या प्राहुः ॥

सूत्रं व्याचष्टे—**कर्मणीति**। रथादिकर्मणीत्यर्थः। सन्ध्यावन्दनादौ योगार्थस्याप्यन्वयात्।[5] एवं च कुशलपदं योगरूढम्। **अयं तु विशेषः**—

---

1 तत्त्वतोऽर्थवृत्तिरपि शब्दे कल्पितेत्यर्थः। 2 यो हि धातुवैषम्यादिना अप्रकृतिंगतमात्मानं दैवीं प्रकृतिं गमयितुं विज्ञानिभिः प्रदिष्टेन दर्भसंस्पर्शेन समर्थो भवति, तादृशः नाडीविज्ञानविदेव सर्वकर्मसु समर्थो भवतीति निगूढाभिप्रायेण एषः प्रयोगः स्यादिति भाति। 'योगः कर्मसु कौशलम्' इति च गीतोक्तिरप्यत्रानुसन्धेया। 3 'णायोगात्'—क. 4 'षा (द्य) धिकरणत्वासंभवात्'—क. 5 पवित्रपाणिः प्राणानायम्य' इत्युक्तेः।

मुख्यार्थस्य बाधे ;[1] विवेचकत्वादौ सामीप्ये च सम्बन्धे,

---

सङ्केतः

लक्षणाव्यापारेण लक्ष्यते। आदिशब्दात् द्विरेफद्विकानुलोम्यप्रातिलोम्य[2]-लावण्यादयः। द्विरेफशब्देन हि रेफद्वितययोगिभ्रमरशब्दलक्षणाऽर्थलक्षणा-द्वारेण रूढ्यनुवृत्तिरेव षट्पदादौ क्रियते।

"मध्येसमुद्रं ककुभः पिशङ्गीः
या कुर्वती काञ्चनवप्रभासा।
तुरङ्गकान्ताऽऽननहव्यवाह-
ज्वालेव भित्त्वा जलमुल्ललास॥"[3]

इत्यादौ तु तुरङ्गकान्ताऽऽननहव्यवाहशब्दः[4] बडवामुखाग्नौ लक्षणया प्रयुक्तः। न च तत्र रूढः, व्यवहारे अनभ्यनुज्ञातत्वात् इति दुष्टत्वम्।[5] सति तु

मधुमती

पङ्कजपदापेक्षया कुशलशब्दस्य योगार्थे प्रयोगबाहुल्याभावः। योगार्थे मण्डपपदस्येव पङ्कजपदे योगोऽतिप्रसक्तः रूढ्या नियम्यते। अत्र तु रूढियोगौ द्वावपि अतिप्रसक्ताविति मिथोनियमनम्। न च कुशलशब्दस्य योगरूढत्वे योगार्थस्यापि भानं स्यादिति वाच्यम्। अवयवव्युत्पन्नस्य तदज्ञानात्।[6] तदव्युत्पत्तिदशायां तदज्ञानस्य पङ्कजादिपदसाधारण्यात्।

---

1 'स्वार्थबाधे'–क. 2 'प्रातिलोम्य' इति नास्ति–ग. 3 द्वारकावर्णनमिदम्। समुद्रमध्ये काञ्चनमयप्राकारप्रभया दिशो विदिशश्च पिङ्गलवर्णाः कुर्वती इयं पुरी, समुद्रोदकं भित्त्वोत्थिता बाडबाग्नेर्ज्वालेव बभासे इत्यर्थः। (शिशुपालवधे–३. ३३.)। 4 मुखेन हव्यं वहति अग्निः, तुरङ्गकान्ता च बडबा इति। 5 'इति द्रष्टव्यम्'–ग. 6 'व्युत्पन्नताज्ञानात्'–ज.

## सङ्केतः

गुप्तार्थप्रतिपादनादिप्रयोजने एवंविधाः लक्षणा अप्यदुष्टाः। यदाह **भट्ट-कुमारिलः**—

" निरूढाः लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः॥ "[1] इति॥

## मधुमती

अन्यथा लक्षणाऽपि न स्यात्। अत एव योगार्थे अल्पः प्रयोगः इति प्रयोगबाहुल्यानुरोधेन रूढ्यर्थलक्षणा। **न चैवं** रूढ्यर्थनिपुणत्वस्यान्वये न किञ्चित् बाधकमिति लक्षणा न स्यादिति वाच्यम्। व्यक्तिवचनन्यायेन योगार्थान्विततयोपस्थितस्य निराकाङ्क्षतया स्वातन्त्र्योपस्थितये तदभ्युपगमात्, साजात्यपक्षे स्थलनलिनादौ पङ्कजादिपदस्येव। अत एव योगार्थमात्रपरतया कुशलपदप्रयोगेऽपि लक्षणैव, शैवलादौ पङ्कजपदस्येव। इह तु तत्परतया प्रयोगस्य निहतार्थतापत्तिभयेन अव्युत्पादनात्।[2] एवं[3] प्रयोजनशून्येऽपि लक्षणा नेयार्थत्वापत्तिभयेन काव्ये नाद्रियते। **न चैवं** 'रूढितोऽथ प्रयोजनात्' इत्यनुपपन्नम्। काव्योपयोगिलक्षणापरत्वेन तथाऽभिधानात्। **न च** प्रयोजनशून्येऽपि यदि लक्षणा तदा क्वापि तज्ज्ञानं न स्यादिति वाच्यम्। यत्र मुख्यशब्दाभिधाने प्रतिपिपादयिषितप्रयोजनप्रत्ययः तत्र प्रयोजनशून्यता, यत्र तु न तथा तत्रैव लक्षणायाः प्रयोजननियमः इति नियमात्।[4] **न चैवं** नाममात्रस्यैव धातुसमर्थत्वात् गोपदादेरपि लाक्षणिकत्वापत्तिः। औणादिक-प्रत्ययानां प्रयोगमात्रसाधूनां निरर्थकत्वात्। **सम्प्रदायविदस्तु**—" योगार्थ-एव मुख्यः, निपुणे तु लक्षणैव, न तु योगरूढिस्वीकारः। न च तत्र

---

1 (तन्त्रवार्तिके 3. 1—6. 12.) 2 'भयेनाप्युत्पादनात्'–ज. 3 'अत एव'–ज. 4 'प्रयोजननियमात्'–ज.

**रूढितः—प्रसिद्धेः, तथा 'गङ्गातटे घोषः' इत्यादेः प्रयोगात् येषां न तथा प्रतिपत्तिः, तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः[1] प्रयोजनाच्च—मुख्येन**

---

## सङ्केतः

अत्र **निरूढाः**—भ्रष्टोपचारप्रतीतयः, **लक्षणाः**—लक्षणाशब्दाः, **अभिधान-वत्**— वृक्षादिनामवत् ॥

**तथा गङ्गेति** । 'गङ्गातटे घोषः' इत्युक्ते अपरिमितपावित्र्यादीनां न हि प्रतिपत्तिः ।[2] **तथेति** । अपरिमितत्वेन । **अन्योऽर्थः**[3]—लक्ष्यः तटादिः । **सान्तरार्थेति** । सव्यवधानः तटादिलक्षणः योऽर्थः तदाश्रया[4] क्रिया **शब्दव्यापारः लक्षणा** । तथाहि—गङ्गाशब्दाभिधेयस्य स्रोतसः घोषाधारताऽनुपपत्तेः मुख्यार्थबाधे योऽयं समीपसमीपिभावात्मा सम्बन्धः तदाश्रयेण तटं लक्षयति । लक्षणायाश्च प्रयोजनं तटस्य गङ्गात्वैकार्थसमवेत-पुण्यत्वमनोरमत्वशैत्यादिप्रतिपादनं व्यङ्ग्यम् । न हि तत् पुण्यत्वादि शब्दान्तरैः स्प्रष्टुं शक्यते । **तद्योगश्च** मुख्यार्थासन्नत्वम् ॥[5]

## मधुमती

शक्तिरेव, अन्यलभ्यत्वात्" इत्याहुः ॥ इदमुपलक्षणम्—अनादिलक्षणा सर्वाऽपि रूढिलक्षणैवेति द्रष्टव्यम् ॥ **प्रसिद्धेरिति** । प्रयोगबाहुल्या-दित्यर्थः ॥

---

1 अन्यत्रान्यशब्दप्रयोगः तद्धर्मप्राप्त्यर्थः इति न्यायात् । 2 'परिमित-पावित्र्यादीनां प्रतीतिः'–ग. 3 'अमुख्योऽर्थः'–ग. 4 तदाश्रया—तद्विषयिणी । 5 'श्च तत्रासन्नत्वम्'–ग.

## सङ्केतः

तच्च पञ्चधोक्तं **भर्तृमित्रेण**—

"अभिधेयेन सम्बन्धात् सादृश्यात् समवायतः ।
वैपरीत्यात् क्रियायोगात् लक्षणा पञ्चधा मता ॥"[1] इति ।

तत्र **सम्बन्धाद्यथा**—गङ्गायां घोषः ॥ **सादृश्याद्यथा**—गौर्वाहीकः । "गौरेवायम्" इत्यादौ मुख्यार्थस्य सास्नादिमत्त्वादेः प्रत्यक्षादिप्रमाणेन बाधे अभिधेयेन सादृश्यात् तद्गतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादिगुणयुक्तः वाहीकः लक्ष्यते । प्रयोजनं ताद्रूप्यप्रतिपत्त्यादि । एते च सारोपसाध्यवसान-लक्षणगौणलक्षणायाः उदाहरणे ॥ **समवायः**—साहचर्यम् । तस्माद्यथा—कुन्ताः प्रविशन्ति । अत्र कुन्तानां प्रवेशानुपपत्त्या मुख्यार्थबाधे साहचर्यात् पुरुषाः लक्ष्यन्ते । प्रयोजनं च रौद्रत्वादीनां सातिशयानां प्रतिपादनम् ॥ **वैपरीत्याद्यथा**—भद्रमुखः । अत्र भद्रमुखशब्दस्य अभद्रमुखे प्रयोगात् स्वार्थबाधः । अतः असौ स्ववाच्यभूतभद्रमुखत्ववैपरीत्यात् अभद्रमुखत्वं लक्षणया अवगमयति । प्रयोजनं तु शुष्कासभ्यार्थप्रतीतिः । किंच—यत्र वाक्यार्थः प्रथमं घटितः सन् वक्त्रादिवैशद्यात् अन्यमर्थं प्रत्याययति स तु अन्योऽर्थः मुख्यमर्थं मिथ्यात्वेन गमयति, न तु बाधते । तत्र मुख्यार्थबाधाभावात् न लक्षणा । यथा—'अत्ता एत्थे'[2]त्यादौ । यत्र तु मुख्योऽर्थः वक्त्रादिवशात् अन्वयमगच्छन् वैपरीत्यात् बाध्यते तत्र मुख्यार्थबाधः । यथा—'साहेन्ती सहि सुहअम्'[3] इत्यादौ ॥ **क्रियायोगात्**[4]यथा—'महति समरे शत्रुघ्नस्त्वम्'[5] इत्यादौ ।

---

1 (न्यायसिद्धान्तमञ्जर्याम्—४). 'शक्येन सह संबन्धात्'–घ. 2 (का. प्र. उदा. १३६). 3 (का. प्र. उदा. ७). 4 कार्यकारणभावादित्यर्थः। 5 पृथुरसि गुणैः मूर्त्या रामो नलो भरतो भवान्, महति समरे शत्रुघ्नस्त्वं तथा जनकः स्थितेः । इति सुकृतिः ख्यातिं बिभ्रच्चिरन्तनभूभृतां कथमसि न मां धाता देव! त्रिलोकविजय्यपि ॥ इति पूर्णः श्लोकः । (?)

## अन्योऽर्थः[1] लक्ष्यते यत्—सः आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो[2] लक्षणा ॥ ९ ॥[3]

---

### सङ्केतः

अत्र अशत्रुघ्ने शत्रुघ्नप्रयोगात् स्वार्थबाधः। शत्रुघ्नशब्दश्च अशत्रुघ्ने हननक्रिया-कर्तृत्वायोगात् लक्षणया प्रयुक्तः। प्रयोजनं च वर्ण्यमानस्य शत्रुघ्नशब्दाभिधेय-नृपरूपताप्रतिपादनम्। एवं च निरन्तरार्थनिष्ठः[4] शब्दव्यापारः अभिधा। सान्तरार्थनिष्ठस्तु लक्षणा। तेन अभिधैव मुख्यार्थे बाधिता सती अचरितार्थत्वात् अन्यत्र प्रसरतीति तत्पुच्छभूतैव लक्षणा ॥ ९ ॥

### मधुमती

सान्तरार्थनिष्ठः इति। मुख्यार्थव्यवहिततीरादिनिष्ठः इत्यर्थः ॥ ९ ॥

---

1 'अमुख्योऽर्थः'–क. 2 अन्तरं—व्यवधानम्। व्यवहितो लक्ष्यरूपो योऽर्थः तद्बोधकः इत्यर्थः। इदं च आरोपिता क्रियेत्यस्य विवरणम्। 3 अयं प्रघट्टकार्थः—चित्रादिकर्मसु दक्षः इत्यर्थे 'कर्मणि कुशलः' इति प्रयोगे सति, तत्र कुशलपदस्य—कुशं लाति इति व्युत्पत्तिलब्धदर्भग्राहकत्वरूपमुख्यार्थानन्वयात् बाधे सति प्रयोगप्रवाहानुगुण्येन हीनोत्तमांशहानोपादानशक्तत्वरूपशक्यसंबद्धो दक्षतारूपार्थः, एवं सदा शीतलः पावनश्च गोपालग्रामः इत्यर्थे 'गङ्गायां घोषः' इति प्रयोगे सति तत्र गङ्गापदस्य—मुख्यार्थप्रवाहादेः गोपालग्रामाधिकरणत्वानन्वयात् बाधे, प्रवाहतटयोः सामीप्यरूपसंबन्धे च सति, शैत्यपावनत्वादिप्रतिपादनरूपप्रयोजन-सत्त्वेन च शक्यसंबद्धोऽमुख्यस्तटरूपार्थश्च, मुख्येनोपलक्षितः यया व्यवहितार्थ-विषयिण्या वृत्त्या संपाद्यते सा शब्दवृत्तिरेव क्रमेण रूढिलक्षणा फललक्षणेत्युच्यते। अत्र कुशलगङ्गाशब्दाभ्यां प्रत्यायितौ दर्भग्राहकत्वप्रवाहरूपार्थावेव दक्षतां तीरं चार्थं लक्षयतः इति, वस्तुतः अर्थवृत्तिरेव लक्षणेति, अर्थ एव च लाक्षणिकः इति च वक्तव्ये वृत्तेः लाक्षणिकत्वस्य च शब्दनिष्ठत्वव्यवहारः केवलं वाच्यधर्मस्य वाचके आरोपनिमित्तक एव इति च। 4 अर्थनिष्ठः—अर्थविषयकः।

## स्वसिद्धये पराक्षेपः[1]
## परार्थं स्वसमर्पणम् ।[2]

---

### सङ्केतः

सा च लक्षणा द्विविधा—शुद्धा, उपचारमिश्रा च । तत्र शुद्धाऽपि द्विधेत्याह—स्वसिद्धये इति । येयं प्रयोजनतो लक्षणा तस्याः एतौ भेदौ । रूढितस्तु या लक्षणा सा लोके प्राचुर्यं गतेति न तस्याः नैयत्यम् ।[3]

### मधुमती

रूढिलक्षणाया एकत्वात् तां विहाय प्रयोजनलक्षणां विभजते—**स्वसिद्धये** इति । तथा च **स्वसिद्धये पराक्षेपः उपादानम्, परार्थं स्वसमर्पणं लक्षणम्** इत्यन्वयः । **अस्मिन् मते** 'कुन्ताः प्रविशन्ति' इत्यत्र कुन्तप्रवेशानन्वयात् कुन्तिनि आक्षिप्ते कुन्तकुन्तिनोः तुल्यवत् प्रवेशान्वयः । अतः न कृत्स्नार्थोऽयमित्युच्यते । स्वार्थमादायैव अन्वयात् 'गङ्गायां' इत्यत्र गङ्गात्वेनोपस्थितावपि तीर एव वासान्वयः,[4] न स्रोतस्यपि इति । अत एवेयं जहत्स्वार्थेत्युच्यते । एवं च काककुक्कुरादिसम्बन्धि-रक्षणे[5] छत्रितदितरसमूहकर्तृकगमने च तात्पर्यविषयीभूते काकमात्रस्य छत्रि-मात्रस्य च नान्वयः इति तत्सिद्ध्यर्थं काकपदेन छत्रिपदेन च स्वसम्बन्धि-कुक्कुरादिः तदितरश्च आक्षिप्यते इति तत्रापि उपादानलक्षणैव । **यद्वा**

---

1 शक्यार्थस्य समभिव्याहृतपदार्थान्वयसिद्धये अशक्यार्थस्य आक्षेपः—स्वीकारः इत्यर्थः । 2 अशक्यार्थस्य समभिव्याहृतपदार्थान्वयसिद्धये शक्यार्थस्य त्यागः इत्यर्थः । 3 'न [illegible]यस्यानैयत्यम्'–ग. 4 'एवान्वयः'–ज. 5 'दिपक्षे सम्बन्ध-लक्षणे'–ज.

**उपादानं लक्षणं[1] चे-**
**त्युक्ता शुद्धैव[2] सा द्विधा ॥१०॥**

'कुन्ताः प्रविशन्ति' यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिः[3] आत्मनः[4] प्रवेशसिद्ध्यर्थं स्वसंयोगिनः[5] पुरुषाः आक्षिप्यन्ते[6]। ततः उपादानेन इयं लक्षणा[7] ॥

---

## सङ्केतः

अभिधाव्यापारतुल्यैवासौ इति भावः। कुन्तादिभिरिति। स्वार्थमत्यजद्भिः इति ज्ञेयम्। **स्वसंयोगिनः** इति भणनात्। आक्षिप्यन्ते—लक्ष्यन्ते ॥

## मधुमती

स्वार्थापरित्यागेन परार्थोपादानं **उपादानम्**, स्वार्थपरित्यागेन तदुपादानं **लक्षणम्** इत्यर्थः। **अत्र मते** कुन्ताः प्रविशन्ति इत्यत्र कुन्तवृत्तिसंयोगाश्रयत्वेन उभयसाधारणरूपेण तदुभयोपस्थितिः, 'गङ्गायां' इत्यत्र यत् वस्तुगत्या गङ्गातीरं, तस्य स्रोतस्त्वेनोपस्थितिः। एतच्च "कुन्ताः इत्यत्र उभयसाधारण. रूपेण, गङ्गायामित्यत्र स्रोतस्त्वेन च लक्ष्योपस्थितिः" इति लिखतां

---

1 अर्थान्तरं उपलक्ष्यते अनेनेति व्युत्पत्त्या 'काकवद्देवदत्तगृहं' इत्यादिवत् स्वार्थत्यागेन परार्थद्योतनपरं उपलक्षणपदमेवात्र लक्षणपदेनोच्यते. 2 न च गौण्यामपि अस्य भेदस्य संभवः। स्वसादृश्यस्य स्वाधृत्तित्वेन तत्र उपादानाद्यसंभवात्। संबन्धान्तरे तु गौणत्वायोगात्। अत एवात्र एवकारः। 3 अस्य आक्षिप्यन्ते इत्यनेनान्वयः। 'यष्टयः प्रविशन्ती'ति नास्ति–क. 4 अचेतनत्वात् स्वतोऽसम्भवत्प्रवेशस्येति शेषः। अनेन बाधः सूचितः। 5 शक्यार्थकुन्तादिविशिष्टाः। अनेन योगः सूचितः। 'आत्मप्रवेशनार्थं'–क. 6 लक्षणया बोध्यन्ते। 7 तत्र स्वार्थापरित्यागपूर्वकपरार्थग्रहणेन इयं उपादानलक्षणेत्युच्यते इत्यर्थः।

**'गौरनुबन्ध्यः' इत्यादौ श्रुतिचोदितं अनुबन्धनं कथं मे[1] स्यादिति जात्या व्यक्तिराक्षिप्यते,[2] न तु शब्देनोच्यते[3];**

---

### सङ्केतः

अनुबन्ध्यः—हन्तव्यः। **विशेषणे इति**। जातिलक्षणे उपाधौ।

### मधुमती

**पितृचरणानां** संमतम् ॥ यथा व्याख्याद्वयेऽपि—कुन्ताः इत्यत्र बाहुल्य-प्रतीतिः, गङ्गायामित्यत्र पावनत्वादिप्रतीतिश्च तथा अनुपदं वक्ष्यामः ॥

**इदं त्ववधातव्यम्**—यत् अर्थान्तरसङ्क्रमितवाच्ये ध्वनौ सर्वत्र उपादानलक्षणा मूलम्, अत्यन्ततिरस्कृतवाच्ये तु लक्षणलक्षणेति। एवं च 'काकेभ्यः' इत्यादौ प्रथमव्याख्याने काकत्वेन काकादीनां उपस्थितिः। 'छत्रिणः' इत्यादौ तु छत्रित्वेन तदितरोपस्थितिः। यद्यपि काकत्वच्छत्रित्वयोः नोभयसाधारण्यम्। यद्यपि च जहत्स्वार्थायां लक्ष्यमेव सम्बन्धः इति परदर्शनं च। तथापि अमीषां मते प्रयोजनप्रत्ययानुरोधे छत्रिणः उभय-साधारणधर्मिरूपसंबन्धेन लक्ष्यतावच्छेदकरूपेणैव उपस्थितिः इति ध्येयम्। द्वितीयव्याख्याने तु दध्युपघातकत्वेनैव सार्थकत्वेनैव च उपस्थितिः इति। **शुद्धैव** इति ब्रुवता गौण्यपि लक्षणाविशेषः इति सूचितम् ॥

अन्येषां[4] मतं दूषयितुमुपन्यस्यति—**गौरनुबन्ध्यः इति**। **आक्षिप्यते**। लक्ष्यते इत्यर्थः। **विशेष्यमिति**। नागृहीतविशेषणा-

---

1 जातिरूपस्य ममेत्यर्थः। मीमांसकमते जातावेव शक्त्यङ्गीकारात्। 2 स्वाश्रयभूता व्यक्तिः लक्षणया बोध्यते. 3 उच्यते—अभिधया बोध्यते. 4 मण्डनमिश्राणाम्।

**"विशेष्यं[1]नाभिधा गच्छेत्[2]क्षीणशक्तिः विशेषणे।"**
**इति न्यायात्; इति[3]—उपादानलक्षणा तु न वाच्या[4]।**
**न ह्यत्र प्रयोजनमस्ति, न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते;[5] यथा—**

---

सङ्केतः

**उपादानलक्षणा तु न वाच्येति।** यथा अन्यैः मुकुलादिभिः उक्ता। न च क्रमेण द्वयोर्वाच्यता। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्।[6] शब्दबुद्धिकर्माणि हि विरम्य व्यापारं न कुर्वन्ति इति॥

मधुमती

न्यायात्[7] जातावेव शक्तिरिति भावः। तदेव दूषयति—**नोदाहर्तव्येति। न ह्यत्रेति।** अनादित्वादिति तात्पर्यम्। **न वा रूढिरियमिति। इयं**—उपादानलक्षणा **न रूढिः** न रूढिलक्षणेत्यर्थः। तथा च प्रकृते लक्षणा भवन्ती रूढिलक्षणैव स्यात्। न च प्रयोजनशून्यायाः तस्याः प्रयोजनवत्यां अन्तर्भावः शक्यसमर्थनः इत्यर्थः।

**सम्प्रदायविदस्तु**—यत्र निर्वचनानुपपत्तिरेव बाधः तत्र रूढिलक्षणा। न च गोशब्दस्य गोव्यक्तौ तदस्ति, गच्छतीति गौः इति निर्वचनस्य व्यक्तावपि सत्त्वात् इत्याहुः॥

कथं तर्हि व्यक्तिलाभः इत्यत आह—**व्यक्त्यविनाभावित्वादिति। आक्षिप्यते**—अनुमीयते। तथा च अन्यलभ्यत्वात् न रूढिलक्षणाऽपीति

---

1 व्यक्तिम्। 2 बोधयेत्। 3 इत्युपपाद्येत्यर्थः। 'विशेषणे इति'—क. 4 'नोदाहर्तव्या'—क. 5 अनुमीयते। क्रियाकारकयोरिव अन्यतरप्रतीतौ अन्यतरानुमित्यौचित्यात्। न चास्य शाब्दबोधविषयत्वासंभवः। जातेरपि व्यक्त्यवच्छेदकतया अन्वययोग्यत्वादिति भावः। 6 'व्यापारद्वयाभावात्'—ग. 7 'नागृहीतविशेषणा बुद्धिः विशेष्ये चोपजायते' इति न्यायः।

'क्रियतां' इत्यत्र कर्ता, 'कुरु' इत्यत्र कर्म, 'प्रविश पिण्डीं' इत्यादौ 'गृहं भक्षये'त्यादि च[1]।

"पीनो देवदत्तः दिवा न भुङ्क्ते"[2] इत्यत्र च रात्रिभोजनं न लक्ष्यते। श्रुतार्थापत्तेः[3] अर्थापत्तेर्वा[4]

---

### सङ्केतः

पीनो देवदत्तः इति। अत्रापि नोपादानक्षणा। यथा अन्यैः रसायनाद्यभावे पीनत्वलक्षणकार्येण रात्रिभोजनात्मककारणस्य स्वसिद्धये समाक्षेपादुक्ता। श्रुतार्थापत्तेरिति। "दृष्टः श्रुतो वा अर्थः अन्यथा

### मधुमती

भावः। न च अनुमेयत्वे शाब्दबोधबहिर्भावापत्तिः, अर्थाध्याहारनयमाश्रित्य अभिधानात् ॥

ननु भोजनाभावसहितपीनत्वं अनुपपद्यमानं रात्रिभोजनं लक्षयति। रात्रिभोजनपीनत्वयोः सामानाधिकरण्यं सम्बन्धः। भोजनरहितोऽप्ययं पीनः इति पुरुषवैशिष्ट्यप्रतीतिः प्रयोजनं इति लक्षणासामग्रीसत्त्वात् तत्रापि लक्षणा इत्याशङ्क्य निषेधति—पीनो देवदत्तः इति। श्रुतार्थापत्तेरिति। तथा च अन्यलभ्यत्वात् न लक्षणाप्रसङ्गः इति भावः यत्र शब्द एव अनुपपद्यमानः योग्यताघटकतया शब्दान्तरं आभिप्रायिकं कल्पयति सा श्रुतार्थापत्तिः। अन्यत्र तु अर्थापत्तिमात्रमित्यर्थः। क्वचित्तु—'रात्रिभोजनं लक्ष्यते'

---

1 अविनाभावेनाक्षेपेऽपि लक्षणात्वे, क्रियतामित्यादावपि लक्षणात्वं स्वीकार्यं स्यादिति भावः। 'च' इति नास्ति–क. 2 भोजनाभावसहितं पीनत्वमनुपपद्यमानं रात्रिभोजनं लक्षयतु। रात्रिभोजनस्य पीनत्वेन सामानाधिकरण्यरूपसंबन्धसत्त्वात्, रात्रिभोजनमात्रादेवायं पीनः इति पुरुषवैशिष्ट्यप्रतीतिरूपफलसत्त्वाच्च लक्षणासामग्र्याः अविकलत्वाच्च—अत्र लक्षणाशङ्कायां उत्तरं—पीन इत्यादिना। 3 यत्र अनुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः। 4 यत्र अनुपपन्नः अर्थ एव अर्थान्तरं कल्पयति सा अर्थापत्तिः। 'दृष्टार्थापत्तेर्वा'—क.

तस्य[1] विषयत्वात् ॥

'गङ्गायां घोषः' इत्यत्र तटस्य घोषाधिकरणत्व-सिद्धये गङ्गाशब्दः स्वार्थमर्पयतीति[2] एवमादौ लक्षणेनैषा लक्षणा ॥

---

## सङ्केतः

नोपपद्यते इत्यर्थकल्पनं अर्थापत्तिः" इत्येतत् प्राभाकरो व्याख्याति—दृष्टः श्रुतः इति लोकप्रसिद्धया उपलम्भमात्रे वर्तते। सोऽर्थः अन्यथा नोपपद्यते—अर्थापत्तिव्यवस्थाप्यमर्थं विना न घटते इति या अर्थस्य कल्पना सा अर्थापत्तिः इति। श्रुतात् शब्दात् अर्थस्य अर्थप्रतिपत्तिव्यवस्थाप्यस्य आपतनं,[3] तेन श्रुतार्थापत्तौ 'रात्रौ भुङ्क्ते' इति शब्दः कल्प्यते, अर्थात् अर्थस्य आपतनं आपत्तिः, अर्थापत्तौ तु रात्रिभोजनमर्थ एवेति, अभिधैव स्वात्म-निर्वाहाय शब्दान्तरमर्थान्तरं वा आकर्षयतीति[4] मीमांसकाः ॥

लक्षणेनैषा लक्षणेति। अयमभिप्रायः—यत्र शब्दः सर्वथा स्वमर्थं त्यजन् अन्यं लक्षयति, तत्र लक्षणेन—तटादिज्ञापनेन लक्षणा। यत्र तु स्वार्थमपि वदन् अन्यमुपादत्ते तत्र उपादानेनेति ॥

## मधुमती

इति पाठः। तत्र कश्चिदाहेति शेषः। तदनुसृत्य उत्तरत्रापि 'तस्याः विषयत्वात्' इत्येव पाठः। तत्रापि तस्याः—कल्पनायाः विषयत्वा-दित्यर्थः ॥

सम्प्रति लक्षणलक्षणामुदाहरति—गङ्गायामिति ॥

---

1 रात्रिभोजनस्य। 2 स्वार्थं—प्रवाहं त्यजतीत्यर्थः। तथा च वाच्यमर्थं अन्वयायोग्यत्वेन उपलक्षणीकृत्य अन्वययोग्यमर्थं लक्षयतीति एषा लक्षणलक्षणेत्युच्यते इत्यर्थः। 3 'अर्थस्य आपत्तिः—व्यवस्थाप्यस्य आपतनं'–ग. 4 'वा कर्षतीति'–ग.

## उभयरूपा चेयं शुद्धा, उपचारेणामिश्रितत्वात्।[1]

---

### सङ्केतः

उपचारेणेति। यथा 'गौर्वाहीकः' इत्यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते न तथा तत्रेति भावः। अत्र हि—अभेद[2]प्रतिपत्तिपूर्वमेव अभेदः, तत्र तु भेदप्रतिपत्तिपूर्वम्॥

### मधुमती

शुद्धैवेति व्याचष्टे—**उभयेति**। अत्र सादृश्यातिरिक्तसम्बन्धमात्रनिबन्धनत्वं[3] **शुद्धत्वम्**। तेन सारोपसाध्यवसानयोः भेदः। सारोपसाध्यवसानयोश्च सादृश्यतदतिरिक्तसम्बन्धनिबन्धनत्वेन कचित् शुद्धत्वं द्रष्टव्यम्। वक्ष्यति च—"गौणौ शुद्धौ च विज्ञेयौ"[4] इति। अत्र हेतुः—**उपचारेणेति**। भिन्नत्वेन प्रतीयमानयोः ऐक्यारोपणं **उपचारः**। **तदमिश्रितत्वात्**। उपचारविषयाविषयत्वादित्यर्थः। भिन्नत्वेन प्रतीयमानत्वं च—भिन्नार्थवाचकशब्दप्रतिपाद्यत्वेन प्रतीयमानत्वम्। आरोपितक्रियात्मकलक्षणोपस्थाप्यार्थविषयत्वात् आरोपितत्वोक्तिः। एवं च विधेयत्वं—आरोपितत्वम्,[5] उद्देश्यत्वं आरोपविषयत्वमिति ध्येयम्। साध्यवसानविषयेऽपि उपचारसम्भवेन तदविषयाविषयत्वात्, उपादानलक्षणलक्षणयोः उपचारविषये अनवतारात्, आरोपविषयस्य पृथगुपादानेन[6] तन्निगीर्णताऽभावात्। अत एव सारोपसाध्यवसानयोः समनियमः॥

---

1 सादृश्यातिरिक्तसम्बन्धेन प्रवृत्तिः उपचारः। 'अत्यन्तं पृथग्भूतयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनं उपचारः' इति दर्पणकारः। 'णामिश्रत्वात्'–क. 2 'अत्र स्वभेद'–ग. 3 'निबन्धकत्वं'–ज. 4 (का. प्र. १२. का) 5 'आरोप्यत्वं'–च. 6 'पृथगनुपादानेन'–ज.

**अनयोः भेदयोः लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्।[1] तटादीनां[2] गङ्गादिशब्दैः प्रतिपादने[3] तत्त्वप्रतिपत्तौ हि[4] प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः[5]।**

---

## सङ्केतः

एतदेव द्रढयति—**अनयोरिति**। तटादीनां लक्ष्याणां प्रतिपादने भेदात्मकं न ताटस्थ्यम्, किन्तु कुन्तपुरुषयोः गङ्गातटयोश्च अभेद एवेति। यत् अन्यैः 'ताटस्थ्ये[6] लक्षणा शुद्धा' इत्युक्तं, तत् दूषितमित्याह—**तत्त्वप्रतिपत्तौ हीति**। भेदे तु गङ्गासम्बन्धमात्रप्रतीतेः न लक्षणा विशेषः॥

ननु अत्र—कुन्ता एव प्रविशन्ति नान्ये, गङ्गायामेव घोषः नान्यत्र, इति विवक्षायां कुन्तगङ्गानिगीर्णतया कुन्तवत्तटयोः[7] प्रतीतौ साध्यवसानलक्षण-

## मधुमती

हेत्वसिद्धिं परिहरति—**अनयोरिति**। **भेदरूपं**—भेदगर्भम्। **ताटस्थ्यं**[8]—आरोपः। **तत्वप्रतिपत्तौ**—स्रोतस्त्वप्रतिपत्तावित्यर्थः। तथा च भिन्नत्वेन प्रतीतिर्नास्तीति सदप्यैक्यारोपणं अप्रयोजकमेवेति भावः॥

**ननु**—अनुपपन्नमिदम्। न हि येन रूपेण यस्यानन्वयनिश्चयः तेनैव रूपेणान्वयः। अयोग्यत्वात्। अतः कथं स्रोतस्त्वेनोपस्थिते घोषस्या-

---

1 केचित्तु—गौर्वाहीकः इत्यादिगौण्यां शक्यलक्ष्ययोरभेदप्रतीतिः, शुद्धायां तु भेदप्रतीतिः। एवं च भेदप्रतीतिरूपं ताटस्थ्यमेव अनयोः भेदरूपं—भेदकं इत्याहुः। तन्निराकरोति अनयोरित्यादिना। 'भेदयोः' इति नास्ति–क. 2 'तीरादीनां'–क. 3 'प्रतिपादनेन'–क. 4 शक्यलक्ष्ययोरभेदप्रतिपत्तौ सत्यामेव हीत्यर्थः। 5 गङ्गागतशैत्यपावनत्वादेः प्रतीतिः। 6 'तटस्थे'–ग. 7 'कुन्तितटयोः'–ग. 8 'तादवस्थ्यं'–च.

## सङ्केतः

यैव तत्त्वप्रतीतिप्रयोजनादिसाध्यसिद्धेः किं लक्षणान्तरकल्पनया ?। यदाह—
"सहचरणस्थानतादर्थ्यवृत्तमानधरणसामीप्ययोगसाधनाधिपत्येभ्यः ब्राह्मण-मञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेषु अतद्भावेऽपि तद्वदुपचारः।"[1]
इति ॥ मुकुलस्यापि अदः अनुमतम्। अत्रोच्यते—यत्र आरोप्यारोप-विषयभावतया अत्यन्तासन्नत्वेन भेदे सत्यभेदः तत्र साध्यवसानता। यत्र तु आरोप्यारोपविषयभावं विना मूलत एवाभेदप्रतीतिः तत्र उपादानता। पूर्वत्र तु पूर्वं भेदप्रतीतिः, पश्चात् अभेदप्रतिपत्तिः इति। **इदमत्र तत्त्वम्—**

## मधुमती

न्वयः।[2] किञ्च—

"स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा।"

न च तथा। स्रोतस्त्वेनैव तत्प्रतीतेः। अपि चैवं साध्यवसानायाः भेदो न स्यात्। **तत्र ब्रूमः**—न हि समानप्रकारकज्ञानमात्रं विरोधि। अपि तु समानविषयत्वविशेषितम्। अन्यथा घटः क्वचिदस्ति क्वचिन्नास्ति इत्यत्रापि तत्प्रतीतिः न स्यात्। न चात्र समानविषयत्वमस्ति। स्रोतस्त्वेन तीरस्योप-स्थितेः विषयभेदात्। अतो न योग्यताज्ञानं, न वा संसर्गग्रहः। **न च**

---

1 (गौतमन्यायसूत्रे २-२-६४). 'यष्टीः प्रवेशये'ति यष्टित्वारोपो ब्राह्मणे साहचर्यात्। 'मञ्चाः क्रोशन्ती'ति मञ्चत्वारोपो बालेषु तात्स्थ्यात्। 'वीरणेष्वास्ते' इति कटेषु वीरणत्वारोपः तादर्थ्यात्। 'अयं राजा यमः' इति राज्ञि यमत्वारोपः वृत्तात्। 'प्रस्थः सक्तुः' इति सक्तौ प्रस्थत्वारोपः तन्मानकत्वात्। 'चन्दनं तुला' इति चन्दने तुलात्वारोपः तद्धार्यत्वात्। 'गङ्गायां घोषः' इति गङ्गायां तीरधर्मा-धारत्वारोपः तत्सामीप्यात्। 'कृष्णः शकटः' इति शकटे तद्धर्मकृष्णत्वारोपः कृष्णगुणयोगात्। 'अन्नं प्राणाः' इति अन्नेषु प्राणत्वारोपः प्राणसाधनत्वात्। 'अयं कुलस्य राजा' इति पुरुषे राजत्वारोपः कुलाधिपत्यात् इति क्रमेणैषामुदाहरणानीति भाष्यम्। 2 'घोषाधारसान्वयः'—ज.

## मधुमती

स्रोतस्त्वग्रह एव तीरे कथमिति वाच्यम् । आहार्यारोपवदुपपत्तेः ॥ इयान् विशेषः—यत्–तत्र इच्छा नियामिका, अत्र तु लक्षणास्वाभाव्यमिति । अन्यथा लक्षणैव न स्यात् । प्रकारान्तरेण प्रयोजनालाभात् ।[1] 'सर्वतो बलवती ह्यन्यथानुपपत्तिः' इति न्यायात् । 'स्वार्थादन्येन' इत्यादिकं अप्रयोजकमेव । अत एव विशिष्टशक्तगवादिपदस्य व्यक्तिमात्रपरत्वेऽपि लक्षणैवेति प्राञ्चः । अस्तु वा तीरत्वेनैव ज्ञाते शक्यसम्बन्धग्रहात् स्रोतस्त्वेन भानम् । ननु तीरत्वस्य नियतोपस्थितस्य अभाने, तथाभूतस्य स्रोतस्त्वस्य च भाने किं बीजमिति चेत्, लक्षणास्वाभाव्यमित्यवेहि । अन्यथा प्रयोजना-प्रतिपादने लक्षणैव न स्यात् इत्युक्तत्वात् । साध्यवसानायाः आरोपविषय-निगरणमेव भेदकम् । एवं च यत्र आरोप्यारोपविषयप्रतीतावपि अभेदबुद्धिः संस्कारो वा सा सारोपा ।[2] यत्र च तादृश्येव विषये आरोप्यमात्रोपादानं तत्र साध्यवसाना । न चेह तदस्ति । 'गङ्गातीर'मित्यादौ अभेदबुद्धेरभावेन, 'गङ्गायां घोषः' इत्यादौ[3] तन्निगीर्णनाभावात् । असतोऽनिगीर्णनात् । यत्र च 'गङ्गा घोषवती' इत्यादौ तथा प्रतीतिः, तत्र साध्यवसानैवेति सहृदयैः विभावनीयम् ।

**भास्करस्तु**—भिन्नत्वेन प्रतीयमानयोः ऐक्यारोपणं उपचारः । स च 'गौर्गच्छति' 'अग्निमध्यापयेत्' इत्यादौ गौणसाध्यवसानायां नास्तीति, **उपचारा-मिश्रितत्वं** तत्रैव व्यभिचारि इति, **उपचारपदं** गुणपरतया व्याख्याय, गुणामिश्रितत्वं हेत्वर्थं वर्णयित्वा **भट्टमुद्गल**मतनिराकरणाय **अनयोर्भेदयोः लक्ष्यस्य** इत्यादि प्रतीकं अवतारयामास ॥

---

1 'नाभावात्'–ज. 2 'सा सारोपा' इति नास्ति–ज. 3 'अभेदे'त्यादि नास्ति–च.

**गङ्गासम्बन्धमात्रप्रतीतौ तु 'गङ्गातटे घोषः' इति मुख्यशब्दाभिधानात् लक्षणायाः को भेदः ॥ १० ॥**[1]

---

## सङ्केतः

अनयोरुदाहरणयोः आरोप्यारोपविषयभावं[2] प्रति चित्तमेव न धावतीति। अत्र सचेतस एव प्रमाणम् ॥ १० ॥

## मधुमती

मुख्येति। तथा च 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे' इति न्यायेन तथैव प्रयोगे लक्षणैव न स्यादिति भावः ॥

यद्वा — **तत्त्वप्रतिपत्तौ** गङ्गाशब्दप्रतिपाद्यत्वप्रतिपत्तावित्यर्थः। **गङ्गासम्बन्धमात्रप्रतीतौ** इत्यत्र यथाकथञ्चिदिति शेषः ॥

एवं च यथा प्रथमव्याख्याने लक्षणास्वभाव्यात् तीरस्य पूरत्वेनोपस्थितिः, तदुपस्थित्या च पावनत्वादिप्रतीतिः, तथा अत्रापि तत्स्वाभाव्यादेव तत्पदप्रतिपाद्यत्वज्ञानात् प्रयोजनप्रतीतिरास्थेया। विशेषाभावात्।[3] अत एव लाक्षणिकपदमप्यानुभावकम्। अत एव शक्यलक्ष्यसाधारणरूपेण उपादानलक्षणायां लक्षणलक्षणायां च तीरत्वेन तीरोपस्थितिः इति मतेऽपि न प्रयोजनोपस्थितिप्रतिबन्धः इति रहस्यम् ॥ १० ॥

---

1 किमतिशयितं फलमित्यर्थः। तथा सति—'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जीत' इति न्यायस्याप्यवतारापत्तिः इति भावः। 2 आरोपभावं '–ग. 3 'विषयाभावात्'–ज.

## सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।[1]

आरोप्यमाणः[2] आरोपविषयश्च[3] यत्र अनपह्नुत-भेदौ[4] सामानाधिकरण्येन[5] निर्दिश्येते सा लक्षणा सारोपा ॥[6]

### सङ्केतः

शुद्धां द्विधोक्त्वा उपचारमिश्रां सारोपामाह—सारोपाऽन्येति । **विषयी** गवादिः, **विषयः** वाहीकादिः । **अनपह्नुतभेदाविति** । अनपह्नुत-स्वरूपे एव ।[7] वस्तुनि वस्त्वन्तरस्याधिकस्य आरोप्यमाणत्वात् । सामानाधि-करण्यं भिन्नार्थयोः एकत्रार्थे वृत्तिः, नीलोत्पलवत् ॥

### मधुमती

प्रयोजनलक्षणायाः भेदान्तरमाह—**सारोपेति** । तु शब्दः उपादान-लक्षणा-लक्षणलक्षणाभ्यां व्यवच्छिनत्ति । **अनपह्नुतभेदाविति** **तथा**-शब्दार्थमाह । **सामानाधिकरण्येनेति** । एवं च—'भिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन् अर्थे वृत्तिः' इति शब्दसामानाधिकरण्यमपि निरुक्तं भवति ।

---

1 गौण्याः लक्षणायामेवान्तर्भावोक्त्या अतिरिक्तत्वखण्डनं अत्राभिप्रेतम् । 2 गौर्वाहीकः इत्यादौ गवादिः । विषयिपदव्याख्यानमिदम् । 3 तत्रैव वाहीकादिः । 4 प्रकाशितगोत्ववाहीकत्वादिवैधर्म्यौ । 5 समानविभक्तिकपदेन । मूलस्थ'तथा'-शब्दार्थोऽप्ययम् । 6 विषयविषयिणोः भेदेनोपन्यासस्यैव अत्र आरोपपदार्थत्वात् । 7 भेदपदं इतरभेदकस्वरूपपरमित्यर्थः ।

**विषय्यन्तःकृतेऽस्मिन्**
**सा स्यात् साध्यवसानिका ॥ ११ ॥**

विषयिणा—आरोप्यमाणेन अन्तःकृते—निगीर्णे [1] अन्यस्मिन्—आरोपविषये सति सा साध्यवसाना स्यात् ॥ ११ ॥ [2]

---

## सङ्केतः

सादृश्यहेतुका चैषा, उपमानोपमेयभावस्य विद्यमानत्वात्। इयं रूपकालङ्कृतेः बीजम्। [3] यत्र तु आरोप्येण गवादिना निगीर्णतया आरोपविषयस्य वाहीकादेः प्रतीतिः तत्र साध्यवसाना। इयं अतिशयोक्तेः

## मधुमती

भेदान्तरमाह—**विषय्यन्तःकृते इति**। आरोप्यांशस्य उत्कटत्वात् विषयिमात्रवाचकमात्रस्य प्रयोगः **अध्यवसानम्**। अत एव आरोपविषयवाचकमात्रपदोपादानेन साध्यवसानत्वं, आरोपविषयस्य अनुत्कटत्वात्। प्रयोजनप्रतिपादकत्वं [4] औत्कट्यम्। तदप्रतिपादकत्वं च अनौत्कट्यमिति। **निगीर्णे इति**। आत्मपरिशेषीकृते[5] इत्यर्थः। एवं च यत्रैव सारोपा तत्रैव साध्यवसाना। अत एव नोपादानलक्षणालक्षणलक्षणयोः साध्यवसानात्वं इत्युक्तं प्राक् ॥ ११ ॥

---

1 तद्वाचकशब्देनानुक्ते। भेदसहिष्ण्वभेदरूपेण तादात्म्येन प्रत्यायिते इति यावत्। 2 विषयिणा विषयतिरोभावस्य अध्यवसायपदार्थत्वात्। 'साध्यवसानिका स्यात्'–क. 'स्यात्' इति नास्ति–ख. 3 उपमानोपमेयस्वरूपस्य अनपह्नुतत्वात्। 4 'प्रयोजकत्वं'–च. 5 'आत्मा परिशेषीकृतः'–च.

## सङ्केतः

बीजम्।[1] यथा—

" असम्भृतं मण्डनमङ्गयष्टेः
अनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात् परं साधु(साऽथ)वयः प्रपेदे॥ "[2]

इत्यत्र वयोमद्ययोः भिन्नत्वेऽपि अभेदः॥

ननु पूर्वस्यामप्यभेदोऽस्ति, रूपकस्य अभेदात्मत्वात्। सत्यम्। तत्र आसन्नतामात्रेण अभेदः, इह तु अत्यासन्नतयेति वैलक्षण्यम्॥

कार्यकारणभावादिलक्षणायां तु न रूपकादिविषयता,[3] सादृश्याभावात्।[4] यथा—

" आयुर्घृतं, यशस्त्यागः,[5] भयं चोरः, सुखं प्रिया।
वैरं द्यूतं, गुरुर्ज्ञानं, श्रेयः सत्तीर्थसेवनम्॥ "[6] इत्यादौ।

तथा अप्रस्तुतप्रशंसाप्रकारस्य कस्यचित् अन्यापदेशलक्षणस्य साध्यवसानलक्षणात्वम्। यथा—

" अनर्घ्यः कोऽप्यन्तः तव हरिण! हेवाक[7]महिमा
स्फुरत्येकस्यैव त्रिभुवनचमत्कारजनकः॥ "[8]

इत्यत्र हरिणेन सह प्रतीयमानस्य अभेदः इति॥ ११॥

---

1 आरोपविषयस्य निगीर्णतयैव प्रतीतेः। 2 पार्वत्याः यौवनारम्भवर्णनमिदम्। (कुमारसं. १-३१). 3 आदिपदात् हेत्वलङ्कारो गृह्यते। 4 हेतुमात्रस्य वैचित्र्याभावात्। 5 ' नदी पुण्यं '–ग. 6 ' श्रेयो ब्राह्मणपूजनम् '–ग. 7 हेवाकः—अत्युत्कटेच्छा। 8 उत्तरार्धं तु—' यदिन्दोर्मूर्तिस्ते दिवि विहरणारण्यवसुधा सुधासारस्यन्दी किरणनिकरः शष्पकवलः '॥ इति। (काव्यकल्पलता) अत्र लोकोत्तरत्वलक्षणं उभयानुयायि सामान्यं समाश्रित्य प्राधान्येन विवक्षितस्य वस्तुनः प्रतीयमानवृत्तेः अभेदोपचारनिबन्धनं तत्त्वमध्यारोपितम्।

**भेदाविमौ च सादृश्यात्[1]**
**सम्बन्धान्तरतस्तथा ।**
**गौणौ शुद्धौ च विज्ञेयौ**

**इमौ–सारोपसाध्यवसानरूपौ । सादृश्यहेतू[2] भेदौ–**
**"गौर्वाहीकः"[3] इत्यत्र, "गौरयम्"[4] इत्यत्र च ॥**

---

### सङ्केतः

सारोपसाध्यवसानयोश्च गौणशुद्धभेदाभ्यां द्वैविध्यमाह—**भेदाविमा-विति** । यत्र उपमानगतगुणतुल्यगुणयोगलक्षणां[5] पुरस्सरीकृत्य उपमेये उपमानशब्दः आरोप्यते तौ **गौणौ**—गुणेभ्यः आगतत्वात् गौणशब्दवाच्यौ ॥

### मधुमती

ननु एतद्भेदद्वयं गौण्यामुपचारेऽपि गतम्, अत आह—**भेदाविमा-विति** । तथा च यत्र सादृश्यं सम्बन्धः तत्र गौणीत्वव्यवहारः । यत्र सादृश्यादन्यः सम्बन्धः तत्र उपचारव्यवहारः । वस्तुगत्या अनयोरपि लक्षणात्वमेवेत्यर्थः । **गौणौ शुद्धौ चेति** । एवं च गौणसारोपा गौणसाध्य-वसाना शुद्धसारोपा शुद्धसाध्यवसाना चेत्यर्थः । उदाहरति—**गौर्वाहीकः इति । अत्रेति** । अत्र गोशब्दः लक्षणया गोत्वसहचारिणं जात्यादिकमुप-स्थापयति । ततश्च तन्निमित्तीकृत्य वाहीकमभिधत्ते इत्यर्थः ॥

---

1 ननु संयोगसमवायाभ्यां 'दण्डी' 'रूपवान्' इतिवत्, सादृश्येन 'सिंहवान् देवदत्तः' इति विशिष्टधियोऽभावात् विशिष्टधीनियामकत्वाभाववतः सादृश्यस्य कथं सम्बन्धत्वं इति चेन्न । व्यतिरेकलक्षणास्थल इव विशिष्टबुद्ध्यनियामकस्यापि शक्य-संबन्धत्वाङ्गीकारात् । 2 'इमौ आरोपाध्यवसानरूपौ सादृश्यहेतुकौ'–क. 3 शास्त्रीयाचाराद्बहिर्भूतः वाहीकः । स गवाभिन्नः इत्यर्थः । 4 अत्र पुरोवृत्तित्वेन रूपेण वाहीकस्य उपस्थितेः गौणसाध्यवसानत्वम् । 5 'लक्षणां'–ग.

**अत्र हि स्वार्थसहचारिणो[1] गुणाः जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित्[2] ॥**

---

## सङ्केतः

स्वार्थेति। स्वार्थः—गोशब्दस्य गोत्वं पिण्डाकृती वा।[3]

"व्यक्त्याकृतिजातयस्तु पदार्थः स्वार्थः।"[4]

इति वचनात्। परार्थः[5]—वाहीकः। तथा च गोशब्दः वाहीकशब्दे अनुपपद्यमानसामानाधिकरण्यात् बाधितस्वार्थः सन् स्वाभिधान[6]पूर्वं स्वार्थसहचारिजाड्यादिगुणान् लक्षयित्वा तत्तुल्यवाहीकस्थजाड्यादिगुणलक्षणद्वारेण गोगतगुणतुल्यगुणोपेते वाहीके उपचरितः। शब्दोपचारस्य अर्थोपचारादिनाभावित्वात् तदर्थेऽपि[7] केचित् शब्दोपचारमेव मन्यन्ते। एवमन्यत्रापि। तेन चेयं उपचारमिश्रा। लक्षणाद्वयगर्भीकारेण चतुर्थकक्षायां लक्षणेति। चतुर्थकक्षात्वं लक्षणायाः अभिधापेक्षया ज्ञेयम्। लक्ष्यमाणगुणमुखेन[8] गोशब्दः वाहीके लक्षणया प्रवर्तते इत्यर्थः। गर्भलक्षणयोः अन्त्यलक्षणार्थं प्रवृत्तत्वात् तत्प्रयोजनेन प्रयोजनवत्त्वम्। न तु तयोः भिन्नं प्रयोजनम् ॥

## मधुमती

प्रवृत्तिनिमित्तस्य वाच्यवृत्तित्वात् अस्य च तदभावात्, वाहीकेऽपि

---

1 स्वं गोपदम्, स्वार्थः गोत्वादिः, तत्समानाधिकरणाः। 2 तथा च स्वार्थस्य वाहीकादिविशेषणत्वानुपपत्त्या गोशब्दः लक्षणया जाड्यादीन् धर्मान् प्रतिपादयति। तानेव निमित्तीकृत्य च वाहीकमभिधत्ते, न तु लक्षयतीत्यर्थः। वाच्यवृत्तेरेव च प्रवृत्तिनिमित्तत्वादत्रास्वारस्यम्। 3 'पिण्डाकृतिर्वा'–ग. 4 'स्वार्थः'–इति नास्ति–घ. 5 'पदार्थः'–ग. 6 'स्वाभिमान'–घ. 7 'तदर्थोऽपि'–ग. 8 'गुणयोगेन'–ग.

स्वार्थसहचारिगुणाभेदेन[1] परार्थगताः गुणाः एव लक्ष्यन्ते, न तु परार्थोऽभिधीयते इत्यन्ये[2] ॥

साधारणगुणाश्रयणेन[3] परार्थ एव लक्ष्यते इत्यपरे[4] ॥

---

## सङ्केतः

**न तु परार्थोऽभिधीयते इति ।** गोशब्देन स्वार्थसहचारिगुणलक्षणापूर्वं तदभेदेन वाहीकस्थाः स्वतुल्या एव गुणाः लक्ष्यन्ते । सव्यवधानव्यापारात् न[5] वाहीकार्थोऽभिधीयते इति एकलक्षणगर्भेयं तृतीयकक्षायां लक्षणा इत्याहुः । **अभिधीयते**—लक्ष्यते । **मुकुलस्त्वेवमाह**—यथा गोशब्दः स्वसदृशवाहीकगतजाड्यादिगुणान् लक्षयित्वा वाहीकं लक्षयतीति ॥

**साधारणेति ।** गोः वाहीकस्य च **साधारणाः**—तुल्याः ये **गुणाः** तदाश्रयणेन वाहीक **एव लक्ष्यते** ॥

## मधुमती

गोशब्दशक्तिकल्पने गौरवाच्चेति मतान्तरमाह—**स्वार्थसहचारीति** ॥

**न तु परार्थोऽभिधीयत इति ।** तथा च गुणमात्रं लक्ष्यते, परार्थस्तु आक्षिप्यते इत्यर्थः ॥

परार्थस्य गोशब्दाप्रतिपाद्यत्वे शाब्दसामानाधिकरण्यानुपपत्तिः इति सिद्धान्तमाह—**साधारणेति ।** स्वार्थवृत्तिविजातीयजात्यादिगुणवत्तया वाहीक एव लक्ष्यते इत्यर्थः । उपस्थितिश्च गोत्वादिना जाड्यादिमत्त्वेन वा इति बोद्धव्यम् ॥

---

1 'गुणाभेदे'–क. 2 अस्मिन् पक्षे शाब्दसामानाधिकरण्यानुपपत्तिः अस्वारस्यबीजम् । 3 'गुणाश्रयेण'–क. 4 तथा च गोशब्दः स्वार्थभूतगोवाहीकोभयानुगतं धर्मं लक्षयित्वा तन्मुखेन वाहीकमपि लक्षणयैव प्रतिपादयतीत्यर्थः । इदं च स्वमतम् । 'एव' इति नास्ति–क. 'लक्ष्यते' इति नास्ति–ख. 5 'न तु'–घ.

उक्तं चान्यत्र—

"अभिधेयाविनाभूतप्रतीतिः लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता[1] ॥" इति ॥

अविनाभावोऽत्र सम्बन्धमात्रम्, न तु नान्तरीयकत्वम्[2] । तथात्वे[3] हि 'मञ्चाः क्रोशन्ति' इत्यादौ

---

## सङ्केतः

**अभिधेयेति** । मुख्येनार्थेन **अविनाभूतस्य** केनापि सम्बन्धेन सम्बद्धस्य अन्यवस्तुनः[4] या प्रतीतिः[5] सा लक्षणा शुद्धेत्यर्थः । **लक्ष्यमाणैः गुणैः** जाड्यादिभिः सम्बन्धात् या तु वृत्तिः सान्तरार्थनिष्ठः शब्दव्यापारः सा **गौणी** । **नान्तरीयकत्वमिति** । नान्तरं—अविनाभावः, तत्र भवं नान्तरीयं, गहादित्वादीयः । तदेव **नान्तरीयकं**—अविनाभावि । येन विना यन्न भवति तत् **नान्तरीयकम्**—तादात्म्यतदुत्पत्तिलक्षणं कृतकत्वानित्यत्वादिवत्[6] । **तथात्वे**

## मधुमती

अत्र वृद्धसंमतिमाह—**अभिधेयेति** । **अभिधेयं**—बोध्यमात्रम् । रूढिलक्षणाऽनुरोधात् । **प्रतीतिरिति** । मुख्य[7] एवार्थः प्राचीनमते । प्रतीयते अनेनेति प्रतीतिः व्यापारः इति नव्यमते । **वस्तुतो** नव्यमतं साधीयः इत्युक्तमेव । एवं च गौण्यपि लक्षणाविशेषः इति तात्पर्यम् । **तथात्व इति** । मञ्चपुरुषयोर्नान्तरीयकत्वाभावादिति भावः ॥

---

1 'मानन्तरविरुद्धे तु मुख्यार्थस्य परिग्रहे' इत्यादिः । (तन्त्रवार्तिके १-४-२२).
2 अन्तरा—विनाभावः, तत्र भवः अन्तरीयः । तथा च तत्सत्तानियतसत्ताकत्वं नान्तरीयकत्वम् । तच्च यथा—जातिव्यक्त्योः न तथा वाच्यार्थलक्ष्यार्थयोरिति भावः ।
3 'तत्त्वे सति'–क. 4 'अस्य वस्तुनः'–ग. 5 प्रतीयते अनेनेति करणे क्तिन् । प्रतीतिसाधनभूतो व्यापारः इत्यर्थः । यदि उपस्थितिरेव लक्षणा तदा—प्रतीयते इति प्रतीतिः, भावे क्तिन् इति भेदः । 6 'कृतकत्वादिनित्यत्वादिवत्'–ग. 7 'संमुख'–ज.

लक्षणा न स्यात्[1]। अविनाभावे च आक्षेपेणैव सिद्धे
लक्षणायाः नोपयोगः इत्युक्तम् ॥

"आयुर्घृतम्" "आयुरेवेदम्" इत्यादौ च[2]
सादृश्यादन्यत् कार्यकारणभावादि सम्बन्धान्तरम्[3]।

---

## सङ्केतः

हीति। नान्तरीयकत्वे हि इत्यर्थः। न हि मञ्चपुरुषयोरविनाभावोऽस्ति। इत्युक्तमिति। गौरनुबन्ध्यः इत्यत्र। **एवमादौ चेति**। आयुषः कारणे

## मधुमती

ननु क्रोशनकाले तयोरप्यविनाभावोऽस्ति। एवं च प्रवेशनकाले कुन्तकुन्तिनोः, कुक्कुरादीनां दध्युपघातकत्वज्ञानदशायां च तदस्त्येव। अन्यथा लक्षणैव न स्यात्। न हि दध्युपघातकत्वेन अतर्कितात् रक्षणोपदेशो युज्यते इत्यस्वरसादाह—**अविनाभावे चेति**। लक्षणया व्यक्तिसिद्धिं निराकुर्वद्भिरिति शेषः। किञ्च सम्बन्धमात्रस्य अतिप्रसक्तत्वात् अविनाभावोऽभ्युपेयः। स च तथाऽपि समान एव, तात्पर्यान्नियमस्तुल्य एव। वस्तुतः शब्दस्य स्वपरत्वे लक्षणा आवश्यकी। न च शब्दस्यार्थेन समं दैशिकः कालिको वा अविनाभावः इति ॥

शुद्धसारोपाध्यवसाने विशेषयति—**आयुर्घृतमिति**। सम्बन्धान्तरतस्तथैति व्याचष्टे—**सादृश्यादन्यदिति**। **एवमादाविति**। लक्षणपदं

---

1 तथाच क्वचित् तात्कालिकाविनाभावसत्त्वेऽपि न तस्य गणना। तथा सति शब्दसहकृतानुमानेनैव उपस्थिते तटादौ घोषाधिकरणत्वान्वयसिद्धेः लक्षणाया एव क्वाप्युपयोगो न स्यादिति भावः। 2 आदिपदात् इन्द्रार्था स्थूणा इन्द्रः इत्यादिपरिग्रहः। 'च' इति नास्ति–क. 3 सादृश्यातिरिक्तसम्बन्धस्य अनेकविधत्वादिति भावः।

**एवमादौ च[1] कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने[2] ॥**

**अत्र[3] गौणभेदयोः[4] भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्तु[5]-अन्यवैलक्षण्येन अव्यभिचारेण च कार्यकारित्वादि प्रयोजनम् ॥[6]**

---

## सङ्केतः

घृते तद्गतकार्यकारणभावलक्षणापूर्वत्वेन आयुष्ट्वं कार्यमुपचरितम्। तेन इयं कार्यकारणभावलक्षणागर्भीकारेण लक्षणा। मुकुलस्याप्यदोऽनुमतम्। सप्रयोजना च लक्षणेत्याह—**गौणभेदयोरिति**। **अन्यवैलक्षण्येनेति**।

## मधुमती

करणव्युत्पत्त्या शक्यसम्बन्धपरम्। पूर्वं सम्बन्धान्तरव्याख्यानपरत्वं, अत्र तु प्रकृतार्थातिदेशपरत्वमिति अपौनरुक्त्यम्। रूपकालङ्कारे गौणसारूपाया अतिशयोक्तिविशेषे गौणसाध्यवसानायाश्च उपयोगः। शुद्धसाध्यवसानसारोपयोः कार्यकारणभावसम्बन्धनिबन्धनयोः परमते हेत्वलङ्कारः, एतन्मते तु स्वातन्त्र्येणैवोपयोगः, न त्वलङ्कारत्वेन। तथैव दशमे वृत्तिकृता वक्ष्यमाणत्वात्। एवं अन्यसम्बन्धनिबन्धनाऽपि बोद्धव्या। आसां विवेचनप्रयोजनमप्येतदेवेति द्रष्टव्यम् ॥[7]

सारोपसाध्यवसानयोः प्रयोजनलक्षणात्वं आविष्कर्तुं उभयोः प्रयोजनमाह—**अत्रेति**। गोवाहीकवृत्तिजाड्यमान्द्यादिधर्मयोः **भेदेऽपि ताद्रूप्यप्रतीतिः**[8] अभेदप्रतीतिश्च[9] **प्रयोजनं** इत्यर्थः। न तु गोवाहीकयोः

---

1 'च' इति नास्ति–क. 2 'लक्षणसंबन्धपूर्वे सारोपसाध्यवसाने'–क. 3 उक्तेषु चतुर्षु गौणीशुद्धोदाहरणेषु। रूढ्यभावादिति शेषः। 4 गौर्वाहीकः गौरयमित्यनयोः क्रमेण। 5 आयुर्घृतं, अयुरेवेदमित्यनयोः क्रमेण। 6 'प्रयोजनं' इति नास्ति–क. 7 'स्मर्तव्यम्'–च. 8 'प्रतीतेः'–च. 9 'च' इति नास्ति–च.

**क्वचित् तादर्थ्यादुपचारः**[1]**। यथा—इन्द्रार्था स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावात्**[2]**। यथा—**

---

## सङ्केतः

क्षीरादिवैसादृश्येन। यथा—आयुष्कारणं घृतं, न तथा क्षीरादि। आयुष्ट्वाच्च न व्यभिचरतीति कार्यकारित्वादि प्रयोजनम्॥

सम्बन्धाश्च बहवः, यदुक्तं—"एकशतं षष्ठ्यर्थाः"[3] इति। अत आह **क्वचित् तादर्थ्यादित्यादि**। क्वचित् मानात्। यथा—आढकमश्नाति। क्वचित् धरणात्। यथा—तुलाधृतं चन्दनं तुला। क्वचित् आधिपत्यात्। यथा—पुमानयं गोत्रम्। क्वचित् स्थानात्। यथा—मञ्चाः क्रोशन्ति इति। एवमादयः स्वयं यथालक्ष्यं लक्षणीयाः। एषु शुद्धा लक्षणा। क्वचित् रूढ्या, क्वचित् प्रयोजनाच्च, क्वचित् सारोपा, क्वचित् साध्यवसाना चेति उपचारमिश्रा चतुर्धोक्ता॥

## मधुमती

अभेदप्रतीतिः, वाहीके गोगतजाड्यादिप्रतीतिर्वा प्रयोजनमिति भ्रमः कर्तव्यः। तस्य वाक्यार्थमहिमलभ्यत्वादिति भावः॥

**एवमादा**वित्यनेनातिदिष्टं प्रपञ्चयति—**क्वचि**दिति। **तादर्थ्यात्**। सम्बन्धादिति शेषः। **स्वस्वामिभावात्** इत्यादावप्येवमेव सम्बन्धादिति योज्यम्। यथाक्रमं इष्टार्थदायित्वं, अलङ्घनीयाज्ञत्वं, कौशलातिशयः सामर्थ्यातिशयश्च प्रयोजनम्॥

---

1 उपकार्योपकारकभावरूपसंबन्धात् लक्षणेत्यर्थः। इष्टप्रदत्वं प्रयोजनम्। 2 अलङ्घनीयशासनत्वधीः प्रयोजनम्। 'भावसम्बन्धात्'–क. 3 महाभाष्ये 'षष्ठी स्थाने योगे'ति सूत्रे एवमुक्तम्।

राजकीयः पुरुषः राजा । क्वचित् अवयवावयविभावात्[1] ।
यथा—अग्रहस्तः इत्यत्र अग्रमात्रे अवयवे हस्तः ।
क्वचित् तात्कर्म्यात्[2] । यथा—अतक्षा तक्षा ।

---

सङ्केतः

ननु गङ्गादिशब्दः समयापेक्षतटादिप्रत्यायकः, अन्यथा वा? पूर्वः पक्षश्चेत्—तर्हि मुख्यः । तत्र कृतसमयत्वात् वृक्षादिवत् ।[3] अनेकार्थेष्वपि सङ्केतितः हरिशब्दादिवत् मुख्य एव । अथ उत्तरः पक्षः—तदा नार्थप्रतीतिकृत् । न हि शब्दः दीपवत् योग्यतयैवार्थं प्रकाशयति, किन्तु लिङ्गवत् सम्बन्धग्रहणबलात् ।—अथ[4] गङ्गादिशब्दः साक्षात् सम्बद्धः प्रवाहादौ, तेन सह तटादेः सम्बन्धः, ततः साक्षात् सम्बन्धाभावात् तत्रार्थे गङ्गादिशब्दस्य अमुख्यता—इति चेन्न । साक्षात्सम्बन्धस्तावत् न शब्दानां केनाप्यस्ति, गुणत्वात् । समवायस्तु व्योम्नैव[5] । सङ्केतस्तु साक्षादेवास्ति, तटादिप्रत्यायकत्वात् । न हि सम्बद्धसम्बन्धात् भूतलशब्दात् तत्स्थेषु वृक्षादिषु प्रतीतिः स्यात् । स्याद्वा सम्बद्धसम्बन्धात्[6] प्रतीतिः, तथाऽपि नामुख्यता, विशिष्टज्ञानकारित्वात् । न हि इन्द्रियं सम्बद्ध[7]सम्बन्धात् गुणादौ विशिष्टं ज्ञानं कुर्वत् गौणम् ।[8] अविशिष्टज्ञानकारित्वे तु शब्दस्य अप्रयोज्यतैव । उच्यते—लोकादेव च शब्दार्थानां मुख्यामुख्यत्वम् । सङ्केतित एवार्थे केनचिन्निमित्तेन प्रवर्तमानो मुख्यः शब्दः, केनचित् भाक्तः, इति । यथा एकस्मिन्नेव पर्वते[9]—भूधरोऽस्तीत्यादिः क्रियाशब्दः, पर्वतः इत्यादिः जातिशब्दः । तदेवं निमित्तभेदात् शब्दानां संज्ञाः भिद्यन्ते ॥

---

1 बलाधिक्यं प्रयोजनम् । 2 तत्कर्मकारित्वरूपात् सम्बन्धात् । कौशलातिशयधीः प्रयोजनम् । 3 'वृक्षादिवत्'—इति नास्ति–ग. 4 'अथ' इति नास्ति–ग. 5 'व्योम्न्येव'–ग. 6 'सम्बद्धात्'–ग. 7 'इन्द्रियसम्बद्ध'–घ. 8 'न गौणम्'–घ. 9 'पर्वते' इति नास्ति–ग.

## सङ्केतः

एवं एक एव शब्दः समयापेक्षया विशिष्टज्ञानजनकत्वाविशेषेऽपि[1] क्वाप्यर्थे पारिभाषिकः, क्वापि नैमित्तिकः। यथा—आकाशशब्दः व्योमा-लोकयोः। समयोऽपि द्वेधा—साधारणासाधारणत्वेन। तत्र यः सर्वलोकशास्त्रे व्यवहारहेतुः स पूर्वः। यथा वृद्धिशब्देन अधिकीभाव उच्यते। यस्तु न सर्वस्मिन् लोके शास्त्रे वा तथा,[2] स द्वितीयः। यथा वृद्धिशब्देन आदैदौतः उच्यन्ते।[3] लोकेऽपि च गवाद्यर्थेषु व्यवहाराय गङ्गाचन्द्रिकेत्यादि-शब्दः अपूर्वः[4] सङ्केत्यते। तत्र असाधारणसमयापेक्षी शब्दः यत्र यत्र सङ्केतितः तत्र तत्र तथा अर्थप्रत्यायकः सन् मुख्यः। साधारणसमयापेक्ष्यपि यो जात्यादिनिमित्तेन संमितः सः तन्निमित्तयोगिष्वर्थेषु मुख्य एव। निर्निमित्तोऽपि व्योमादिशब्दः यत्रार्थे परिभाषितः तत्रार्थे मुख्य एव। यस्तु सामीप्यादिनिमित्तेन सङ्केतितः सः सर्वलोकशास्त्रेषु भाक्तः प्रसिद्धः इति सर्वं शुभम्॥

तथा गङ्गादिशब्देभ्यः प्रवाहाद्यर्थप्रतीतिपूर्वं सामीप्यादिहेतुना विवेकतः तटादिधीः। रजतमित्यत्र तु इदंशब्दामृष्टशुक्तिमविविच्यैव रजतधीः। तेनात्र भ्रान्तिः। पूर्वत्र तु नैवम्। एतेन "अतस्मिंस्तदिति ज्ञानं भ्रान्तम्।" इति न्यायात् अगङ्गादौ तटादौ गङ्गादिज्ञानं भ्रान्तम्, तद्धेतुश्च शब्दः न प्रयोगार्हः इति प्रश्नस्यानवकाशः। एवं च तस्मिंस्तदिति अभ्रान्तज्ञानहेतुः शब्दः मुख्यः इति॥

---

1 'पेक्षाविशिष्टज्ञानजनकत्वेऽपि'–घ. 2 'तथा' इति नास्ति'–घ. 3 'वृद्धिरादैच्' (पा. सू. १-१-१.) इति सूत्रे इत्यर्थः। 4 'अपूर्वः' इति नास्ति–ग.

# लक्षणा तेन षड्विधा ॥ १२ ॥

आद्य[1]भेदाभ्यां सह[2] ॥ १२ ॥

---

## सङ्केतः

**तेनेति** उपसंहारे । आद्यभेदाभ्यां सह सङ्कलनेन षोढा । संक्षेपेणैवात्र लक्षणाविचारः कृतः । विस्तरेण तु मुकुलादिविरचिताभिधामातृकादिग्रन्थेभ्यः ज्ञेयः ॥ १२ ॥

## मधुमती

उपसंहरति—**लक्षणा तेनेति** । ननु प्रयोजनसाहित्येऽपि व्यङ्ग्यस्य असाहित्यात्, आरोपाध्यवसानयोः चतुःष्ट्वात् कथं षट्त्वं ? अतस्तदुपपादयति—**आद्येति** । तथा च **लक्षणा** प्रयोजनलक्षणेत्यर्थः । तेन रूढिलक्षणाऽन्तर्भावेन सप्तत्वमादाय विरोधः नाशङ्कनीयः ॥ १२ ॥

---

1 'आदि'—क. 2 उपादानलक्षणा—लक्षणलक्षणाभ्यां सहेत्यर्थः । तस्याः इयं सारणी—




इदं सर्वं गूढव्यङ्ग्य—(मुखं विकसित) अगूढव्यङ्ग्य—(श्रीपरिचयात्) भेदेन द्विविधमिति द्वादशविधत्वं, व्यङ्ग्यरहितायाः रूढेः (कर्मणि कुशलः, कलिङ्गः साहसिकः) एकविधत्वमिति आहत्य त्रयोदशविधा लक्षणेति सम्पन्नम् ।

सा च—

**व्यङ्ग्येन रहिता रूढौ**
**सहिता तु प्रयोजने ।**

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ॥

**तच्च गूढमगूढं वा**

तच्चेति व्यङ्ग्यम् ।

---

## मधुमती

सम्प्रति काव्योपयोगितया लक्षणासामान्यं अन्यथा विभजते—**सा चेति** । ननु प्रयोजनसाहित्ये(ऽपि) व्यङ्ग्यसाहित्यं [1] कुतस्त्यमित्यत आह—**प्रयोजनं हीति** । एतद्विभागप्रयोजनं च—रूढिप्रयोजनलक्षणाभ्यामन्या लक्षणैव न विधेया, नेयार्थत्वापातात् इति बोधनं इत्यवधेयम् ॥

**तच्चेति** । एवंच षड्विधायाः प्रत्येकं गूढागूढव्यङ्ग्यत्वमुपपादयता द्वादशविधत्वं रूढिलक्षणया सह त्रयोदशविधत्वमित्यवधेयम् । **गूढत्वं** सहृदयमात्रवेद्यत्वम् । न तु वाच्यव्यङ्ग्ययोः द्रागप्रतीयमानभेदत्वम् । तस्य अस्फुटत्वलक्षणगुणीभूतव्यङ्ग्यान्तर्भूततया लक्षणामूलप्रधानध्वनिविलोपापत्तेः ।

---

1 व्यङ्ग्यसाहित्यनियमः इत्यर्थः ।

गूढं यथा—

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं

---

## सङ्केतः

**मुखमिति**। अत्र **विकसितशब्दः** अचेतने **स्मिते** बाधितस्वार्थः,[1] पुष्पधर्मत्वात् विकासस्य, ततः सच्छवित्व[2]विस्तारित्वसादृश्यात् स्मिते उपचरितः। व्यङ्ग्यं च हृद्यत्वसुगन्धित्वादि। अत्र हि वाच्यस्य विकासस्य अनुपपद्यमानत्वात् अत्यन्ततिरस्कृतवाच्यो लक्षणामूलो ध्वनिः। तथा **वशित**-शब्दः अचेतने **वक्रिमणि** असम्भवत्परतन्त्रस्वार्थः सहचारित्वतन्मुखप्रेक्षित्वादि-सादृश्यात् वक्रिमाणं लक्ष्यति। सर्वथा तदनुसरणं, न कदाऽप्यन्यत्र सद्भावः

## मधुमती

**अगूढत्वं** सहृदयासहृदयवेद्यत्वम्। **मुखमित्यादि**। **विकासो** नाम पुष्प-धर्मः। तेन अतिशयत्वं लक्ष्यते, असङ्कुचितत्वं सम्बन्धः; सौरभातिशयो व्यङ्ग्यः। **वशीकरणं** चेतनधर्मः। तेन स्वाधीनत्वं लक्ष्यते, अभिमतविषये प्रवृत्तिः सम्बन्धः, स्वाधीनं ह्यभिमते प्रवर्तते, 'पुरा मुग्धतया यादृच्छिक-लोचनप्रवृत्तिरासीत्, अधुना तु अभिमतविषयप्रवृत्तिः' इति, तया च[3]

---

1 'शब्दः बाधितव्याकोशात्मस्वार्थः'–ग. 2 'सच्छायत्व'–ग.
3 'प्रवृत्त्या'–ज.

**समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।**
**उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं**

---

## सङ्केतः

इत्यादि ध्वन्यम् । **समुच्छलितशब्देन** सामस्त्योर्ध्वशलन[1]स्वार्थेन अकस्मादधिकीभवनसाम्यात्[2] **विभ्रमं** लक्षयता प्रौढत्वबद्धास्पदत्वसर्वजनस्पृहणीयत्वादि व्यज्यते । **अपास्तशब्देन** अमूर्तमत्याश्रितमर्यादायां अमूर्तायां बाधितापक्षेपणात्मार्थेन स्वत्वनिवृत्तिसादृश्यात् **संस्थां** लक्षयता भूयोस्वीकरणानवलोकनादि व्यङ्ग्यम् । **मुकुलितशब्दः** बाधितकोरकत्वस्वार्थः अभिनवोद्भेदसाम्यात् **स्तनं** लक्षयति । व्यङ्ग्यं च अभिलषणीयत्वचारुत्वास्पदत्वमन्मथसमुद्दीपनत्वादिकम् । **उद्धुरशब्दः** बाधितधुरौन्मुख्यस्वार्थः उन्नतत्वसाम्यात्

## मधुमती

युक्तानुरागित्वं व्यज्यते । **समुच्छलनं** मूर्तधर्मः । तेन बाहुल्यं लक्ष्यते, कार्यकारणभावः सम्बन्धः, बहुलं हि वस्तु समुच्छलति । **गतेः** सकलकामुकमृगवागुरात्वं व्यज्यते । **संस्था** मर्यादा । **तदपासनं** चेतनधर्मः । तेन धीरत्वं लक्ष्यते । कार्यकारणभावः सम्बन्धः, अनुरागातिशयो व्यज्यते । **मुकुलितत्वं** कुसुमधर्मः । तेन काठिन्यं लक्ष्यते । निबिडावयवत्वं सम्बन्धः, आलिङ्गनयोग्यता व्यज्यते । **उद्धुरत्वं** चेतनधर्मः, तेन सातिशयत्वं लक्ष्यते,

---

1 'स्योच्छलनं'–ग.　2 'भवन् साम्यात्'–घ.

बतेन्दुवदनामणौ तरुणिमोद्गमो मोदते[1] ॥ ९ ॥

---

## सङ्केतः

**अंसबन्धवज्जघनं** लक्षयति । पीनत्वस्मरनिकेतनत्वादिव्यङ्ग्यम् । **इन्दुवदना** इत्यत्र यदोपचारः तदा इन्दुशब्दः बाधितस्वार्थः सुवृत्तत्वादिसाम्यात् वदनं लक्षयन् स्मरगरविधुरीकृतत्रिभुवनजीवयितृत्वादिकं ध्वनयति । उद्गमशब्दः बाधितोन्नयात्मस्वार्थः नवोद्भेदसाम्यात् तारुण्यं लक्षयन् सर्वजनाह्लादकत्वं व्यनक्ति । **मोदतेशब्दः** बाधितहर्षात्मकस्वार्थः अर्थावि[2]तर्दकत्वादिसादृश्यात् **उद्गमं** लक्षयन् उच्छृङ्खलत्वाभिलषणीयत्वप्रभृति व्यनक्ति ॥

यथा वा—

गअणं च मत्तमेहं धारालुलिअज्जुणाइ अ वणाइम् ।
णिरहङ्कारमिअंका हरन्ति नीलाओ वि णिसाओ ॥[3]

'च' शब्दः अप्यर्थे । न केवलं खं सतारं, मत्तमेघमपि । न केवलं

## मधुमती

कार्यकारणभावः सम्बन्धः, रमणीयत्वं व्यज्यते । **मोदनं** चेतनधर्मः । तेन अनियन्त्रितत्वं लक्ष्यते, कार्यकारणभावः सम्बन्धः, स्पृहणीयत्वं व्यज्यते ॥

---

1 कश्चित् युवा काञ्चन युवतिमालोक्य वर्णयति—मुखमित्यादिना । इन्दुवदनायास्तरुण्याः शरीरे तारुण्यस्याविर्भावः अतीवोत्कर्षं प्राप्तः—यथा—मुखं प्रसृतमन्दस्मितम्, अवलोकनं स्वेच्छया तिर्यग्गामि, गमनं अतिशयितहावभावविशिष्टम्, विविधविषयजालसंचारिणी धीः, मुकुलाकारस्तनयुगलालङ्कृतं उरः, ऊरुमूलभागोऽपि दृढबन्धेन अत्युत्तमरतियोग्यं सम्पन्नमिति । अत्र च व्यङ्ग्यार्थाः केवलं काव्यवासनापरिपक्वबुद्धेरेव भासन्ते इति गूढत्वम् । (शार्ङ्गधरपद्धतौ ३-२-७७). 2 'स्वार्थः अवि'–ग. 3 (गौडवहो–406) गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि । निरहङ्कारमृगाङ्काः हरन्ति नीला अपि निशाः ॥ इति च्छाया । 'णीला उवि णिसाउ'–घ.

## सङ्केतः

मलयान्दोलिताऽऽम्राणि वनानि, धारालुलितार्जुनान्यपि। न केवलं शशिसिताः निशाः, निरहङ्कारमृगाङ्काः नीला अपि हरन्ति—उत्सुकयन्तीत्यर्थः। अत्र मत्तशब्दः बाधितक्षीबात्मकस्वार्थः मर्यादोल्लङ्घनसादृश्यात् मेघान् लक्षयन् असमञ्जसकारित्वदुर्निवारत्वादि ध्वनयति। निरहङ्कारशब्दोऽपि विच्छायतासादृश्यात् चन्द्रं लक्षयन् तत्पारतन्त्र्यजीवन्मृतप्रायत्वाकिञ्चित्करत्वसदविद्यमानत्वादि व्यनक्ति इति लोचनकारः।[1] वक्रोक्तिकारोऽपि—

> तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
> 　　प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च।
> दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलतां
> 　　अहो! सारङ्गाक्ष्याः तरुणिमनि गाढः परिचयः॥[2]

इत्यत्र सादृश्योपचारमूचे। यथा चोपचारः तथा वक्रोक्तिजीवितात् ज्ञेयः। पूर्वग्रन्था[3]नुसारेण सादृश्यलक्षणेयं अभिहिता। यावता तु लक्षित[4]लक्षणाऽपि स्यात्। तथाहि—**विकसित**शब्दः **स्मित**विशेषणत्वानुपपत्त्या बाधितार्थः स्वसहचारिणां सच्छायत्वविस्तृतसुरभित्वादीनां एकस्य कस्यचित् विशेषणतासिद्धये स्वार्थमर्पयति। ततः सच्छायं विस्तृतं सुरभि वा **स्मितं** इति लभ्यते। **विकसितं** हि लोकलोचनलोभकं[5] स्यात् इत्यतः लक्ष्यस्य सच्छायत्वादेः लोकाऽऽह्लादित्वं प्रतीयते, तद्द्वारेण च **स्मितस्या**पीति। एवमेवंरीत्या **वशिते**त्यादिष्वपि॥

---

1 (ध्वन्यालोकः २. १.)। 2 (सदुक्तिकर्णामृते–२. ११.) अत्र—समुल्लसद्विमलसौन्दर्यसम्भारसिन्धौ अङ्गानि प्लवमानानि पारप्राप्तिमासादयितुं व्यवस्यन्तीव। स्तनजघनं (कर्तृ) महत्त्वस्य प्रौढिं उन्मीलयतीव। दृशोः विलासोल्लासाः कमपि नवयौवनसमुचितं विभ्रमं अधिरोपयन्तीव। तदेवंविधेनोपचारेण एताः तिस्रोऽपि क्रियाः कामपि पदवीमधिरोपिताः इत्यर्थः। 3 'ग्रन्थकारा'–ग. 4 'यावताऽनुपलक्षित'–घ. 5 'लोलकं'–ग.

अगूढं यथा—

श्रीपरिचयात् जडा अपि भवन्ति
अभिज्ञाः विदग्धचरितानाम् ।
उपदिशति कामिनीनां
यौवनमद एव ललितानि[1] ॥ १० ॥

अत्र उपदिशतीति अनायासेन शिक्षादानं

---

### सङ्केतः

ननु—न लक्षणाबहुत्वं कार्यम् ।[2] शक्यते ह्येकस्यावाचकस्य वाचकवद्भावः कल्पयितुम् । तदिदं दुष्टमिति चेन्न । अहृद्यलक्षणाविषयं वामनीयं कविशिक्षापदमिदं ज्ञेयम्, न हृद्यलक्षणाविषयम् । ननु अहृद्या लक्षणैकाऽपि दुष्टा, सन्तु दूरे बह्व्यः इति चेन्न । एकस्याः अहृद्याया अपि सरसान्यवाक्यसङ्गेन कथञ्चन शक्यते हृद्यता आपादयितुं, बह्वीनां न तथेति ॥

अत्र उपदिशतीति । अगूढव्यङ्ग्यव्यञ्जकं पदमिदम् । तथाहि—यौवनमदस्य अचेतनत्वात् उपदेशेन बाधितस्वार्थेन वक्रप्रेक्षणादिव्यवस्था-

### मधुमती

अतिशब्देन अज्ञातज्ञापनं उपदेशः । स च प्रकृते बाधित इति अज्ञातज्ञापनसामान्यं लक्ष्यते इत्यर्थः । अनायासेनेति । शिक्षायाः आदानं अनायासेनैव निर्व्यूढमिति व्यङ्ग्यं अतिस्फुटमित्यर्थः । इयं च

---

1 विदग्धाः—चतुराः । ललितानि—सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् । अनाचार्योपदिष्टं स्यात् ललितं रतिचेष्टितम् । इत्युक्तलक्षणानि । (रविगुप्तकृतसुभाषितसंग्रहे) । 2 अत्र 'न तद्बाहुल्यमेकत्र' इति काव्यालङ्कारसूत्रं अनुसन्धेयम् । (५-१-१६) तेषां लाक्षणिकशब्दानां बाहुल्यं आधिक्यं नैकत्र वाक्ये प्रयोज्यं इति एतत्सूत्रार्थः । 3 'शिक्षया दानं'- ज.

अभिधेयवत् स्फुटं प्रतीयते ॥

**तदेषा कथिता त्रिधा ॥ १३ ॥**

अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढव्यङ्ग्या च ॥ १३ ॥[1]

**तद्भूः लाक्षणिकः ।**

शब्दः इति संबध्यते[2] । तद्भूः—तदाश्रयः ।[3]

---

### सङ्केतः

ज्ञापकत्वादि[4]साम्यात् मदं लक्षयता **अप्रयासेन शिक्षादानं** वस्तुव्यङ्ग्यं **अभिधेयवदतिस्फुटतया प्रतीयते** । तेन अत्र अगूढनामा गुणीभूतव्यङ्ग्य-भेदः । एवं यत्र झटित्येव व्यङ्ग्यस्य प्रतीतिः तत्र अगूढत्वम् । यत्र तु अशब्दान्तरवाच्यस्य तस्यैव निधानवद्गूढत्वेन प्रतीतिः तत्र गूढत्वम्[5] ॥१३॥

मुख्यार्थबाधादिसहचार्यपेक्षा[6] अर्थभासनशक्तिः लक्षणाशक्तिः । तदाश्रयं लाक्षणिकं शब्दं वदन्तीत्याह—**तद्भूरिति** ।

### मधुमती

प्रबन्धनायकप्रश्नानन्तरं नायिकामध्यापयतः **नाथोपाध्यायस्योक्तिः** । अत्र च अगूढव्यङ्ग्यं तु गुणीभूतव्यङ्ग्यत्वात् अधमम्[7], गूढव्यङ्ग्यं तु उत्तममिति विवेकः॥

त्रयोदशविधामपि विवक्षाविशेषेण सङ्कलयति—**तदेषेति ॥ १३ ॥**

लक्षणां निरूप्य तद्द्वारकं लाक्षणिकशब्दस्वरूपमाह—**तद्भूरिति ।** लक्षणाजनकत्वं शब्दे बाधितमिति अन्यथा व्याचष्टे—**तदाश्रय इति ।**

---

1 आहत्य त्रयोदशविधेति पूर्वं पङ्क्तिका कृता । 2 स्याद्वाचको लाक्षणिकः शब्दः इति सूत्रस्थः इति शेषः । 3 ततो भवति इति व्युत्पत्तिभ्रमवारणाय एवमुक्तम् । तस्याः लक्षणायाः अधिष्ठानमित्यर्थः । 4 'व्यवस्थापकादि'–ग. 5 व्यङ्ग्यस्येत्यारभ्य एतत्पर्यन्तं–घ. पुस्तके नास्ति । 6 'सहकार्यपेक्षा'–ग. 7 'अगूढव्यङ्ग्ये गुणीभूत-व्यङ्ग्यत्वं ध्रुवम्'–ज.

तत्र व्यापारो व्यञ्जनात्मकः ॥[1]

कुत इत्यत आह[2]—

यस्य प्रतीतिमाधातुं
लक्षणा समुपास्यते ।

---

### सङ्केतः

तत्र व्यापार इति । तत्र—प्रयोजने गूढागूढे व्यञ्जनात्मा व्यापारः । तत्र इति विषयसप्तमी । तेन सः[3] शब्दस्य व्यङ्ग्यविषये व्यञ्जनव्यापार इत्युक्तं स्यात् ॥

यस्येति । प्रयोजनभूतफलावगमस्य सुखसम्पत्तये हि स लक्षणा-

### मधुमती

एतावन्मात्रं वाचकत्वादिदशायामप्यस्ति, तथाऽपि यदा लक्षणया प्रतिपादकत्वं तदा तत्त्वमित्यत्र तात्पर्यम् ॥

सम्प्रति व्यञ्जकशब्दं निरूपयितुं व्यञ्जनां विवेचयति—तत्रेति ॥[4]

यस्येति । न हि 'गङ्गातीरे घोषः' इति वक्तुं प्रतिपादको न

---

1 क्रमशः प्राप्ता व्यञ्जना शब्दनिष्ठा अर्थनिष्ठा चेति द्विविधा । आद्या च लक्षणामूला अभिधामूला इति द्विविधा । तत्र आद्यां निरूपयति—तत्रेत्यादिना । तत्र=लाक्षणिके=लक्षणामूलप्रयोजनव्यञ्जके । व्यङ्ग्यप्रकाशानुकूला वृत्तिः—व्यापारः । तत्र—फले प्रतिपाद्ये इति वा अर्थः । 2 ननु लक्षणास्थले फलमेव नावश्यकम्, आवश्यकत्वेऽपि अनुमानादेव निर्वाहोऽस्तु इत्याशङ्कायां प्रतिज्ञामात्रेण वस्तुसिद्धेर-भावात् उपपत्तिभिः व्यञ्जनां साधयितुमुपक्रमते कुत इत्यादिना । 'इत्याह'—क. 3 'सः' इति नास्ति—घ. 4 इदं च व्यञ्जनायाः न लक्षणपरं वचनम् । उक्तफल-प्रतीत्यनुकूललाक्षणिकशब्दगतव्यापारत्वस्य अभिधामूलव्यञ्जनायां अर्थगतव्यञ्जनायां च अव्याप्तेः । किं तु केवलं व्यञ्जनासद्भावप्रदर्शनपरम् । यदि व्यञ्जनैव नाङ्गीक्रियेत तदा लाक्षणिकस्थले फलप्रतीतिरेव न स्यादिति ।

**फले शब्दैकगम्येऽत्र**
**व्यञ्जनान्नापरा क्रिया[1] ॥ १४ ॥**

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्द-प्रयोगः[2] तत्र नान्यतः तत्प्रतीतिः[3]। अपि तु तस्मादेव शब्दात्। न चात्र[4] व्यञ्जनादृते अन्यो व्यापारः ॥१४॥

---

## सङ्केतः

शब्दः[5] तस्मिन् अमुख्येऽर्थे प्रयुज्यते। यदि च 'सिंहो माणवकः' इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य,[6] किमर्थं तस्य प्रयोगः? **गम्ये** इति ण्यन्तो निर्देशः। शब्दावगमयितव्ये इत्यर्थः। **नान्यतः इति**। अभिधा[7]लक्षणाव्यापारात्। **शब्दादिति**। गङ्गादेः ॥ १४ ॥

## मधुमती

जानाति, न वा तत्प्रयोगे प्रकृतार्थप्रतीतिरेव न भवति, येनैवं लक्षणां कुर्यात्, ऋते प्रयोजनप्रत्ययादिति भावः। ननु अस्त्वनुमानादेव तत्प्रतीतिः, अत आह—**शब्दैकगम्ये इति**। व्याप्त्यप्रतिसन्धानेऽपि ज्ञायमानत्वादिति भावः। **क्रियापदं** व्याचष्टे—**व्यापार इति** ॥ १४ ॥

---

1 आधातुं—जनयितुम्। समुपास्यते—आश्रीयते। व्यञ्जनात्—व्यञ्जना-व्यापारं विना। 2 अन्यथा स्वायत्ते शब्दप्रयोगे अवाचकप्रयोगस्य अनुपपन्नत्वापत्तेः इति भावः। 3 व्याप्तिप्रतिसंधानादिविलम्बेन विलम्बितत्वादनुमानस्य न तद्गम्यं प्रयोजनम्। किन्तु सम्भृतसामग्रीकात् शब्दादेवेत्यर्थः। 'तत्प्रतिपत्तिः'—क. 4 'न च'—क. 5 लाक्षणिकः शब्दः इत्यर्थः। 6 प्रतीतिमेव न जनयेत् तर्हि इत्यर्थः। 7 'अभिधान'—ग.

तथाहि—

**नाभिधा समयाभावात् ।**

'गङ्गायां घोषः' इत्यादौ ये[1] पावनत्वादयो धर्माः तटादौ[2] प्रतीयन्ते न तत्र गङ्गादिशब्दाः सङ्केतिताः ॥[3]

**हेत्वभावान्न लक्षणा ॥ १५ ॥**

मुख्यार्थबाधादित्रयं हेतुः ॥ १५ ॥

---

## मधुमती

ननु प्रयोजनस्य शाब्दत्वेऽपि अभिधया लक्षणया वा लाभोऽस्तु, कृतं व्यञ्जनया इत्यत आह—**नाभिधेति** । उपलक्षणमिदम्—पदार्थसंसर्गाभिन्नतया अग्रे दूष्यत्वाच्च न तात्पर्यमित्यपि द्रष्टव्यम् । तेन 'ते च अभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः'[4] इत्यादाय नोपक्रमोपसंहारयोः विरोधः इति मन्तव्यम् । **समयाभावादिति** । साक्षादाप्ताभिप्रायः सङ्केतः प्रयोजने गङ्गादिशब्दानां नास्ति । न च कल्पयितुमपि शक्यते, अन्यलभ्यत्वात्, सङ्केतितार्थस्य च अभिधया प्रतिपादनादिति भावः ॥ १५ ॥

**तथाचेति** । तथाहीत्यर्थः । अव्ययानामनेकार्थत्वात् । क्वचित् '**तथाहि**' इत्येव पाठः । लक्षणया हि प्रयोजनप्रतीतिः लक्ष्यप्रतिपत्त्यनन्तरं,

---

1 'ये' इति नास्ति–क. 2 'तीरादौ'–क. 3 तथाच पावनत्वादौ प्रयोजने साक्षादाप्ताभिप्रायविषयत्वाभावात् साक्षात्सङ्केतितार्थप्रतीत्यनुकूलव्यापाररूपाभिधा तत्र न व्यापारीभवितुमर्हतीति भावः । 4 (का. प्र. १८) ।

तथा च—[1]

**लक्ष्यं न मुख्यं, नाप्यत्र**
**बाधो,[2] योगः फलेन नो ।**
**न प्रयोजनमेतस्मिन्**

---

### सङ्केतः

लक्ष्यं न मुख्यमिति । यदि हि लक्षणाव्यापारगम्यं प्रयोजनमिष्यते तदा लक्ष्यं तटं तावत् मुख्यं **न** भवति । न च तटस्य मुख्यार्थस्य **बाधः,** घोषाधारत्वोपपत्तेः । न वा पावनत्वाद्यैः लक्ष्यैः सम्बन्धः । (प्रत्युत विष्ठास्थिप्रभृत्यपवित्रपदार्थयोग एव । [3]) न च प्रयोजने **प्रयोजनान्तरमस्ति** । तथा

### मधुमती

तत्समकालं वा ? आद्ये—**लक्ष्यं न मुख्यमिति** । ननु मा भूत् तटं मुख्योऽर्थः, रूढिलक्षणानुरोधेन ज्ञाप्यमात्रम् । बाध एव च लक्षणाबीजं स्यात् इत्यत आह—**नाप्यत्रेति** । ननु मा भूत् बाधः, तात्पर्यानुपपत्त्या वा लक्षणा स्यादित्यत आह—**योग इति** । ननु तीराद्यैः प्रयोजनस्य साक्षात् सम्बन्धाभावेऽपि प्रयोजनाश्रयसम्बन्धित्वं परम्परासम्बन्धः अस्त्येवेति मूलयुक्तिमाह—**न प्रयोजनमिति** ॥

---

1 हेत्वभावमेव विशदयति तथाचेत्यादिना 'तथाहि'-ख. 2 'बाधा'-क.
3 'प्रत्युते'त्यादिवाक्यं नास्ति-ग.

## न च शब्दः स्खलद्गतिः[6] ॥ १६ ॥

---

### सङ्केतः

तत्र प्रयोजने व्यङ्ग्ये शब्दः न स्खलद्गतिः—प्रतिपादयितुमसमर्थः। **स्खलन्ती**—बाधकव्यापारेण विधुरीक्रियमाणा **गतिः** अवबोधनशक्तिः यस्य शब्दस्य, तद्व्यापारो हि लक्षणा इति ॥

न हि प्रयोजनमवगमयतः तटवृत्ते गङ्गाशब्दस्य बाधकयोगः। यदि च प्रयोजने अवगम्ये स्खलद्गतित्वं—तत् तस्य प्रयोगे दुष्टतैव स्यात् इत्याह—

---

6 अयं भावः—लक्षणायां हि हेतुः मुख्यार्थबाधः, मुख्येन सह लक्ष्यस्य सम्बन्धः, प्रयोजनं चेति त्रयमित्युक्तम्। प्रकृते च—लक्षणया फलप्रतीतिः प्रथमं लक्षणया तीरादिरूपलक्ष्यप्रतीत्यनन्तरं वा, लक्ष्यसमकालमेव विशिष्टलक्षणया वा इति विकल्प्य, द्वितीयपक्षं 'प्रयोजनविशिष्टस्ये'त्यादिना दूषयिष्यन् प्रथमं तावद् दूषयति—लक्ष्यमित्यादिना। पूर्वं प्रतीतेऽर्थे बाधं विना लक्षणान्तरस्य अप्रवृत्तेः तीरे च बाधाभावात् नाद्यः पक्षः। कथंचित् तीरे बाधोपपादनेऽपि नायमर्थो मुख्यः। ननु ज्ञाप्यार्थबाध एव लक्षणाबीजमिति चेत् नाप्यत्र तस्यापि बाधः। ननु न बाध एव लक्षणाबीजं, किन्तु तात्पर्यानुपपत्तिश्चेति चेत् तथापि स्रोतःसंबन्धिनां पावनत्वादीनां फलानां लक्ष्यार्थतीरसंबन्धित्वमेव नास्तीत्युच्यते। नच परम्परासम्बन्धेनोपपादनं युज्यते, तथापि लक्ष्यस्य फलस्य प्रयोजनान्तराभावात्। किं च गङ्गादिशब्दः सकृत् लक्षणया तीरं प्रतिपाद्य पुनश्च लक्षणया फलं प्रतिपादयितुं न समर्थः। शब्दो हि लोके न विरम्यव्यापारवान् भवतीति। तथा शब्दः फलविषयकबोधनसामर्थ्यहीनश्च नैव भवति इति ॥

यथा गङ्गाशब्दः स्रोतसि सबाधः इति तटं लक्षयति, तद्वत् यदि तटेऽपि[1] सबाधः स्यात् तत्प्रयोजनं लक्षयेत्। न च तटं मुख्योऽर्थः। नाप्यत्र बाधः[2]। न च गङ्गाशब्दार्थस्य[3] तटस्य पावनत्वाद्यैः लक्षणीयैः सम्बन्धः। नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्[4]। नापि गङ्गाशब्दः तटमिव प्रयोजनं प्रतिपादयितुं असमर्थः ॥ १६ ॥[5]

---

## सङ्केतः

नापि गङ्गाशब्द इति। यथा तटस्य प्रयोजने प्रतिपाद्ये असामर्थ्यं[6] न तथा गङ्गाशब्दस्य। तस्मात् अभिधालक्षणाभ्यामन्यः तच्छक्तिद्वयोपजनितार्थावगमपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिः ध्वननात्मा व्यापारः। तेन यत् केनचित् लक्षितलक्षणेति नाम कृतं, तत् व्यसनमात्रम् ॥ १६ ॥

## मधुमती

तदेतद् वृत्तिकारो व्याचष्टे—यथा गङ्गाशब्द इति। सिद्धमर्थं उपसंहरति—नापि गङ्गाशब्दः इति। तथा च गङ्गाशब्देन लक्षणया

---

1 'अपि' इति नास्ति—क. 2 'बाधा'—क. 3 लक्ष्यार्थस्येत्यर्थः। 4 इदं चिन्त्यम्। परमप्रयोजनस्य अनेकावान्तरप्रयोजननान्तरीयकत्वात्, वस्तुतत्त्वानुरोधेन परिचिन्तानादशायां अनवस्थादिभयस्य अप्रयोजकत्वात्। वस्तुतस्तु लक्षणागम्यमिति शेषः। व्यञ्जनागम्यत्वे इष्टत्वात्। 5 'समर्थः'—ख. 6 'सामर्थ्यं'—ग.

## एवमप्यनवस्था स्यात्
## या मूलक्षयकारिणी ॥[1]

एवमपि[2] प्रयोजनं चेल्लक्ष्यते, तत् प्रयोजनान्तरेण, तदपि प्रयोजनान्तरेण, इति प्रकृताप्रतीतिकृत् अनवस्था भवेत् ॥[3]

---

### सङ्केतः

तथाभावे च प्रयोजने लक्ष्ये प्रयोजनान्तरान्वेषणेन अनवस्थानात् अतिप्रसक्तिः। ततश्च मूलक्षतिः इत्याह—एवमपीति।

### मधुमती

यथा तटं प्रतिपाद्यते न तथा प्रयोजनम्, विरम्य व्यापाराभावादिति भावः। कचित्तु 'प्रयोजनं प्रतिपादयितुमसमर्थः' इति पाठः। तत्र यथा लक्षणया तटं प्रतिपादयितुं गङ्गाशब्दः नासमर्थः तथा प्रयोजनमपि। तथा च लक्ष्यप्रयोजनयोः न क्रमिकता स्यादित्यर्थः ॥ १६ ॥

ननु प्रयोजनेऽपि लक्ष्यं प्रयोजनान्तरं स्यात्, अतः न सामग्र्यभावः इत्यत आह—एवमपीति। **प्रकृताप्रतीतिकृत्** इति **मूलक्षयकारिणी** इत्यस्य विवरणम् ॥

---

1 'क्षतिकारिणी'—ख. 2 'एवमपीति'—ख. 3 प्रकृतस्य—तीरादेः पावनत्वादेर्वा अप्रतीतिकारिणी अनवस्था स्यादित्यर्थः। अपर्यवसितप्रयोजनान्वेषणप्रवृत्त्या पूर्वपूर्वलक्षणानिवृत्तेरिति भावः। तथा च 'मूलक्षतिकरीमेवाहुरनवस्थां दूषणं विदुः। न तु बीजाङ्कुरन्याये' इत्युक्तम्।

ननु[1]—पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते, 'गङ्गायाः तटे घोषः' इत्यतोऽधिकस्यार्थस्य प्रतिपत्तिश्च प्रयोजनम् इति विशिष्टे लक्षणा[2]। तत् किं व्यञ्जनया[3]? इत्याह—

**प्रयोजनेन सहितं**
**लक्षणीयं न युज्यते ॥१७॥**

---

### सङ्केतः

प्रतिपत्तिश्चेति। एषाऽपि लक्षणाव्यापारविषया ॥ १७ ॥

### मधुमती

द्वितीयं पक्षमाशङ्क्य निराचष्टे[4]—**प्रयोजनेनेति**। शब्दव्यापार-विशेषलक्षणाजन्यज्ञानस्य ज्ञानरूपलक्षणाया वा प्रयोजनमिह निरूप्यते। तत्र प्रथमे—व्यापारो विषयनिष्ठः, न तु प्रयोजननिष्ठः। तदात्वे च तस्य लक्षणाजन्यज्ञानविषयत्वे तदतिरिक्तफलाभ्युपगमे अनवस्थायां पर्यवसानम्। तस्मात् फलत्वविषयत्वयोः विरोधात् न फलमपि विषयः। विषयत्वे वा न तत् फलम्। किन्तु तद्भिन्नम्। न चात्र प्रयोजनान्तरमस्ति। तदभ्युपगमे वा अनवस्थेत्युक्तमेव। अन्यथा 'पावने तीरे घोषः प्रतिवसति' इत्यभि-धानादविशेषप्राप्तौ लक्षणैव न स्यात्। न च व्यञ्जनया तदुपस्थितावप्येषोऽनु-योगः। स्रोतोवृत्तिपावनत्वातिशयप्रतीतेः व्यञ्जनासाध्यत्वात्। लक्षणायाः ज्ञानरूपत्वे तु स्फुट एव फलविषययोः भेदः ॥

---

1 लक्ष्यसमकालमेव विशिष्टलक्षणा स्यादिति द्वितीयं पक्षं दूषयति नन्वित्यादिना। इत्यतः—इति प्रयोगापेक्षया इत्यर्थः। विशिष्टे—पावनत्वादिविशिष्टे। 2 'विशिष्ट-लक्षणा'–क. 3 'व्यञ्जनेन'–क. 4 'व्याचष्टे'–च.

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः**
**फलमन्यदुदाहृतम् ।**

प्रत्यक्षादेर्हि[1] नीलादि विषयः, फलं तु प्रकटता संवित्तिर्वा[2] ॥

---

### सङ्केतः

**फलमिति ।** प्रकटत्वं भट्टमते । संवित्तिः प्राभाकरे । प्रकटत्वं वस्तुनो धर्मः संवित्तिस्तु आत्मनः । यथा आत्मना स्वमहत्त्वेन व्याप्तं शरीरमेव

### मधुमती

**यद्यपि** फलत्वं जन्यत्वं यदि, तदा प्रकृतासङ्गतिः । पावनत्वादेः एतदजन्यत्वात् । ज्ञाप्यत्वं च प्रकटतादावसम्भवि । तयोः प्रत्यक्षजन्यत्वात् । तथापि जन्यत्वमेव फलत्वम् । शैत्यपावनत्वादिप्रतीतेरेव प्रकृते फलत्वात् । तस्याश्च तज्जन्यत्वात् । **नचैवं** पावनत्वादौ फलत्वाभिधानविरोधः । प्रयोजनज्ञानविषयतया तस्यापि प्रयोजनत्वात् । शक्यज्ञानविषयतया घटादेः शक्यत्ववत् ॥

---

1 'हि' इति नास्ति—क. 2 'अयं घटः' इत्यादिप्रत्यक्षज्ञानस्य हि विषयभूतात् घटादेः अन्यदेव ज्ञातताख्यं घटादिविषयगतं प्राकट्यं फलं, 'ज्ञातो घटः' इति प्रत्ययात् इति भाट्टाः । विषयादन्यैव 'घटमहं जानामि' इति प्रत्ययरूपा अनुव्यवसायापरपर्याया हानोपादानादिसंवित्तिः फलमिति नैयायिकाः । तथा च लाक्षणिकशब्दजन्यज्ञानस्यापि स्वविषयभिन्नमेव फलं वाच्यम् । तच्च फलविशिष्टलक्षणायां न संभवति । पावनत्वादेरपि शब्दजन्यज्ञानविषयत्वापत्त्या तद्भिन्नत्वाभावादिति भावः । अन्यः—ज्ञानादन्यः । तत्र संवित्तिः ज्ञातृधर्मः, प्रकटता ज्ञेयधर्मः ।

विशिष्टे लक्षणा नैवम् ।

निगदेन व्याख्यातम् ।[1]

विशेषाः स्युस्तु लक्षिते ॥१८॥

लक्षिते—तटादौ ये[2] विशेषाः—पावनत्वादयः ते च अभिधातात्पर्यलक्षणाभ्यः व्यापारान्तरेण गम्याः । तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यं[3] अवश्यमेषितव्यम् ॥

---

## सङ्केतः

जीवदिति[4] व्यपदिश्यते न घटादि, तथा ध्वनिनाऽपि गुणालङ्कारचारुशब्दार्थावेव व्याप्तौ काव्यमिति व्यपदेश्यौ, न निर्गुणालङ्कारौ । तेन 'गौर्वाहीकः' इत्यादौ सव्यङ्ग्यत्वेऽपि न काव्यता ॥

## मधुमती

कथं तर्हि पावनत्वादिप्रतीतिः अत आह—**विशेषाः इति** । **तटादाविति लक्षिते** इत्यस्य व्याख्यानम् । **स्युरिति** । प्रतीतिविषयाः इति शेषः ॥

**इदमिदानीं विचारमर्हति**—तद्व्यञ्जनयाऽपि प्रयोजनप्रतीतिः लक्ष्यप्रतीतिसमकालं, उत्तरकालं वेति । आद्ये—पदार्थज्ञानं विना शब्दमात्रस्य अव्यञ्जकत्वात् सहकारिविरहात्, अन्त्ये—शब्दबुद्धिकर्मणां विरम्य व्यापाराभावाच्चेति । उच्यते—लक्ष्योपस्थित्यनन्तरं व्यञ्जनया वाक्यैकवाक्यत्तावत्

---

1 'निगदेन' इति नास्ति–क. 'निगदव्याख्यातम्'–घ. 2 'लक्षिते' इति 'ये' इति च नास्ति–ग. 3 'शब्दैर्वाच्यम्'–क. आदिशब्देन अञ्जनप्रकाशनप्रत्यायनावगमनबोधनसूचनादीनां परिग्रहः । 4 'जीववदिति'–ग.

एवं लक्षणामूलं व्यञ्जकत्वमुक्तम्। अभिधामूलं त्वाह—

**अनेकार्थस्य शब्दस्य**
**वाचकत्वे नियन्त्रिते**
**संयोगाद्यैः अवाच्यार्थ-**

---

**सङ्केतः**

सङ्केतस्य अविशेषेण प्रवृत्तत्वात्[1] अनेकार्थानां नियतार्थाप्रत्यायकत्वे संयोगादिसहितानां नियतार्थ[2]प्रत्यायकत्वं स्यात् इत्याह—**संयोगाद्यैरिति** ॥

**मधुमती**

प्रयोजनमादाय अन्वयबोधसम्भवेन विरामाभावात् व्यङ्ग्यरूपाभिधेयाध्यवसानात् आकाङ्क्षासत्त्वादिति ॥ १८ ॥

**एवमिति**। **यद्यपि** प्राथम्यात् अभिधामूलं प्रथमं वक्तुमर्हति। तथापि तात्पर्यसहकारेण अभिधेयव्यङ्ग्यार्थप्रतीतौ व्यञ्जनायां प्रमाणाभावः इति दुर्दुरूटविप्रतिपत्तिमपनेतुं, लक्षणैव व्यञ्जनायां प्रमाणमित्याविष्कर्तुं व्युत्क्रमोऽयम्। लक्षणायां बाधेन अभिधाविच्छेदात् प्रकारान्तरालभ्यप्रयोजनं विना तदसम्भवाच्च। अभिधानियमनस्थले तु अर्थान्तरप्रतीतिरेव न भवति इत्यपि ब्रूयात्। **अत एव** ध्वनावपि प्रथमं अविवक्षितवाच्यमेव उदाहरिष्यति इति। अभिधामूलमभिधातुं भूमिकामारचयति—**अनेकार्थस्येति**। अत्र—**संयोगाद्यैः वाचकत्वे नियन्त्रिते** इत्यन्वयः। **अवाच्येति**। अवाच्यमिव अवाच्यम्। अगृहीततात्पर्यमिति यावत् ॥

---

1 'व्यक्तत्वात्'–घ. 2 'नियतानां नियतार्थ'–घ.

धीकृद्व्याप्तिरञ्जनम्[1] ॥१९॥

"संयोगो[2] विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे[3] विशेषस्मृतिहेतवः[4] ॥"

---

## मधुमती

संयोगादीन् गणयति—**संयोग इति**। **उक्तदिशा**—उक्तमार्गेण। **वाक्यपदीयकर्तृभर्तृहरिमार्गेणेति** यावत्। एतेन अस्य सूत्रत्वभ्रमं निराकरोति इति **भास्करः**। **विप्रयोगः**—संयोगाभावः विभागो वा। **विरोधः**—वध्यघातकलक्षणः सहानवस्थानं वा। **अर्थः**—प्रयोजनम्। **प्रकरणं**—बुद्धिविशेषः[5]। **लिङ्गं**—चिह्नम्[6]। **शब्दस्य**—नियतार्थस्य। **औचिती**—युक्तता। **व्यक्तिः**—स्त्रीपुंनपुंसकादिः। **स्वरः**—उदात्तादिः। **शब्दार्थस्येति**। अत्र स्मृतिपदेन तत्कार्यं वाक्यार्थानुभवमभिप्रैति। तेन पदात्

---

1 नानार्थस्य हर्यादिशब्दस्य वक्ष्यमाणैः संयोगाद्यैः अर्थान्तरस्मृतिजननप्रतिबन्धेन एकार्थमात्रस्मृतिजनकत्वे कृते सति अर्थान्तरप्रत्ययहेतुः यः व्यापारः सैव व्यञ्जनेत्यर्थः। तथा च अनुभवसिद्धाप्रकृतार्थस्मृत्यन्यथानुपपत्त्या अवश्यं व्यञ्जना अङ्गीकार्येत्यर्थः। एवं च व्यञ्जनायां अर्थापत्तिः प्रमाणं दर्शितं भवति। 2 'संसर्गो'—क. 3 हर्यादिनानार्थशब्दबोध्यस्य सर्वस्याप्यर्थस्य अविशेषेण स्मरणे प्रसक्ते सतीत्यर्थः। 'शब्दस्यार्थव्यवच्छेदे'—ख. 4 विशेषः—विवक्षितप्रकृतार्थविशेषः। अत्र संयोगः—स्ववाच्येष्वर्थेषु एकार्थनिष्ठार्थान्तरसंबन्धः। साहचर्यं—स्ववाच्येष्वर्थेषु एकेन वस्तुना पदार्थान्तरस्य प्रायशः सहचरितत्वम्। सामर्थ्यं—कारणत्वम्। औचिती—अन्वययोग्यत्वम्। (वाक्यपदीये—३१५-१). 5 वक्तृश्रोत्रोरिति शेषः। 6 स्ववाच्यान्तरेभ्यो व्यावृत्तो धर्मः।

इत्युक्तदिशा—

(संयोगात्) 'सशङ्खचक्रो हरिः' (विप्रयोगात्) 'अशङ्खचक्रो हरिः' इत्यच्युते।[1] (साहचर्यात्) 'रामलक्ष्मणौ'-इति दाशरथौ। (विरोधात्) 'रामार्जुनगतिस्तयोः'

---

### सङ्केतः

सशङ्खचक्रः अशङ्खचक्रः इति। अत्र संयोगविप्रयोगाभ्यां विष्णु-

### मधुमती

स्मरणं भवत्येव। वाक्यार्थानुभवस्तु अभिधया तात्पर्यनियमनात् न भवतीति भावः। क्वचित्तु—"शब्दस्यार्थव्यवच्छेदे" इति पाठः। तत्रापि संयोगादयो नानार्थैकार्थान्वयबोधप्रतिबन्धपूर्वकतदितरविशेषान्वयबोधहेतवः इत्यर्थः॥

संयोगविप्रयोगावुदाहरति—**सशङ्खचक्र** इत्यादि। अत्र शङ्खचक्र-संयोगेन **हरिशब्दः अच्युते**—विष्णौ, शङ्खचक्रसंयोगाभावेन च तदन्यस्मिन् नियम्यते इत्यर्थः। यद्यपि इन्द्रादेरपि हरिशब्दवाच्यस्य शङ्खचक्रसंयोगो न विरुद्धः। तथापि तस्य उत्कटत्वात् एतदध्यवसेयम्। क्वचित्तु—"इत्युच्यते" इति वृत्तौ पाठः। युक्तश्चायम्। **रामलक्ष्मणाविति दाशरथौ** इत्यादिसन्दर्शनात्। अत्र पक्षे—**विप्रयोगः** विभागः। एवं च **अशङ्खचक्रः** इत्यस्य शङ्खचक्रविभक्त इत्यर्थः। विभागस्य संयोगसमानाधि-करणतया तत्संयोगस्येव तद्विभागस्यापि विष्णुवृत्तित्वात्। अत एव **विप्रयोग**-शब्दस्य अभाववाचकत्वेऽपि अक्षत एव हरिशब्दाभिधानियमः। प्रसक्ति-पूर्वकत्वात् प्रतिषेधस्य। न ह्यन्यस्य शङ्खादिप्रसक्तिरस्तीति **भास्करः**। **रामार्जुनेति**। अत्र वध्यघातकभावः विरोधः। सहानवस्थाने तु छायाऽऽतपौ

---

1 'हरिरित्युच्यते'—क. यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहि-कपिभेकेषु हरिर्ना कपिले त्रिषु॥ इत्यमरः।

इति भार्गवकार्तवीर्ययोः[1]। (अर्थात्) 'स्थाणुं भज भवच्छिदे' इति हरे[2]। (प्रकरणात्) 'सर्वं जानाति देवः' इति युष्मदर्थे[3]। (लिङ्गात्) 'कुपितो

---

### सङ्केतः

रेवोच्यते। स्थाणुं भजेति। अत्र अर्थात्—प्रयोजनात् शम्भौ। सर्वं जानातीति। अत्र प्रकरणात् युष्मदर्थे। प्रकरणं अशब्दं, अर्थस्तु शब्दवानिति अनयोर्भेदः। कुपितः इति। कोपलक्षणं हि लिङ्गं कामस्य,

### मधुमती

उदाहार्यौ। स्थाणुमिति। भवच्छेदरूपप्रयोजनस्य वृक्षखण्डासाध्यत्वात् स्थाणुः—रुद्रः। सर्वं जानातीति। देवशब्दस्य प्रकरणेन सम्बोध्ये नियमनात् सम्बोध्यस्यैव युष्मदर्थत्वादित्यर्थः। कुपितः इति। अत्र

---

1 रामः पशुविशेषे स्यात् जामदग्न्ये हलायुधे। राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवत्॥ इति विश्वः। 2 स्थाणुर्वा ना ध्रुवः शङ्कुः। स्थाणू रुद्र उमापतिः॥ इत्यमरः। 3 अमरा निर्जरा देवाः। राजा भट्टारको देवः। इत्यमरः। एवं—देवो मेघे सुरे राज्ञि। इति विश्वः।

मकरध्वजः'[1] इति कामे। (अन्यशब्दसंनिधेः) 'देवस्य पुरारातेः'[2] इति शम्भौ। (सामर्थ्यात्) 'मधुना मत्तः कोकिलः'[3] इति वसन्ते। (औचित्यात्) 'पातु वो

---

## सङ्केतः

नाब्धेः। अचेतनत्वात्। देवस्येति। पुरारातेरिति शब्दसन्निधेः देवशब्दः शम्भौ। मधुनेति। वसन्तस्यैव पिकमदजनने सामर्थ्यमिति स एव मधु-

## मधुमती

कोपरूपचिह्नेन मकरध्वजशब्दः मन्मथे नियम्यते इत्यर्थः। वस्तुतः मकरध्वजशब्दस्य कामे प्रसिद्धयैव नियमनम्, न तु कोपरूपचिह्नेन। अत एव "मकरध्वजनियमिते"त्यत्र निहतार्थत्वं वक्ष्यति। मकरध्वजस्येव कोपस्य सकलप्राणिसाधारण्येन अतच्चिह्नत्वाच्च। तस्मात् कुपितत्वेन यावत्कुपितप्राप्तौ मकरध्वजेन चिह्नेन कुपितशब्दः कामदेवे नियम्यते इत्यर्थः। न च— कुपितशब्दः न नानार्थः इति वाच्यम्। अनेकव्यक्त्युपस्थापनसमर्थस्यैव अत्र अनेकार्थत्वेनाभिमतत्वात्। अत एव देवस्य पुरारातेः इत्यत्र अनेकव्यक्त्युपस्थापकतयैव अनेकार्थत्वं वक्ष्यति। व्यञ्जनया च अपानवायुप्रतीतौ अश्लीलत्वं वक्ष्यति। मधुना मत्तः इति। न च अर्थाभेदः। तत्र प्रयोजनेन अर्थनियमनं, अत्र तु कार्येणेति महान् भेदः। अनिष्टस्यापि कार्यत्वात्। यत्र तु हेतुत्वं आर्थं तत्रार्थः, यत्र तत् शाब्दं तत्र सामर्थ्यमिति वा भेदः।

---

1 सिन्धौ कामे च मकरध्वजः॥ इति विश्वः। 2 'अग्निरवमो देवतानां विष्णुः परमः' इति देवशब्दः सर्वदेवतासाधारणः। 3 मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्यात् जीवत्यां तु योषिति॥ इति मेदिनी।

दयितामुखं'[1] इति सांमुख्ये। (देशात्) 'भात्यत्र परमेश्वरः'[2] इति राजधानीरूपदेशात् राजनि। (कालात्) 'चित्रभानुर्विभाति'[3] दिने रवौ,[4] रात्रौ वह्नौ। (व्यक्तेः) 'मित्रं भाति' इति सुहृदि। 'मित्रः भाति' इति रवौ[5]।

---

## सङ्केतः

शब्दवाच्यः। पात्विति। बहुप्रकारं हि रक्षणम्। तदत्र **दयितामुख-मपेक्ष्य** औचित्यात् प्रसादसांमुख्यमेव पालनं नियम्यते॥

## मधुमती

**पात्विति। सांमुख्ये** मुखशब्दः नियम्यते इत्यर्थः। अत्र अभिमुखकामिनी-मुखालम्बनं कामिन एव भवतीत्यौचिती। सैव नियामिकेति द्रष्टव्यम्। **मित्रं भातीति।** एतच्च भातीतिपदसमभिव्याहारात् मित्रमित्यत्र नपुंसकता-निर्णये सति बोद्धव्यम्। अन्यथा द्वितीयैकवचने पुलिङ्गेऽपि सम्भवेन लिङ्ग-सन्देहात्। 'मित्राणि' इत्यत्र तु स्वत एव लिङ्गनिर्णयः इति द्रष्टव्यम्॥

---

1 मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि। संध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्॥ इति मेदिनी। 2 विष्णुः शिवश्च परमेश्वरः॥ इति विश्वः। 3 चित्र-भानुः पुमान् वैश्वानरे चाहस्करेऽपि च। इति मेदिनी। 4 'विराजते इति अह्नि'—क. 5 मित्रं सुहृदि मित्रेऽर्कः। इति अमरशेषः।

**(स्वरात्) 'इन्द्रशत्रुः' इत्यादौ वेदे एव, न काव्ये स्वरः विशेषप्रतीतिकृत्[1] ॥**

## सङ्केतः

**इन्द्रशत्रुरिति** । "इन्द्रशत्रुर्वर्धस्व"[2] इत्यत्र इन्द्रश्चासौ शत्रुश्च इति कर्मधारये "समासस्य"[3] इति सूत्रेण अन्तोदात्तत्वम् । बहुव्रीहौ तु "बहुव्रीहौ प्रकृत्या पूर्वपदम्"[4] इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे इन्द्रशब्दस्य अन्तोदात्तत्वमिति । स्वरः वेदे एव काव्ये न विशेषप्रतीतिकृत् । तथाहि—

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥"[5] इति ॥

## मधुमती

**इन्द्रशत्रुरिति** । अत्र षष्ठीतत्पुरुषे "समासस्य"[3] इत्यनेन अन्तोदात्तः स्वरः । तेन—इन्द्रस्य शमयिता शातयिता वा लभ्यते । यदा तु बहुव्रीहिः तदा "बहुव्रीहौ प्रकृत्या पूर्वपदम्[4] इत्यनेन आद्युदात्तः स्वरः ।

---

1 'वेद इव'—क. 'विशेषप्रतीतिकृत्' इति नास्ति—ख. अत्र स्वरशब्दः प्रसिद्धोदात्तादिस्वरपरः । तेन काकुस्वरादौ न दोषः । 2 (तै. सं. ६-३.१). 3 (पा. सू. ६-१-२२३). 4 (पा. सू. ६-२-१). 5 मननात् त्राणनाच्चैव मन्त्रः इत्युच्यते बुधैः । स्वरतः—उदात्तादिभेदतः । वर्णतः त्रिषष्टिरित्यादिभेदतः । स्वरविशेषधर्मं वर्णविशेषधर्मं च तत्त्वतः अज्ञात्वा प्रयुक्तः मिथ्याप्रयुक्तः । वाग्रूपः अयं वज्रसमो भूत्वा । यथा स्वरतः अपराधात् इन्द्र एव शत्रुहन्ताऽभूदित्यर्थः । (पाणिनीयशिक्षा ५२).

## मधुमती

तेन इन्द्र एव तथा लभ्यते इत्यर्थः। **यद्यपि** काकुरूपस्वरेण काव्येऽपि अर्थविशेपप्रतिलम्भः। तथापि स्वरशब्देनात्र उदात्तादिः विवक्षितः इति भास्करः। वस्तुतस्तु—काकुः, तद्वैशिष्ट्यज्ञानादर्थो वा व्यञ्जक एवेति, न काकुः अभिधानियामिकेति तत्त्वम् ॥

अत्र वदन्ति। 'दृष्टे प्रसीदाधुना'[1] इत्यत्र दृष्टे इति प्लुतकरणेन मयीति व्यवच्छेदेन[2] दृष्टिरूपत्व[3]ग्रहसम्भवात्, प्लुतस्य च उदात्तरूपत्वात्[4] कथं न काव्येऽपि स्वरः विशेषप्रतीतिकृत्। किं च तत्तद्वस्त[5]तत्तत्स्वर-नियमनं च भरतादौ[6] न स्यादिति। **अत्र साम्प्रदायिकाः**—वेद इव इत्यनेन 'यथा वेदे स्वरबाहुल्यं न तथा काव्ये, किन्तु काचित्कं' इति वृत्त्यर्थं व्याचक्षते ॥

**वस्तुतस्तु,** नाभिधानियामकमात्रं वेदोपयोगि च काव्योपयोगि, येन स्वरोऽपि गण्येत।[7] अपि तु यन्नियमितायामभिधायां पुनस्तदर्थस्य सह-कारित्वेन व्यञ्जनया प्रतीतिः तदेव काव्योपयोगि।[8] 'अनेकार्थस्य शब्दस्य' इत्यादिसूत्रस्वरसात्। न च प्लुतेन सम्बुद्धित्व[9]निश्चयात् दृष्टिपरत्वनिर्णयेऽपि कदाचित्तत्र व्यवच्छिन्नस्य मयीत्यादेः प्रतीतिः सम्भवति। दृष्टिदृष्टाशब्दयोः सम्बुद्धौ रूपसाम्येऽपि प्लुतेन अभिधायाः अनियमनात्, उभयसाधारण्यात्।

---

1 'सुभ्रु! त्वं कुपितेत्यपास्तमशनं, त्यक्ताः कथाः योषितां, दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः। रागं रागिणि मुञ्च मय्यवनते दृष्टे! प्रसीदाधुना, सद्यः त्वद्विरहे भवन्ति सुभगे! सर्वाः ममान्धाः दिशः' ॥ इति पूर्णः श्लोकः। (चोरपञ्चाशिका). 2 सप्तम्यन्तत्वभ्रमव्युदासद्वारा मयीत्येतद्विशेषणत्वव्यावर्तनेनेत्यर्थः। 3 'दृष्टे परत्व'–च. 4 स्वररूपत्वादिति यावत्। 5 'तत्तद्वस्त्वेति'–ज. 6 भरतनाट्यशास्त्रे एकोनत्रिंशोऽध्यायः द्रष्टव्यः। 7 नवमोल्लासे ८४ तमकारिकावृत्तौ 'काव्यमार्गे स्वरो न गण्यते' इत्युक्तम्। 8 कार्योपयोगि'–च. 9 'सम्बन्धित्व'–ज.

आदिग्रहणात्—

एद्दहमेत्तत्थणिया एद्दहमेत्तेहिं अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं ॥ ११ ॥

[एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैः दिवसैः[1] ॥ ११ ॥]

इत्यादौ अभिनयादयः ।

---

## सङ्केतः

अभिनयादयः इत्यत्र आदिशब्दात् अपदेश[2]संज्ञानिर्देशेङ्गिताकाराः ॥

## मधुमती

किन्तु तत्र प्रकरणादिनैव अभिधानियमनम् । नियमितार्थस्य च व्यञ्जनया प्रतीतिरिति । मुनेः रसभेदेन स्वरविशेषकथनं मालवादिरागद्वारा तेषां तत्तद्रसादिव्यञ्जकत्वेन, न तु अर्थव्यवच्छेदद्वारेति युक्तमुत्पश्यामः ॥

**एद्दहेति** । **अक्षिपत्राभ्यां** इति इत्थंभूतलक्षणे तृतीया । अत्र **एतावन्मात्र**शब्दानां अणुमहदादिवाचकत्वेन नानार्थानां **अभिनयविशेषेण**[3] तत्तदर्थे नियमनमित्यर्थः । अत्र तत्तदनुज्ञानं अभिधानियामकमिति यथास्फुरणमुपयोगः । **अभिनयादयः इति** । आदिपदात् आप्तवाक्यपरिग्रहः ।

---

1 इदं च शैशवे एव प्रणयिनीं परित्यज्य देशान्तरं गतस्य कालान्तरे तां स्मृतवतः कस्यचित् कामिनः वचनम् । अक्षिपत्राभ्यां—कमलपत्रसदृशाभ्यां अक्षिभ्याम् । एतादृशी संजातेति भावः । (गा. स. ९७३). 2 अपदेशः—विवक्षितार्थस्य शृङ्ग्राहिकया निर्देशः । यथा 'इतः सदैत्यः प्राप्तश्रीः' इत्यादौ अङ्गुल्या स्वात्मनिर्देशः । 3 स्थौल्यचैशाल्यावस्थाविशेषकालविशेषप्रदर्शकहस्तव्यापारविशेषेणेत्यर्थः ।

इत्थं[1] संयोगादिभिः अर्थान्तराभिधायकत्वे निवारितेऽपि, अनेकार्थस्य शब्दस्य यत् क्वचि[2]दर्थान्तरप्रतिपादनं तत्र नाभिधा, नियमनात्[3] तस्याः। न च लक्षणा, मुख्यार्थबाधाद्यभावात्। अपितु अञ्जनं=व्यञ्जनमेव[4] व्यापारः। यथा[5]—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्[6] ॥ १२ ॥

---

### सङ्केतः

**भद्रेति।** भद्रः कल्याणप्रकृतिः, भद्रा हस्तिनां विशिष्टा जातिः। **वंशः** पृष्ठनाडिः अन्वयश्च। **शिलीमुखाः** शराः भ्रमराश्च। **परान् वारयति,** **परः** प्रकृष्टः **वारणः** हस्ती च। **दानं** त्यागः मदश्च। अत्र राजवर्णन-

### मधुमती

**इत्थमिति।** यत्तु एतादृशि स्थले पदार्थज्ञानं नास्त्येवेति **महिमभट्टा**भिधानं तत् अनुभवापलापभयात् नादरणीयम् ॥ १९ ॥

---

1 उक्तार्थानुवादपूर्वकं अनेकार्थस्येति सूत्रं सङ्गमयति—इत्थमित्यादिना। 2 'यत्किञ्चि'–क. 3 संयोगादिभिरिति शेषः। 4 'अञ्जनमेव'–क. 5 अभिधामूला शाब्दी व्यञ्जना यथेत्यर्थः। 6 राजवर्णनमिदम्। अत्र—शोभनाकृतेः दुर्धर्षवपुषः संगृहीतशरजालस्य अनुपद्रुतज्ञानस्य शत्रुनिवारकस्य यस्य राज्ञः हस्तः सततं दानार्थमुपात्तजलसेचनेन सुभगोऽभूत्—इति अभिधया प्रतिपाद्यमाने, मन्दमृगजातिद्वयातिरिक्तात्युत्कृष्टभद्रजातिप्रभवाकृतेः अत्युन्नततया दुरारोहतनोः विशालपृष्ठास्थिसमुच्छ्रायस्य कृतभ्रमरसंग्रहस्य निःप्रत्यूहगमनस्य यस्य उत्कृष्टस्य गजस्य शुण्डादण्डः मदजलसेकसुभगः अभूत्—इति अप्रस्तुतार्थः शब्दशक्तिमूलव्यञ्जनया भद्रादिपदैः प्रतिपाद्यते इत्यर्थः। (शिवस्वामिनः कप्फिणाभ्युदये १-३८).

## तद्युक्तो[1] व्यञ्जकः शब्दः

तद्युक्तः—व्यञ्जनयुक्तः ।

## यत् सोऽर्थान्तरयुक् तथा ।

---

### सङ्केतः

प्रकरणेन नियमिताभिधानशक्तयः भद्राद्याः शब्दाः एकमेवार्थमुक्त्वा सार्थका एव । अनन्तरं तु अर्थावगतिः ध्वननव्यापारादेव, शब्दशक्तिमूलात्[2] । अत्र पदानि शब्दशक्त्या गजवृत्तान्तं व्यञ्जयन्तीति वाक्यप्रकाश्यः[3] वस्तु-ध्वनिः । यदा तु प्रस्तावादिनियमः न स्यात् तदा द्वयोरर्थयोः वाच्यत्वात् श्लेषालङ्कार एव, न शब्दशक्तिमूलः वस्तुध्वनिः[4] ॥ १९ ॥

**अर्थान्तरेति । अर्थान्तरेण** द्वितीयेनार्थेन **युक्**-युक्तः व्यञ्जकः[5] ।

### मधुमती

**तद्युक्त इति ।** अत्रापि यथाश्रुतं वाचकशब्दादौ अतिव्याप्तमिति व्यञ्जनया प्रतिपादकत्वं विवक्षितम्[6] । व्यञ्जना च चमत्कृत्यनुकूलो व्यापारः इति बोद्धव्यम् । **यत्सोऽर्थान्तरेति । यत्** यस्मात् **सः** नानार्थः शब्दः **अर्थान्तरयुक्** अर्थान्तरं प्रतिपादयन्नेवेत्यर्थः । एतच्च प्रकृताभिप्रायकम् ।

---

1 इदानीं उक्तलक्षणया व्यञ्जनया व्यञ्जकं शब्दं लक्षयति—तद्युक्त इत्यादिना । 2 'मूलत्वात्'–घ. 3 'प्रकाशः'–ग. 4 अस्योदाहरणं तु 'सर्वदोमाधवःपायात् सयोगंगामदीधरत्' इति । 5 'व्यञ्जकः' इति नास्ति–क. 6 नात्र स्वरूपयोग्यत्वं विवक्षितम् । किन्तु फलोपधानमेवेति भावः ।

अर्थोऽपि व्यञ्जकस्तत्र
सहकारितया मतः[1] ॥२०॥

तथेति व्यञ्जकः ॥

इति श्रीकाव्यप्रकाशे शब्दनिर्णयो नाम (शब्दार्थस्वरूप-
निर्णयो नाम) द्वितीय उल्लासः

---

## सङ्केतः

यद्वा—अर्थं अन्तरे युनक्ति इति स तथा। **सहकारितयेति। यद्यपि** अविवक्षितवाच्ये लक्षणाऽभिधामूले शब्द एव व्यञ्जकः, तथापि अर्थस्य सहकारित्वं न हीयते। इतरथा तु अज्ञातार्थोऽपि शब्दः तस्य व्यञ्जकः स्यात्, केवलं शब्दस्य मुख्यत्वात्[2] ॥

## मधुमती

निरर्थकवर्णस्यापि व्यञ्जकत्वादिति। **सहकारितया** इति वदता अत्र शब्दस्य प्राधान्यं अर्थस्य अप्राधान्यमिति गम्यते। प्राधान्यं च व्यञ्जनायाः तच्छब्दा-न्वयव्यतिरेकानुविधायित्वादिति ज्ञेयम् ॥ २० ॥

इति श्रीरत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां
मधुमत्यां द्वितीयः उल्लासः

---

1 येन न्यायेन अर्थान्तरयोगित्वात् शब्दः व्यञ्जकः तेनैव न्यायेन तत्र अर्थोऽपि तद्योगित्वात् व्यञ्जकः। तत्र च शब्दात् अर्थाद्वा यतः व्यञ्जनाव्यापारप्रतीतिः तन्मूलः ध्वनिरिति व्यपदिश्यते। अन्यश्च तत्सहकारी भवतीति शब्दशक्तिमूलत्वार्थशक्तिमूलत्व-व्यवस्थेति भावः। 2 'मुख्यता'—घ.

## सङ्केतः

तत्र अविवक्षितवाच्यध्वनौ—"मुखं विकसिते"[1]त्यादिवाक्यं अभिधया पदार्थं उक्त्वा, अन्वयं च तात्पर्यशक्त्या अवगमय्य, बाधकेनान्वयं व्यपहृत्य, लक्षणया लक्ष्यं लक्षयित्वा, ध्वन्यं ध्वनयति। तेनात्र अभिधातात्पर्यलक्षणा-ध्वननाख्याः चत्वारो व्यापाराः ॥ विवक्षितवाच्ये तु—त्रयः, तत्र लक्षणायाः अभावादिति ॥ २० ॥

सम्यक् शब्दविभागश्रीः[2] तेषां न स्यात् दवीयसी।
परिच्युता न सङ्केतात् येषां मतिनितम्बिनी ॥

इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाश-
सङ्केते द्वितीयोल्लासः

———

1 (का. उदा. ७). 2 'विलासश्रीः'–ध.

## अर्थव्यञ्जकतानिर्णयो नाम

## तृतीयः उल्लासः

—o—

अर्थानां अर्थान्तरव्यञ्जकतानिरूपणस्य प्रकृतत्वम्—

अर्थाः प्रोक्ताः पुरा, तेषां अर्थव्यञ्जकतोच्यते ।[1]

आर्थीव्यञ्जनास्वरूपम्—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥ २१ ॥
प्रस्तावदेशकालादेः वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुः व्यापारो व्यक्तिरेव सा[2] ॥ २२ ॥

---

1 वाच्यलक्ष्यव्यङ्ग्यभेदात् अर्थाः ये प्रतिपादिताः । तेषामिह व्यञ्जकत्वं अधुना प्रतिपाद्यते ॥ ५७ ॥ 2 वक्तृ—व्यक्तिरेव सा ॥ ५८ ॥ अस्तंगतोऽद्य सविता पथिक! क प्रयास्यसि? । इत्यत्र वक्तृवैशिष्ट्यज्ञानात् रत्यभिलाषधीः ॥ ५९ ॥ प्रातश्चे- न्नाथ! को दोषः श्रान्तोऽसि स्वपिहि क्षणम् । अत्र बोद्धव्यवैशिष्ट्यात् वक्तृकोपः प्रतीयते ॥ ६० ॥ सखि! श्रुत्वाऽपि मामेवं नानुतापमुपैति सः । इत्यादौ काकु- वैशिष्ट्यज्ञानात् व्यङ्ग्यार्थधीर्मता ॥ ६१ ॥ स्वप्नेऽपि नास्मरः प्राङ् मां भाग्येनाद्यागतोऽसि मे । इत्यादौ वाक्यवैशिष्ट्यज्ञानात् व्यङ्ग्यार्थधीर्मता ॥ ६२ ॥ शून्या प्रपेयं एकाकि- न्यस्मि पान्थास्यतां क्षणात् । इत्यत्र वाच्यवैशिष्ट्यात् संभोगेच्छाऽवगम्यते ॥ ६३ ॥ एकाकिन्येव यास्यामि जलार्थं कथमापगाम् । इत्यादिषु व्यङ्ग्यबुद्धिः वैशिष्ट्यादन्य- संनिधेः ॥ ६४ ॥ वयस्य! प्रतिवेशिन्याः पतिरद्य समागतः । अत्र प्रस्ताववैशिष्ट्य- ज्ञानात् व्यङ्ग्यार्थनिश्चयः ॥ ६५ ॥ सख्यो दूरं गताः गन्तुमक्षमाऽहमिह स्थिता । इत्यत्र देशवैशिष्ट्यज्ञानेन व्यङ्ग्यधीर्मता ॥ ६६ ॥ गृहकृत्यव्यापृतायाः विश्रमोऽद्यैव मे सखि! इत्यादौ कालवैशिष्ट्यज्ञानात् व्यङ्ग्यार्थनिर्णयः ॥ ६७ ॥ वक्त्रादीनां मिथो योगेऽप्यर्थव्यञ्जकतेष्यते । शेते श्वश्रूरिहात्राहं रात्र्यन्धायैव लोकय ॥ ६८ ॥ शय्याया- मावयोः मोहात् त्वं वैदेशिक! मा पत । वक्तृबोद्धव्यदेशानां वैशिष्ट्यात् व्यङ्ग्यधी- रिह ॥ ६९ ॥ वत्स! मा गच्छ सहसा हालिकस्य निवेशनम् । तत्र दृष्टिविषा काऽपि फणिन्यास्ते इति श्रुतम् ॥ ७० ॥ फलानि दिश भव्यानि निवेश्य मणिबन्धने । बिम्बोष्ठि! चुम्बनेनैवं आलि! लालय मा शुकम् ॥ ७१ ॥

शब्दसहकृतस्यैव अर्थस्य व्यञ्जकत्वम्—

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता[1] ॥ २३ ॥

इति श्रीकाव्यप्रकाशकारिकासु तृतीयोल्लासकारिकाः

———

1 शब्दप्रमाण—सहकारिता ॥ ७२ ॥

इति काव्यदर्पणकारिकासु तृतीयोल्लासकारिकाः

———

अर्थव्यञ्जकतानिर्णयो नाम
तृतीय उल्लासः

—o—

**अर्थाः प्रोक्ताः पुरा तेषां[1]**
**अर्थ[2]व्यञ्जकतोच्यते ।**

**अर्थाः—वाच्यलक्ष्यव्यङ्ग्याः । तेषां—वाचक-लाक्षणिकव्यञ्जकानाम् । कीदृशीत्याह[3]—**

---

## सङ्केतः

अर्थव्यञ्जकतेति । अर्थो व्यञ्जकः यदि निरपेक्षः, तत् सर्वदा तमर्थमवगमयेत्[4] । अथ सापेक्षः, किं तस्यापेक्षणीयमित्याह—**वक्तृ-बोद्धव्येति**[5] । वयं तु अस्य श्लोकस्य द्वितीयं पादं 'अथ व्यञ्जकतोच्यते' इति कृत्वा पठामः । व्याख्यामश्चेत्थम्[6]—**अर्थाः**—वाच्यादयः **पुरा प्रोक्ताः** । **अथ तेषां**—अर्थानां **व्यञ्जकतोच्यते** इति । मूलव्याख्यायां तु[7] 'अथ'शब्दस्य गम्यमानता व्याख्येया ॥

## मधुमती

भक्तलोकशरण्यः सन् कारुण्यापूरितान्तरः ।
संसाराम्भोधितरणतरणिः गण्यतां त्वया ॥[8]

इत्थं शब्दव्यञ्जकतामभिधाय, सम्प्रति अर्थव्यञ्जकतामभिधातुं अनुवदति—**अर्थाः इति । तेषां** इत्यनेन अर्थपरामर्शे अर्थानामर्थाः इति असङ्गतिः इत्यत आह—**तेषामिति** । यद्यपि अर्थव्यञ्जकत्वस्य "सर्वेषां

---

1 तेषां अर्थाः इत्यन्वयः । 2 'अथ'—क. 3 'कीदृशी सेत्याह'—क. 4 न तु केषांचित् क्वचिदेवेति स्यात् । 5 तथा च नवनवोन्मेषशालिप्रज्ञात्मक-प्रतिभोत्थापकस्य वक्त्रादिवैशिष्ट्यज्ञानस्य अर्थव्यञ्जकतासहकारित्वेनाभ्युपगमात् न दोष इति भावः । तत्रापि—'सवासनानां सभ्यानां रसस्यानुभवो भवेत् । निर्वासनास्तु रङ्गान्तर्वेश्मकुड्याश्मसंनिभाः ॥' 6 'व्याख्यानं चेत्थम्'—ग. 7 वृत्तिकृत-व्याख्यायां त्वित्यर्थः । 8 अयं श्लोकः नास्ति—च.

वक्तृबोद्धव्यकाकूनां
वाक्यवाच्यान्यसंनिधेः ॥२१॥

---

## सङ्केतः

किञ्च अविभावादिरूपस्यार्थस्य [1] अन्यार्थधीहेतुत्वे एव वक्त्रादि-वैशिष्ट्यापेक्षा, न विभावादिरूपस्य ; सः अनपेक्ष एव रसादिव्यञ्जकः ॥

एतेन—प्रयोजनस्य व्यङ्ग्यत्वोक्त्या ध्वनिः अविवक्षितवाच्यः धर्मी, अभिधामूलव्यङ्ग्यत्वोक्तया शब्दशक्तिमूलो धर्मी, अर्थस्य विभावाद्यविभावादि-रूपस्य व्यञ्जकत्वोक्त्या क्रमात् असंलक्ष्यसंलक्ष्यक्रमौ अर्थशक्तिमूलौ धर्मिणौ च उल्लिङ्गिताः इति भाव्यम् । त एते उल्लिङ्गिताः धर्मिणः चतुर्थोल्लासे सविस्तरं वक्ष्यन्ते [2] ॥

बोद्धव्यः इति अन्तर्भूतण्यर्थः [3] । वाक्यवाच्याभ्यां युक्तः अन्य-संनिधिः वाक्यवाच्यान्यसंनिधिः, तस्येति विग्रहः ; न तु समाहारः, तस्य

## मधुमती

प्रायशोऽर्थानां " इत्यनेन प्रागेव दर्शितत्वात् गतार्थमिदम् । तथापि असान्दृष्टिकत्वशङ्काऽपनयनार्थं तत्र तदुक्तम्, अत्र तु मुख्यतया, इति सहकारि-विशेषकथनपरोऽयमारम्भः [4] ॥

ननु अर्थव्यञ्जकत्वे सर्वेषां तत्तद्व्यङ्ग्यार्थस्य प्रतीतिरप्रतीतिर्वा स्यात्, न तु कस्यचिदेव—इत्याशयेन पृच्छति कीदृशी इति । उत्तरं—वक्तृ इत्यादि ॥

---

1 न विभावादिः—अविभावादिः । 2 'किञ्च' इत्यारभ्य एतत्पर्यन्तं ग पुस्तके नास्ति । 3 तथा च बोधयितव्यः इत्यर्थः । न तु वाच्यः इति । अतो न पौनरुक्त्यम् । 4 अत्रेदं बोध्यम्—व्यञ्जकता खलु द्विविधा—शाब्दी आर्थी चेति । तत्राद्या शब्दपरिवृत्त्यसहा । सैव च अभिधामूला लक्षणामूला चेति द्विविधा । सैव च पूर्वोल्लासे निरूपिता । अत्र तु—शब्दपरिवृत्तिसहा आर्थी व्यञ्जना निरूप्यते इति ॥

**प्रस्तावदेशकालादेः**
**वैशिष्ट्यात् प्रतिभाजुषाम् ।**
**योऽर्थस्यान्यार्थधीहेतुः**
**व्यापारो व्यक्तिरेव सा[1] ॥२२॥**

**बोद्धव्यः**—प्रतिपाद्यः[2] । **काकुः**—ध्वनेर्विकारः[3] । **प्रस्तावः**—प्रकरणम् , **अर्थस्य**—वाच्यलक्ष्यव्यङ्ग्यात्मनः । क्रमेण उदाहरणानि[4]—

---

### सङ्केतः

नपुंसकत्वात् संनिधिनः इति स्यादिति[5] । **प्रस्तावदेशेति** । स्फुटम् ॥ २२ ॥

### मधुमती

बोद्धव्यो यदि वाच्यः तदा पौनरुक्त्यमिति अन्यथा व्याचष्टे—**प्रतिपाद्य इति** । तथाच **बोद्धव्यः** बोधयितव्य इत्यर्थः । अन्तर्भावितण्यर्थत्वादिति भावः । **प्रतिभा** नवनवोन्मेषशालिनी प्रज्ञैव । एवं च वक्त्रादिवैशिष्ट्यज्ञानं सहृदयप्रतिभोत्थापकतया **अर्थानां** व्यञ्जकत्वे सहकारीति द्रष्टव्यम् । पूर्वं अर्थानामित्युक्तम् , इदानीं **अर्थस्य** इत्युच्यते इत्यत आह—**वाच्येति** । एवं च एकवचनमविवक्षितम् , जात्यभिप्रायकं वा इति बोध्यम् ॥

---

1 प्रथमं यथाश्रुतवाक्यार्थज्ञानानन्तरं प्रतिभावतां सहृदयानां वक्त्रादिवैशिष्ट्यज्ञाननिमित्ता या अर्थान्तरधीः, तदनुकूलः यः अर्थस्य व्यापारः सा व्यञ्जनैवेत्यन्वयः । न तु व्याप्त्यादिरितिभावः । 2 यं बोधयितुं शब्दः उच्चार्यते सः । 3 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः । 4 वक्ष्यमाणानि सर्वाण्यप्युदाहरणानि केवलं वाच्यार्थव्यञ्जकताया एवेति भाव्यम् । 5 वाक्यं च वाच्यं च वाक्यवाच्ये, ताभ्यां सहितः इति मध्यमपदलोपी समासः । इतरेतरद्वन्द्वे संनिधीनामिति बहुवचनस्य, समाहारत्वे 'स नपुंसकम्' इति नपुंसकत्वस्य एकवद्भावस्य च प्रसङ्गादिति भावः ।

अइपिहुलं जलकुंभं
घेत्तूण समागदह्मि सहि! तुरिअं।
समसेअसलिलणीसास
णीसहा वीसमामि खणम् ॥ १३ ॥
[अतिपृथुलं जलकुम्भं
गृहीत्वा समागताऽस्मि सखि! त्वरितम्।
श्रमस्वेदसलिलनिःश्वास-
निस्सहा विश्राम्यामि क्षणम्[1] ॥ १३ ॥]
अत्र चौर्यरतगोपनं गम्यते[2] ॥

## सङ्केतः

**अइपिहुलमिति।** अत्र काचिदसती कृतान्यपुरुषसङ्गा कायगत-विकारविशेषापह्नवेनाभिधत्ते। ततश्च असाध्वीत्वे[3] अवगते, तृतीयस्य तटस्थस्य प्रतिभाजुषः व्यङ्ग्यप्रतीतिः। न ह्यत्र बोद्धव्यादीनां सामर्थ्यम्, सत्याः वक्तृत्वे सति ते[4] हि नैवंविधं व्यङ्क्तुमलम् ॥

## मधुमती

**अइपिहुलमिति।** क्वचित्तु '**विउलं**' इति पाठः। तदा **विपुल**-मित्यर्थः। अत्र जलपूर्णत्वेन दुर्वहत्वं, **गृहीत्वा** इत्यनेन मयैवोत्थाप्य गृहीतः, न त्वन्यया साहाय्यमाचरितमिति आयासाधिक्यं च व्यज्यते[5]। अत्र प्रसिद्धस्वैरिणीत्वायाः कस्याश्चित् वक्त्रीभूतायाः प्रतिपादितत्ववैशिष्ट्य-ज्ञानादयमर्थः प्रकाशते, न तु स्वैरिणीत्वानवगमेऽपीत्यर्थः ॥

---

1 निःसहा — दुर्बला=चलितुमप्यक्षमा। (गाथासप्तशती ९८९)। 2 वक्त्र्याः कामिन्याः दुःशीलत्वं विजानतामिति शेषः। 3 वक्त्र्याः इत्यादिः। 4 उक्ताः अर्थाः। 5 तथा 'त्वरितं' इति श्रमाविर्भावे निदानोपन्यासः कृतः इत्यपि बोद्धव्यम्।

ओण्णिद्दं दोब्बल्लं
　　चिंता अलसत्तणं सणीससिअं ।
मह मंदभाइणीए केरं
　　सहि ! तुह वि अहह ! परिहवइ ॥ १४ ॥
[औन्निद्र्यं[1] दौर्बल्यं
　　चिन्ताऽलसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते
　　सखि ! त्वामप्यहह[2] ! परिभवति ॥ १४ ॥[3]
अत्र दूत्याः तत्कामुकोपभोगः व्यज्यते ॥[4]

---

## सङ्केतः

तुह वि इति द्वितीयार्थे षष्ठी । त्वामपीत्यर्थः ।

कायति अर्थान्तरमिति काकुः । यद्वा—काकुः—जिह्वा । तद्व्यापारविशेषसम्पाद्यत्वात् ध्वनेर्विकारोऽपि काकुः । यद्वा—"ककि लौल्ये" इति धातोः काकुशब्दः । प्रकृतार्थातिरिक्तार्थमपि वाञ्छति इति लौल्यं अस्याभिधीयते । यद्वा—ईषदर्थे कुशब्दस्य—कादेशः । तेन

## मधुमती

ओण्णिद्दमिति । अत्र मम इति कर्मणि निपातः इत्येके । कर्मणि षष्ठी इत्यन्ये । इहापि प्रसिद्धतत्कामुकोपभोगदूतीलक्षणप्रतिपाद्योद्देशकत्वप्रतिसन्धानात् व्यङ्ग्यार्थः प्रतीयते ॥

---

1 औन्निद्र्यं—गतनिद्रता । 'उन्निद्रं'—क. उद्भूतमित्यर्थः । 2 'तवाप्यहह'—ख. 3 परिभवति—बाधते । (गाथासप्तशती ९५६) । 4 प्रसिद्धनायकाभिलाषदूतीरूपबोधयितव्यवैशिष्ट्यज्ञानादिति शेषः ।

**तथाभूतां [1] दृष्ट्वा नृपसदसि [2] पाञ्चालतनयां [3]**
**वने व्याधैः [4] सार्धं सुचिरमुषितं [5] वल्कलधरैः । [6]**
**विराटस्यावासे स्थितमनुचितारम्भनिभृतं [7]**
**गुरुः [8] खेदं खिन्ने मयि भजति, नाद्यापि कुरुषु [9] ॥१५॥**

---

## सङ्केतः

हृदयस्थवस्तुप्रतीतेः ईषद्भूमिः काकुः । ननु "काव्ये स्वरः न विशेषप्रतीतिकृत्" इति प्रागुक्तम् । तत् कथं काकुस्वरोऽत्र काव्योपयोगी प्रोक्तः? सत्यम् । प्रकृतार्थापेक्षया काव्ये स्वरो नोपयोगीति ज्ञेयम् । व्यङ्ग्यापेक्षया तु काव्योपयोगी लक्ष्यानुसारतः प्रतिपत्तव्यः, यथाऽत्रेति । तद्वैशिष्ट्याद्यथा—**तथाभूतामिति** । कौरवैः युधिष्ठिरं प्रति प्रेषिताः प्रधानाः । [10] तेन च [11] सन्धित्सता भीमानुनयनार्थं सहदेवः प्रेपितः । स च [12] कोपमपरिहरन् [13] सहदेवं प्रति काका इदमाह [14]—**गुरुः खेदं** कोपं मयि भीमे **भजतीति** ॥

## मधुमती

**तथाभूतामिति** । अत्र **दृष्ट्वा** इति सर्वत्रान्वीयते । खिद्यते अनेनेति **खेदः** मन्युः ॥

---

1 केशग्रहणवस्त्रापहरणादिपरिभववतीम् । 2 न तु यत्र कुत्रापि विविक्तस्थले । 3 न तु अज्ञातकुलगोत्रां यां काञ्चन । दृष्ट्वाऽपीति यावत् । 4 किरातैः । 5 न तु कियन्तंचित् कालम् । 6 अस्माभिरिति शेषः । 7 पाकाद्यनुचितसेवाकरणेन अज्ञातं यथा भवति तथा । 8 एवमपि इत्यादिः । गुरुः—युधिष्ठिरः । 9 अत्र मयि इति कुरुष्विति च पदद्वयं काकुस्थानम् । (वेणीसंहारे १-११) । 10 'प्रधानानि प्रेषितानि ततः'–ग. 11 युधिष्ठिरेण चेत्यर्थः । 12 संरब्धो भीमश्चेत्यर्थः । 13 'मपहरन्'–ग. 14 एवं रीत्या कथासन्दर्भस्तु वेणीसंहारे न दृश्यते ।

अत्र 'मयि न योग्यः खेदः, कुरुषु तु[1] योग्यः'
इति काक्वा प्रकाश्यते[2] ॥

न च वाच्यसिद्ध्यङ्गं[3] अत्र काकुरिति गुणीभूत-

---

### सङ्केतः

ननु 'तथाभूतां' इत्यादिवाच्यसिद्धौ[4] काकुरयं स्वरविशेषः कारण-मिति गुणीभूतव्यङ्ग्यभेदः कथं न स्यात् इत्याशङ्क्य आह—**न च वाच्येति**। "हे सहदेव! कुरुषु किं न खेदः गुरोः यन्मयि खेदः?" इत्येवंरूपप्रश्न-मात्रेण काकोः विश्रान्तेः। काकोस्तु यद्वैशिष्ट्यं तत्पर्यालोचनया सहदेवस्य व्यङ्ग्यप्रतीतिरिति नैष काकाक्षिप्तः गुणीभूतव्यङ्ग्यभेदः ॥

**अयमाशयः**—काव्ये अर्थानुपपत्तिसम्भवे सति व्यङ्ग्यात् यदा काव्यार्थोपपत्तिः तदा वाच्यसिद्ध्यङ्गाख्यः मध्यमकाव्यभेदः। यदा तु अर्थानुपपत्तिसम्भवे एव सति काकोः व्यङ्ग्यविश्रान्तिद्वारेण काव्यार्थोपपत्तिः तदा काकाक्षिप्ततेति। यथा—

"मथ्नामि कौरवशतं समरे न कोपात्
　दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
　सन्धिं करोतु भवतां नृपतिः पणेन[5] ॥" इत्यत्र।

### मधुमती

शङ्कते—**नचेति**। अत्र—काकाक्षिप्तस्य वाच्यनिषेधसहभावेन व्यङ्ग्यवत् वाच्यस्यापि सिद्धेः काकोः वाच्यसिद्ध्यङ्गत्वभङ्ग्या काकाक्षिप्तत्व-

---

1 'तु' इति नास्ति-क. 2 'काक्वा व्यज्यते'-क. 3 वाच्यः-वाक्यार्थः भ्रातरि खेदभजनरूपः कुरुषुतदभजनरूपश्च। तत्पर्यवसानकारकमित्यर्थः। 4 'सिद्ध्यै'-ग. 5 भवतां नृपतिरिति युधिष्ठिरः उच्यते। पणेन ग्रामपञ्चकरूपेण। (वेणीसंहारे १-१५)।

व्यङ्ग्यत्वं शङ्क्यम् । प्रश्नमात्रेणापि[1] काकोः विश्रान्तेः[2] ॥

## सङ्केतः

अत्र भीमेन न मथ्नामि इत्युक्तिः[3] स्वप्नेऽपि न संभाव्यते इति, काव्यार्थानुपपत्तौ सत्यां काकुः व्यङ्ग्यार्थविश्रान्तिद्वारेण काव्यार्थमुपपादयति। यदा पुनः व्यङ्ग्यविश्रान्तिं विनैव प्रश्नमात्रविश्रान्तः काकुः काव्यार्थमुपपादयति[4] तदा न काकाक्षिप्तता, यथा 'तथाभूतां' इत्यत्र। अत एव **काका प्रकाश्यते** इति पदं **काका**—काकुविशिष्टेन **प्रकाश्यते** इतीत्थं व्याख्येयमिति शुद्धध्वन्युदाहरणवादिनां पक्षः ॥

## मधुमती

मेवात्र शङ्कितम्। न तु "अमिमरतिं"[5] इत्यादाविव वाच्यसिद्ध्यङ्गत्वमिति भ्रमः कर्तव्यः। **एतेन**—"अमिमरतिं"[5] इत्यादौ व्यङ्ग्यगरलार्थस्य[6] वाच्यरूपक[7]सिद्ध्यङ्गतावत् नात्र काकोः वाच्यसिद्ध्यङ्गत्वं इत्यपास्तम् ॥ समाधत्ते—**प्रश्नेति** । **प्रश्नमात्रार्थ**[8]नञ्समभिव्याहृत**काकुविश्रामात्** मथ्नाम्येवेतिवत् वाच्य[9]निषेधशिरस्कव्यङ्ग्यप्रतीतेः असत्त्वात् न तत्त्वमित्यर्थः ॥

**यद्यपि** प्रकृते गुणीभूतव्यङ्ग्यत्वोद्भावनं तन्निरासेन ध्वनिव्यवस्थापनं च अप्रकृतम्। तत्त्वेऽपि काकोः व्यञ्जकत्वा[10]नपायात्। तथापि तथात्वे काकोरेव व्यञ्जकत्वोपपत्तौ[11] काकुवैशिष्ट्यो[12]दाहरणमिदं न स्यात्। ध्वनित्वे

---

1 व्यङ्ग्यार्थाक्षेपं विनैवेति यावत्। 2 पर्यवसानादित्यर्थः। 3 'भीमो न मथ्नामीति वक्तुं'–ग. 4 'यदा' इत्यारभ्य एतत्पर्यन्तं नास्ति–ग. 5 (का. प्र. उ. १२६). 6 'गरदार्थस्य'–च. 7 'रूपकत्व'–ज. 8 'मात्रनञ्'–ज. 9 'तितद्वाच्य'–ज. 10 'व्यञ्जितत्वा'–च. 11 'त्वापत्तौ'–ज. 12 'काकुरवविशिष्टो'–ज.

## सङ्केतः

ये तु—ध्वनिमात्रं प्रत्येवार्थस्य व्यञ्जकता अत्र[1] प्रकरणे प्रोच्यते इति प्रोचुः, तत्पक्षाश्रयणे[2] पूर्वोक्तरीत्यनपेक्षया काकाक्षिप्तव्यङ्ग्यता ज्ञेया। तथा दृष्ट्वा इति क्रिया यदा गुरुकर्तृका, तदा **स्थितं उषितं**[3] इत्यत्र भावक्तान्तत्वे सति कर्मता व्याख्येया। **यदा तु** अस्मत्कर्तृका तदा 'यद्यपि—तथापि' इति पदद्वयाध्याहारेण व्याख्या कार्या ॥

अपराऽप्यसङ्गतिः अस्य श्लोकस्य प्रकृतानुपयोगात् **सङ्केतकरणस्य** प्रस्तुतत्वाच्च न प्रकाशिता ॥

## मधुमती

तु प्रश्नमभिव्यज्य विश्रान्तायां काकौ तद्वैशिष्ट्यज्ञानात् उत्थितप्रतिभस्य सहृदयस्य प्रकृतपदार्थेन प्रकृतार्थव्यञ्जनात् प्रकृतोदाहरणता युज्यते इति ॥

**अत्र च** काकाक्षिप्तत्वलक्षणगुणीभूतव्यङ्ग्याभावो[4] विवक्षितः, न तु तत्सामान्याभावः। "यद्यपि स नास्ति" इत्यादेः अभिधास्यमानत्वात् ॥

**केचित्तु**—कुपितोद्धतनायके वक्तरि निश्चितं विपर्ययपर्यवसायित्वम्। तच्च काकुप्रकाश्येनार्थेन विना न संभवतीति वाच्यसिद्ध्यङ्गत्वमित्याहुः। तन्न। अलङ्घनीयाज्ञस्य गुरोः कोपाविषयत्वादेव विपर्ययपर्यवसायित्वाभावात्। **अत एवात्र** न्यूनपदतां वक्ष्यति। अन्यथा कोपाविशिष्टवक्तृकत्वेन सा दोषाय न स्यात् इति ॥

---

1 'अर्थ'–ग.　2 'श्रयणेन'–ग.　3 'स्थितोषितेत्यत्र'–ग.　4 'व्यङ्ग्यत्वाभावो'–ज.

तइआ [1] मह गण्डत्थलणिमिअं [2]
दिट्ठिं ण णेसि अण्णत्तो ।
एह्निं सच्चेअ [3] अहं ते अ
कवोला [4] ण सा दिट्ठी ॥ १६ ॥

[तदा मम गण्डस्थलनिमग्नां [5]
दृष्टिं न नयस्यन्यत्र । [6]
इदानीं सैवाहं तौ च
कपोलौ न सा दृष्टिः [7] ॥ १६ ॥]

---

## सङ्केतः

वाक्यविशेषाद्यथा—तइआ इति । अत्र वाक्योपात्तपदसमन्वयान्यथा-नुपपत्तेः वाक्यपर्यालोचनया प्रच्छन्नकामुकत्वं व्यज्यते । न चात्र वक्तृबोद्धव्यवैशिष्ट्यम् । यतः तयोर्वैशिष्ट्ये सत्यपि एवंविधवाक्याभावे व्यङ्ग्यार्थाप्रतीतेः ॥

## मधुमती

**तइआ इति । णिमिअं**—निमिताम् । ग्रथितामित्यर्थः । अनेन प्रेमाधिक्यं व्यज्यते । अत्र **तदा-इदानीं**रूपयदद्वयात्मकवाक्यवैशिष्ट्याव-गमात् प्रकृतार्थलाभः इति द्रष्टव्यम् ॥

---

1 'तहआ'—क. 2 'णिहिअं=निहितां'—क. 3 'सा चेअ'—ख. 4 'कबाला'—ख. 5 'निमितां'—क. 6 'नानैषीरन्यतः'—ख. 7 इयं प्रत्यक्ष-दृष्टस्वकपोलप्रतिबिम्बितसखीदर्शनोत्सुक्यं नायकं प्रति नायिकोक्तिः । तदा—मम गण्डस्थले प्रतिबिम्बितत्वदशायाम् । निमग्ना—आसक्ता । (गा. स. 939) ।

अत्र 'मत्सखीं कपोलप्रतिबिम्बितां पश्यतः ते दृष्टिः अन्यैवाभूत्,[1] चलितायां तु तस्यां अन्यैव[2] जाता'–इति अहो! प्रच्छन्नकामुकत्वं ते[3] इति व्यज्यते[4]॥

उद्देशोऽयं सरसकदली[5]श्रेणिशोभाऽतिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।

---

## सङ्केतः

**उद्देश इति**। न ह्यत्र वक्तृस्वभावपरिशीलनोपयोगः, नापि वाक्ये पदानां व्यङ्ग्यमन्तरेणान्वयानुपपत्तिः, किन्तु—वाक्यविशेषस्वरूपविचारेण

## मधुमती

**उद्देशोऽयमिति**। उद्दिश्यते इति **उद्देशः**। तेन आवृतत्वम्। **सरसकदली**त्यादिना उद्दीपनोत्कर्षः। **कुञ्जस्य उत्कर्षश्च** निबिडत्वमकरन्द-सिक्तत्वाऽऽमोदमुदितमधुकरत्वादिः। तेन **अङ्कुरितः रमणीनां विभ्रमः** यत्र स तथा। तेन च इदंप्रथमत्वाभावं उपदर्शयता गतानुगतिकतयाऽपि अयं नोपेक्षणीयः इति व्यज्यते। **नर्मदायाः** इत्यनेन तत्संबन्धित्वप्रतीत्या उद्देश्यस्य महिमाऽतिशयः व्यज्यते। प्रत्युपकारापेक्षया हितकारि—**मित्रम्**।

---

1 अतिशयितानुरागशालिनी जातेत्यर्थः। 2 ताटस्थ्यशालिनीत्यर्थः। 'अभूत्, इदानीं चलितायां त्वय्यामन्यैव'–ख. 3 'तत्र'–क. 4 वाच्यवैशिष्ट्यज्ञानादिति शेषः। 5 'कदलि'–क.

किञ्चैतस्मिन् सुरतसुहृदः तन्वि ! ते वान्ति वाताः
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः [1] ॥१७॥

अत्र 'रतार्थं प्रविश' इति व्यङ्ग्यम् ॥ [2]

---

## सङ्केतः

रतार्थं प्रविश इति व्यज्यते ॥

## मधुमती

तया विना हितकारि—सुहृत् । तेन सुहृत्पदेन त्वद्वदननिःश्वासकदर्थिता अपि तव हितमेवाचरिष्यन्तीति व्यज्यते । **अग्रे सरति**—अग्रे गच्छति, अग्रेसरइवाचरतीति वा । तदित्थं अन्वयव्यतिरेकाभ्यां वाच्यवैशिष्ट्यज्ञानादेव व्यङ्ग्यार्थप्रतीतिः ॥

---

1 इयं रिरंसोः नायकस्य कस्यचित् नायिकां प्रत्युक्तिः । अयमिति दूरादेव जनैः निर्देश्यः विजने नर्मदायाः उन्नतः प्रदेशः, कुञ्जान्तरेषूद्भूतेन रमणीजनसम्भोग-सम्भ्रमेण परिकर्मितः विराजते । तत्र च सुरतजनितश्रमापनयनेन सुहृत्कार्यकारिणः चिरकालसम्भोगसौख्यानुकूलाः मन्दमारुता अपि प्रचण्डकामभावप्रचोदकाः सुखं वान्तीत्यर्थः । (इदं पद्यं भट्टेन्दुराजस्येति सूक्तिमुक्तावल्यामुक्तम्) । 2 वाच्यवै-शिष्ट्यज्ञानादिति शेषः ।

णोल्लेइ अणद्दमणा[1] अत्ता
मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाए
होइ[2] ण व होइ वीसामो ॥ १८ ॥
[नुदत्यनार्द्रमनाः[3] श्वश्रूः
मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां (केवलं ?)
भवति न वा भवति विश्रामः[4] ॥ १८ ॥]

अत्र 'संध्या सङ्केतकालः' इति तटस्थं प्रति कयाचित् द्योत्यते ॥[5]

---

## सङ्केतः

अन्यसन्निधेर्यथा—णोल्लेइ इति । नुदति—प्रेरयति । अणद्दमणा इत्यस्य अनार्द्रमनाः इति संस्कृतम् । अत्र प्रच्छन्नकामुके क्वापि प्रदेशे सांनिध्यभाजि सति, सखीं प्रति स्वैरिणीं गाथां पठन्तीं दृष्ट्वा, चतुर्थः सहचरः व्यङ्ग्यार्थं प्रत्येति । यद्यपि सन्ध्यायां अवसरः भवत्येवेति विवक्षितम् । तथापि तदुच्यमानं परस्य लक्षणीयं भवतीति तथा नोक्तम् ॥

## मधुमती

णोल्लेइ इति । अत्र तटस्थः अन्यपुरुषः तदुपपतित्वेन निश्चितः । तत्संनिधिवैशिष्ट्यज्ञानादेव व्यङ्ग्यार्थप्रतीतिरिति ॥

---

1 'अणुल्लमणा'—क. 'क्षणोल्लिअमणा'—ख. 2 'णवर होइ=केवलं भवति'—ख. 3 निर्घृणेत्यर्थः । 'नोदयत्यनार्द्रमनाः'—ख. 'प्रेरयत्यनार्द्रमनाः'—क. 4 (गा. स. ८७५) । 5 'बोध्यते'—क.

सुव्वइ समागमिस्सदि तुज्झ
पिओ अज्ज पहरमेत्तेण ।
एमेअ किंत्ति चिट्ठसि ?
ता सहि ! सज्जेसु[1] करणिज्जम् ॥ १९ ॥
[श्रूयते समागमिष्यति तव
प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि ?
तत् सखि ! सज्जय करणीयम् ॥ १९ ॥[2]

अत्र उपपतिं प्रत्यभिसर्तुं प्रस्तुता[3] 'न युक्तं' इति कयाचित् निवार्यते ॥

अन्यत्र यूयं कुसुमावचायं
कुरुध्वमत्रास्मि करोमि सख्यः !
नाहं हि दूरं[4] भ्रमितुं समर्था
प्रसीदतायं रचितो[5]ऽञ्जलिर्वः ॥ २० ॥

---

## सङ्केतः

देशविशेषाद्यथा—अन्यत्रेति । "उद्देशः" इत्यादिवृत्ते समग्रस्यापि वाच्यस्य वैशिष्ट्यम्; इह तु देशस्येति भेदः ॥

## मधुमती

सुव्वइ इति । अत्र उपपतिं इति । सोऽयमर्थः प्रकरणवैशिष्ट्याव-गमात् प्रतीयते ॥

अन्यत्रेति । अत्रास्मि करोमीति अत्राहं करोमीत्यर्थः । अत्रेति । 'सख्यः

---

1 'सज्जेहि'–क. 2 (गा. स. १६२)। 3 'प्रस्थिता'–क. 4 'नाहं विदूरे'–क. 5 'विहितो'–ख.

अत्र 'विविक्तोऽयं देशः इति प्रच्छन्नकामुकः[1] त्वया अभिसार्यताम्'[2] इत्याश्वस्तां[3] प्रति कयाचित् निवेद्यते ॥[4]

गुरुअणपरवस ! पिअ !
　किं भणामि ? तुह मन्दभाइणी अहकं ।
अज्ज पवासं वच्चसि
　वच्च, सअं जेव्व सुणसि करणिज्जं ॥ २१ ॥
[ गुरुजनपरवश ! प्रिय !
　किं भणामि ? तव मन्दभागिन्यहम् ।

---

## मधुमती

अन्यत्रैव तिष्ठन्ति । विजनोऽयं देशः इति प्रच्छन्नकामुकः अत्र प्रेषणीयः' इत्याश्वस्तां रहस्यवयस्यां प्रति कयाचित् द्योत्यते। यद्वा— विविक्तोऽयं देशः इत्याश्वस्तां जातविश्वासां प्रति प्रच्छन्नकामुकः त्वया विसर्जनीयः, अत्र सख्यः संनिहिताः इति स्वगृहं प्रेषणीयः इति ॥ अत्र पक्षद्वयेऽपि वाच्योऽर्थः साधारणसखीविषयः, प्रतीयमानस्तु स्वरहस्यवयस्याविषयः इति बोद्धव्यम् । देशवैशिष्ट्यावगमादेव च प्रकृतार्थप्रतीतिः ॥

गुरुअणेति । कचित् 'अज्ज' इति पाठः । तदा आर्येत्यर्थः । गुरुजनपरवश ! इत्यनेन स्वानधीनत्वम्, तेन च निःस्नेहत्वं व्यज्यते । किं भणामि ? इत्यनेन उपालम्भस्याप्यविषयत्वं व्यज्यते। मन्दभागिन्यहं इत्यनेन 'एवमुदासीने त्वयि याऽहमात्मानमर्पयामि, सा अनाकलितकारिणीति किमु

---

1 इति हेतोः, सख्यादिवेषधारी कामुकः-उपपतिः इत्यर्थः । 2 प्रेर्यतामित्यर्थः । 3 आश्वस्तां—विश्वासवतीम् । 4 'त्वया विसर्ज्यतामित्याश्वस्तया कयाचित् द्योत्यते'-ख.

अद्य प्रवासं व्रजसि
व्रज, स्वयमेव जानासि करणीयम्[1] ॥ २१ ॥]

अत्र[2] 'अद्य मधुसमये यदि व्रजसि, तदा अहं[3] तावत् न भवामि, तव तु न जानामि गतिं' इति व्यज्यते ॥

आदिग्रहणात्[4] चेष्टादेः। तत्र चेष्टायाः यथा—

द्वारोपान्तनिरन्तरे मयि, तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।

---

## सङ्केतः

द्वारोपान्तेति। अत्र मयि इति प्रच्छन्नकामुके ॥

## मधुमती

वक्तव्यं ?' इत्यादिपरिदेवनं व्यज्यते। व्रजसि-व्रज इत्यनेन गाढतरमन्युरूपाभिप्रायावेदनेन 'मा व्रज' इति व्यज्यते। अद्य इत्यनेन 'यत्र चिरप्रवासिनोऽपि गृहमायान्ति तस्मिन् ऋतावुपस्थिते तव गृहत्यागो नोचितः' इति व्यज्यते। स्वयमेव इत्यादिना स्वोत्प्रेक्षानिवृत्तिः व्यज्यते। अत्राद्य मधुसमये इति। सोऽयमर्थः वाक्यार्थव्यङ्ग्यः वसन्तरूपकालवैशिष्ट्यावगमात् प्रतीयते ॥

---

1 प्रवासं गन्तुकामं प्रति प्रियायाः उक्तिरियम्। अद्य वसन्तसमये। यस्मिन् प्रवासिनो गृहमायान्ति तस्मिन्। मया करणीयं मरणं इत्यर्थः। 'भाइणी खु अहं—भागिनी खल्वहम्' इति, 'सुणसि—श्रोष्यसि' इति च पाठान्तरे (गा. स. ८५१)।
2 'अत्र' इति नास्ति–क. 3 'तदहं'–क. 4 'देशकालादेरितिकारिकास्थादिपदादित्यर्थः।

आनीतं पुरतः शिरोंऽशुकं, अधः क्षिप्ते चले लोचने,
वाचस्तत्र[1] निवारितं प्रसरणं, सङ्कोचिते दोर्लते[2]॥२२॥

अत्र चेष्टया प्रच्छन्नकान्तविषयः आकूतविशेषः ध्वन्यते ॥

निराकाङ्क्ष[3]प्रतिपत्तये प्राप्तावसरतया च पुनःपुन-

---

## सङ्केतः

ननु द्वितीयोल्लासेऽपि वाच्यलक्ष्यव्यङ्ग्यानां अर्थानां व्यञ्जकत्वं उक्तम्। तत् किं पुनरुक्तम्? इत्याह[4]—**निराकाङ्क्षेति**। वक्तृबोद्धव्येत्यादि-

## मधुमती

**अत्र चेष्टयेति**। इदमपि वाक्यार्थव्यङ्ग्यम्। चेष्टावैशिष्ट्यावगमः स्फुट एव। प्रत्येकव्यञ्जना तु **काव्यदर्पणे** अनुसन्धेया॥ ननु वक्त्रादि-वैशिष्ट्ये उदाहृते किं द्विकादिभेदोदाहरणेन इत्यत आह—**निराकाङ्क्षेति**। प्रत्येकमेव वक्त्रादिवैशिष्ट्यस्य व्यञ्जकत्वावगमात् विच्छिन्नजिज्ञासुः **निराकाङ्क्षः** **तत्प्रतिपत्तये** इत्यर्थः। अत्राभिधाने बीजमाह—**प्राप्तावसरतयेति**॥ अत्र

---

1 'स्तच्च'–क. 2 स्वकीयभावावबोधकनायिकागतचेष्टाविशेषमवधारितवतः कस्यचन नायकस्य सखायं प्रति उक्तिरियम्। हे सखे! मयि द्वारसमीपे संनिहिते सति सा लावण्यसारलक्ष्मीः मदीया प्रिया स्वकीयं ऊरुद्वयं प्रसार्य अनुपदमेव मिथः संश्लेषितवती। शिरःप्रावरणेन वाससा मुखं किञ्चिदावृत्य चलाभ्यां लोचनाभ्यां भूमिमवलोकितवती। स्वयं मुखमुद्रणेन सखीषु च वाक्प्रवर्तनं निवारितवती। बाहुलते च मिथः समयोजयत् इत्यर्थः। अत्र क्रमात्—कदलीनिविडः प्रदेशः सङ्केतस्थानमिति, चकोराणां भूसावुपवेशनकालः चन्द्रास्तमयः एव सङ्केतकाल इति, जनानां कलकलोपशमः निरीक्षणीयः इति, तत्र च भवदालिङ्गनरूपं पारितोषिकं दास्यामीति च व्यङ्ग्यपरम्पराः इति भाव्यम्। 3 'निराकाङ्क्षत्व'–क. वक्तृवैशिष्ट्यादिषु अनेकेषु एकत्र मिलितेषु यस्य यत्र प्राधान्यं तस्यैव तत्र व्यञ्जकत्वं, अन्येषां तु अनुगुणतामात्रमिति प्रतिपत्तये इत्यर्थः। 4 'रुक्तयेत्याह'–ग.

रुदाह्रियते । वक्त्रादीनां मिथः संयोगे (सति) द्विकादिभेदेन (व्यञ्जकत्वम्) । अनेन क्रमेण[1] लक्ष्य-व्यङ्ग्ययोश्च व्यञ्जकत्वं उदाहार्यम् ॥

तत्र—द्विकभेदे, वक्तृबोद्धव्ययोगे[2] यथा—

अत्ता एत्थ णिमज्जइ,
एत्थ अहं, दिअहए पलोएहि ।
मा पहिअ ! रत्तिअंधिअ !

---

## सङ्केतः

क्रमेणोक्ते निश्चिता प्रतीतिः यथा स्यादित्यर्थः ॥

**मिथः संयोगे** इति । तत्र वक्तृबोद्धव्ययोगे यथा—**अत्ता एत्थेति** । **अत्ता**—श्वश्रूरित्यसहना, न तु माता, तेन गुप्तमभिलाषः पोष्यः । **एत्थ**—अत्र दूरे सा शेते । **अत्र** त्वन्मार्गनिकटे **अहं** उपभोगयोग्या ।

## मधुमती

**द्विकादिभेदेन** इत्यन्तं पूर्वान्वितमेव **उदाह्रियत इति** । उपक्रम्यमाणापेक्षया अतिदिशति—**अनेन क्रमेणेति** । अत्र—' सर्वेषां प्रायशोऽर्थानां ' इत्यनेनैव अर्थव्यञ्जकत्वे दर्शिते किमनेनेत्यत आह—**निराकाङ्क्षेति** । **उदाह्रियते** इति " वर्तमानसामीप्ये वर्तमानवद्वा "[3] इति प्रक्रान्तापेक्षयैवोक्तम्—इत्यपि वदन्ति ॥

---

1 ' भेदे क्रमेण '–क. 2 ' योगो '–क. 3 (पा. सू. ३-३-१३१).

सेज्जाए मह णिमज्जहिसि ॥ २३ ॥

[ श्वश्रूः अत्र निमज्जति,

अत्राहं, दिवसके[1] प्रलोकय ।

मा पथिक ! रात्र्यन्ध !

शय्यायां आवयोः निमङ्क्ष्यसि[2] ॥ २३ ॥]

---

## सङ्केतः

साम्प्रतं विघ्नकारित्वात् कुत्सितं दिवसं **दिवसकम्** । प्राकृते पुंनपुंसकयोरनियमः । तस्मात् सम्प्रति **विलोकय** । मिथो वक्त्रवलोकनेन दिनातिवाहनं कुर्वस्तावदित्यर्थः । **पथिकेति** । पतितेऽपि[3] तव न दोषकारीति, अतो न भेतव्यमिति । रात्रौ **रात्र्या** रक्त्या वा स्मरोद्रेकात् **अन्ध !** शय्याविभागानभिज्ञ ! **शय्यायां, मा आवयोः** अपि तु मयि, **मा शयिष्ठाः**[4] अपि तु प्रहरचतुष्टयमपि क्रीडावः[5] । कांचित् प्रोषितपतिकां तरुणीं विलोक्य जातकामः सम्पन्नः[6] पान्थः अनेन निषेधद्वारेण तया अङ्गीकृतः इति, निषेधाभावः अत्र विधिः, न तु निमन्त्रणरूपः[7] अप्रवृत्तप्रवर्तनास्वरूपः, सौभाग्याभिमानखण्डनप्रसङ्गात् । मह इति निपातः आवयोरित्यर्थे । मम इत्युच्यमाने व्यङ्ग्यस्य

## मधुमती

उदाहरति—**अत्ता इति** । अत्र **आवयोः** इत्यनेन **श्वश्रूशय्या**-साधारण्येन स्वशय्यामुपदर्शयन्त्या परस्य उद्भेदः निवार्यते । अत्र वक्तृप्रतिपाद्ययोः

---

1 'दिवसकमेवं'–क. 2 निमज्जति—जरत्तरत्वेन निष्पन्दा शेते । रात्र्यन्धेति रहस्यं गोपयितुं उक्तम् । मा निमङ्क्ष्यसि इत्यन्वयः । निमङ्क्ष्यसि=शयिष्ठाः । अत्र 'तत्र द्विकभेदे' इत्यारभ्य एतत्पर्यन्तं–ख. पुस्तके नास्ति । 3 'चेतितेऽपि'–ग. 4 'मा शयिष्ठाः. अपि तु मयि, मा आवयोः, मा शयिष्ठाः'–घ. 5 'क्रीड'–ग. 6 'सम्पन्नः' इति नास्ति–ग. 7 'न तु मन्त्ररूपः'–घ.

शब्दप्रमाणवेद्योऽर्थः
व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तत्
शब्दस्य सहकारिता[1] ॥ २३ ॥

शब्देति । न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः[2] ॥

इति श्रीकाव्यप्रकाशे अर्थव्यञ्जकतानिर्णयो नाम
तृतीयः उल्लासः

---

## सङ्केतः

अभिधेयत्वमेव[3] स्यात् । अत्र निषेधे वक्तृबोद्धव्यपर्यालोचनया विधिरूप-व्यङ्ग्यार्थप्रतीतिः । एवं त्रिकादियोगेऽपीति स्वयमूह्यम् ॥ २२ ॥

सहकारितेति । विवक्षितवाच्ये अर्थशक्तिमूले शब्दस्यापि सहकारित्वं

## मधुमती

प्रसिद्धव्यभिचारयोः वैशिष्ट्यावगमात् प्रकृतार्थप्रतीतिः । एवं च प्रत्येकं वक्त्रादिवैशिष्ट्यस्य व्यञ्जकत्वेऽपि क्वचित् पदार्थः समानः, प्रत्येकावधृत-सामर्थ्ययोरिव एकघटकरणे इति भावः ॥ २२ ॥

ननु उक्तोदाहरणेषु शब्दार्थयोरुभयोरपि व्यञ्जकत्वात् कथं अर्थमात्रस्य व्यञ्जकत्वं? अत आह—**शब्दप्रमाणेति** । पदान्तरप्रतिपाद्यस्यापि प्रकृ-तार्थस्य व्यञ्जकत्वात् परिवृत्तिसहत्वेन शब्दस्य अप्राधान्यम् । अत एव अर्थ-प्राधान्यात् अर्थव्यञ्जकत्वं उक्तमिति भावः । **न हीति** । एतदपि प्रकृताभि-

---

1 वाच्यलक्ष्यव्यङ्ग्यरूपः सर्वोऽप्यर्थः व्यङ्ग्यरूपमर्थान्तरं प्रकाशयितुं शब्दरूपं प्रमाणं नियतमपेक्षते एवेति अर्थशक्तिमूले ध्वनावपि शब्दस्य सहकारित्वमस्त्येवेत्यर्थः ।
2 प्रत्यक्षदृष्टकामिजनमिथुनात् तच्चेष्टानुमितरत्यादेश्च आस्वादानुदयादिति भावः । 'वेद्यो व्यञ्जकः'–क. 3 'मिव'–ग.

## सङ्केतः

अस्ति, यतो विशिष्टशब्दाभिधेयतया विना अर्थस्य व्यञ्जकत्वात् ततो द्वयोरपि व्यञ्जकत्वम् । केवलं अर्थस्य मुख्यं व्यञ्जकत्वम् । शब्दस्य तु सहकारिभावेन ॥ २३ ॥

मनोवृत्ते ! भोक्तुं निबिडजडिमोग्राऽपि [1] परितः
परस्मै चेत् काव्याद्भुतपरिमलाय [2] स्पृहयसि ।
समुद्यद्वैदग्ध्य ! ध्वनिसुभग ! सर्वार्थजनने
तदा सङ्केतेऽस्मिन् अवहितवर्तीं [3] सूत्रय रतिम् ॥

इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
तृतीयः उल्लासः

---

## मधुमती

प्रायम्, अशब्दात्मकनेत्रत्रिभागादेरपि[4] व्यञ्जकत्वात् इति स्मर्तव्यम् ॥ २३ ॥

इति श्रीरत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां
मधुमत्यां तृतीयः उल्लासः

---

1 'मोढापि'–ग. 2 'परिमलाय !'–घ. 3 'अवहितवती'–घ.
4 'नेत्रात्त्रिभागादेरपि'–ज.

अथ ध्वनिनिर्णयो नाम

## चतुर्थः उल्लासः

—o—

लक्षणामूलध्वनिः, तद्विभागश्च—

अविवक्षितवाच्यो यः तत्र वाच्यं भवेद् ध्वनौ ।
अर्थान्तरे सङ्क्रमितं अत्यन्तं वा तिरस्कृतम् ॥ २४ ॥ [1]

अभिधामूलध्वनिः, तद्विभागश्च—

विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।
कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥ २५ ॥ [2]

तत्र अलक्ष्यक्रमव्यङ्ग्यस्यविभागः, रसादीनां रसवदाद्यलङ्कारात् भिन्नत्वे हेतुश्च—

रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्कारात् अलङ्कार्यतया स्थितः ॥ २६ ॥ [3]

---

1 ध्वनिर्हि लक्षणामूलाऽभिधामूलविभेदतः । सामान्यतो द्विधा प्रोक्तः ध्वन्यध्वन्यैर्मनीषिभिः ॥ तत्राद्ये लक्षणामूले वाच्यं स्यादविवक्षितम् । विवक्षितं चान्यपरं अभिधामूलकध्वनौ ॥ तत्राद्यो लक्षणामूलः गूढव्यङ्ग्यप्रधानकः । अर्थान्तरे सङ्क्रमितवाच्योऽत्यन्ततिरस्कृतः ॥ द्विविधो लक्षणामूलः समान्येन समीरितः । वाच्यस्यार्थान्तरत्वेन परिणामो यदा भवेत् ॥ अर्थान्तरे संक्रमितवाच्यमाहुः तदा ध्वनिम् । शृणु मे वचनं वत्स! कुरु भक्तिं वृषध्वजे ॥ वाच्यार्थे त्वन्वयायोग्ये स्यादत्यन्ततिरस्कृतम् । प्रिय! त्वय्येव दाक्षिण्यं पुण्यैर्लब्धोऽसि किं परम्? ॥ ७८ ॥
2 यस्तु वाच्यविवक्षायां गूढव्यङ्ग्यप्रधानकः । स विज्ञेयोऽभिधामूलः द्विविधश्चैष कथ्यते ॥ असंलक्ष्यक्रमव्यङ्ग्यलक्ष्यव्यङ्ग्यक्रमात्मना ॥ ७९ ॥ 3 रसभावतदाभासभावशान्त्यादयो यदा । प्राधान्येन स्फुरन्त्येषोऽलक्ष्यव्यङ्ग्यक्रमस्तदा ॥ भिन्ना रसाद्यलङ्कारादलङ्कार्या इमे स्थिताः ॥ ८१ ॥

रसस्वरूपम्—

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ २७ ॥
विभावाः अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥ २८ ॥[1]

रसस्य अष्टधा विभागः—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ २९ ॥[2]

आस्वादैकरूपस्यापि रसस्य भेदकानां स्थायिभावानां भेदाः—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ ३० ॥[3]

---

1 कारणानि—रसः स्मृतः ॥ ८३ ॥ 2 शृङ्गार—रसाः स्मृताः ॥ ८४ ॥

3 स्थायी रतिर्यत्र मतः स शृङ्गाररसः स्मृतः । संभोगविप्रलम्भात्मा शृङ्गारो द्विविधो भवेत् ॥ संभोगोऽङ्गालोकनादिभेदात् यद्यप्यनेकधा । तथापि कामिनी-कान्ताऽऽरब्धभेदात् द्विधा मतः ॥ यथा यथा किरत्येषा कटाक्षविशिखान् प्रिये । तथा तथा वहत्येषः सान्द्ररोमाञ्चकञ्चुकम् ॥ अभिलाषावियोगेर्प्याविप्रवासैश्च शापतः । समुत्पन्नो विप्रलम्भः पञ्चधा परिकीर्तितः ॥ प्रागसङ्गतयोः यूनोः अनुरागेऽपि जाग्रति । अयोगः पारतन्त्र्याद्यैः विप्रलम्भोऽभिलाषजः ॥ भूयोऽपि किं नु पश्यामि प्रियं मन्मथमन्मथम् ? चक्षुः प्रीतिः मनःसङ्गः सङ्कल्पोऽथ प्रजागरः ॥ अरतिः संज्वरः कार्श्यं लज्जात्यागो भ्रमो मृतिः । दशावस्थाः भवन्त्येताः विप्रलम्भेऽभिलाषजे ॥ चक्षुःप्रीतिस्तु कथिता तदेकालोकने रतिः । पश्यन्त्यनिमिषं कान्तं आसीत् चित्रार्पितेव सा ॥ मनस्सङ्गस्तु मनसः तदेकायत्तता सदा । नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः ॥ तत्तु तत्रैव रमते हताः पाणिनिना वयम् । सततं तद्गतां चिन्तां सङ्कल्पं संप्रचक्षते ॥ दुर्लभा वल्लभा नूनं रागोऽपि

मम कोऽप्यसौ। नेक्षे च दूतीं निपुणां न जाने भवितव्यताम् ॥ प्रजागरस्तु चिन्ताभिः निद्राक्षतिरहर्निशम् । निमेषसङ्कथाशून्यं निशि नीलोत्पलश्रियम् ॥ अपनिद्रं दिवाऽम्भोजशोभामेति तदीक्षणम्। अरतिस्तु भवेत् द्वेषः हृद्येष्वपि च वस्तुषु ॥ चन्द्रं कलयते तन्वी चक्रवाकीव पावकम्। संज्वरः तनुसंतापभरः स्मरशरोद्भवः ॥ तापः तस्याः यदि रविः चन्दनादपि शीतलः। कार्श्यं तु स्मरसंतापविहिता तनुता तनोः ॥ ऊर्मिकां कङ्कणं तच्च तनुतेऽङ्गदमद्य सा। लज्जात्यागस्तु कन्दर्पसन्तापेन त्रपाक्षतिः ॥ स्वप्नेऽद्य तेन पृष्टाऽपि भूयो नावोचमुत्तरम्। किं तु कुप्येत मय्येषः इति पृच्छति सा सखीम् ॥ भ्रमः स्यादयथाज्ञानं स्वन्मयं वेत्ति सा जगत्। मृतिस्तु मरणोद्योगः पश्यतीन्दुं ससाहसा ॥ यूनः कुतोऽपि विश्लेषः युक्तयोः विरहो मतः। नास्ति किं तत्र चन्द्रोऽयं येनाद्यापि स नागतः ॥ ईर्ष्याहेतुः विप्रलम्भः विश्लेषः सागसि प्रिये। धन्याऽहं त्वत्प्रियानाम प्रापिताऽस्मि शठाद्य यत् ॥ प्रवासजो विप्रलम्भः प्रिये देशान्तरोन्मुखे। यामीति दयितेनोक्ते कामिन्याः कनकाङ्गदम् ॥ जिज्ञासितुं जीवनाडीं करमूलं किमाश्रितम्। मुन्यादिकोपतोऽश्लेषः विप्रलम्भस्तु शापजः ॥ साध्वीं दृष्ट्वा रहः शापमपि स्मृत्वा स विव्यथे। हासः स्थायी भवेद्यस्य स हास्यरसः इष्यते ॥ विकटास्थिमयी माला वस्त्रं चर्माङ्गदं फणी। उचितोऽहं वरो गौर्याः इतीशः स्मितोऽभवत् ॥ शोकः स्थायी भवेद्यस्य तमाहुः करुणं रसम्। म्रियेत प्रियेण चेदेषः किं करोतु स्तनन्धयः ॥ न चेदसह्यं वैधव्यमिति मोहमियाय सा। क्रोधः स्थायी भवेत् यस्य स तु रौद्ररसः स्मृतः ॥ कुठारोऽयं कठोरास्थिखण्डनोद्यत्खणाकृतिः। भिन्द्यादङ्गानि भूपानां यैः वृथा मे पिता हतः ॥ स्थाय्युत्साहो भवेद्यस्य स वीररस इष्यते। चापमानय सौमित्रे! शरांश्चाशीविषोपमान् ॥ सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः। स्थायी भावो भयं यस्य भयानकरसस्तु सः ॥ घनगर्जितमाकर्ण्य विशन्तो गिरिकन्दराः। ताभ्यः प्रतिध्वनेः भीताः निवर्तन्ते मृगार्भकाः ॥ स्थायी जुगुप्सा यत्र स्यात् स बीभत्सरसः स्मृतः। अन्त्रप्रोतकपालालीभूषणारावभीषणा ॥ पीतच्छर्दितरक्ताक्तस्तना तिष्ठति ताटका। यत्र स्थायी विस्मयः स्यात् सोद्भुताख्यो रसः स्मृतः ॥ अनादिकिटिहंसाभ्यामप्यदृष्टांघ्रिशेखरम्। अहो! महो महदहं महयाम्यधिमानसम् ॥ रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेति स्थायिनां लक्ष्म कथ्यते ॥ चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः। रसत्वं प्रतिपद्यन्ते प्रवृद्धाः स्थायिनस्तु ते ॥ विरुद्धैः अविरुद्धैर्वा भावैः विच्छिद्यते न यः। आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥ भावान्तरोपकार्यत्वात् प्रधानत्वेन ते

व्यभिचारिभावानां भेदाः—

[1] निर्वेदग्लानिशङ्काख्याः तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ३१ ॥

व्रीडा चपलता हर्षः आवेगो जडता तथा ।
गर्वो विषादः औत्सुक्यं निद्राऽपस्मार एव च ॥ ३२ ॥

सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिः तथोन्मादः तथा मरणमेव च ॥ ३३ ॥

---

मताः । मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ॥ इष्टार्थस्य त्वसंप्राप्तौ सैवोत्कण्ठा निगद्यते । हासो विकृतवेषादिदर्शनात् मानसी क्रिया ॥ शोकः चित्तस्य वैधुर्यं अभीष्टविरहादिभिः । प्रतिकूलेषु चित्तस्य वैरस्यं क्रोध उच्यते ॥ चित्तस्य स्थिरता सर्वकार्येषूत्साह इष्यते । भयं चित्तस्य वैक्लव्यं व्याघ्रादिजनितं विदुः ॥ जुगुप्सा निन्द्यताज्ञानं दोषसन्दर्शनादिभिः । अपूर्वदर्शनात् चित्तविस्तारो विस्मयो मतः ॥ अनुभावाः विभावादिजन्याः तद्व्यञ्जिकाः क्रियाः । स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ॥ अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः। सात्त्विकाः परदुःखादि-भावनाभावितात्मजाः ॥ स्तम्भो रागादिसंभूतं निष्क्रियाङ्गत्वमुच्यते । कीलिता कामबाणैः किं निश्चलाऽसीत् तमीक्ष्य सा ॥ प्रलयः सुखदुःखाद्यैः अन्तरिन्द्रिय-मूर्छनम् । हरिणाक्षी तमालक्ष्य मग्ना मोहमहार्णवे ॥ रोमाञ्चः पुलकोद्भेदः स्वेदस्त्वङ्गाज्जलोद्गमः । पुलकैरुद्गिरत्यन्तः कामबाणान् प्रियागमे ॥ स्मरराज्याभि-षिक्तेन स्विन्नाङ्गी कामिनी बभौ । वैवर्ण्यं रागरोषादेः जनिताङ्गविवर्णता ॥ आसीत् प्रियङ्गुश्यामाऽपि शरकाण्डविपाण्डरा । रागभीत्यादिजनितं वेपथुः गात्रकम्पनम् ॥ कदलीव चकम्पे सा यामीति प्रेयसोदिता । अश्रुनेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् ॥ तस्याः प्रियेक्षणोत्कायाः नेत्रे बाष्पपरिप्लुते। भवेत् गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ॥ बाष्पोपरुद्धकण्ठा सा शठं नो वक्ति किञ्चन ॥ १३५ ॥

1 निर्वेद—नामतः ॥ विशेषेणाभिमुख्येन स्थायिनं ज्ञापयन्ति ये ॥ अनु-भावादिहेतूंस्तान् वदन्ति व्यभिचारिणः। दुःखेर्ष्यातत्त्वबोधादेः निर्वेदो निष्फलत्वधीः ॥

**त्रासश्चैव वितर्कश्च विज्ञेया: व्यभिचारिणः ।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ३४ ॥**

---

फलं किमेतैः सखि! मे पद्मैः चण्डकरप्रियैः । बलस्यापचयो ग्लानिः वैवर्ण्यारति-कारणम् ॥ धाराधरादपि गुरुं वेत्ति सा मणिकन्दुकम् । अनिष्टाभ्यागमोत्प्रेक्षा शङ्का-लज्जादिसंभवा ॥ ज्ञास्यत्यन्य इतीश! त्वां हृदा साऽऽप रिरंसया । सर्वाङ्गीणैस्तु पुलकैः अथापि प्रापि लक्ष्यताम् ॥ परोत्कर्षासहिष्णुत्वं असूया परिकीर्तिता । वीक्ष्य प्रियान्वितामन्यां बालाऽऽसीदरुणेक्षणा ॥ संमोहानन्दसंभेदः मदिराऽऽदिकृतो मदः । वदत्यसङ्गतार्थं सा प्रियचिन्तैकतत्परा ॥ श्रमः खेदोऽध्वरत्यादिजातः स्वेदादि-कारणम् । मुहुः त्वदागतिभ्रान्त्या खिद्यते सा गतागतैः ॥ क्रियासु मान्द्यं आलस्यं सुखदुःखमदादिभिः । का वार्ता गृहकृत्येषु त्यक्ताहारविधेस्तनोः ॥ सत्त्वत्यागात् अनौद्धत्यं दैन्यं कार्पण्यसम्भवम् । क्षणं पिधेहि शीतांशुं सखि! ते शतशोऽञ्जलिः ॥ इष्टानभिगमात् ध्यानं चिन्ता शून्यत्वतापकृत् । किमप्युन्नमितैकभ्रूः ध्यायति स्वयमेव सा ॥ मोहस्तु मूर्च्छनं भीतिदुःखावेशानुचिन्तनैः । निरीक्ष्येन्दुं रथाङ्गीव निरी-हाऽऽस्ते निशासु सा ॥ स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते । पुरा तथाऽनु-रक्तस्त्वं जातोऽद्य कथमीदृशः ॥ धृतिः चित्तस्य नैस्पृह्यं ज्ञानाभीष्टागमादिभिः । तदेकसक्तं सच्चित्तं असारं मनुतेऽखिलम् ॥ चेतःसङ्कोचनं व्रीडा स्तुतिरागादिसम्भवम् । तमालोक्याभवत् तन्व्याः मीलितं नयनद्वयम् ॥ भावप्रकाशनपरा चेष्टा चपलतोच्यते । हारं स्पृशत्युत्तरीयं संस्तयत्येक्ष्य सा प्रियम् ॥ मनःप्रसादः हर्षः स्यात् इष्टावाप्त्यादि-संभवः । दृष्टे प्रियेऽभजत् तन्वी वर्षानीपलतोपमाम् ॥ इष्टानिष्टागमात् जातः आवेगः चित्तविभ्रमः । निशम्य स्तनितं सद्यः सस्वजे मानिनी शठम् ॥ जाड्यमप्रति-पत्तिः स्यात् इष्टानिष्टागमादिभिः । प्रिये समागते तन्वी न किञ्चित् बुबुधे क्षणम् ॥ आत्मोत्कर्षोऽन्यधिकारपूर्वो गर्वो बलादिजः । तुल्या मया किं सा धूर्त! रूपेण तव या प्रिया ॥ विषादः चेतसो भङ्गः उपायापायचिन्तनैः । गतं तेनैव मे चेतः मदनो मां न मुञ्चति ॥ दूतीमपि न पश्यामि किमत्र करवाण्यहम् । कालाक्षमत्वं औत्सुक्यं अभिलाषादिहेतुभिः ॥ न परं प्रहरत्यद्य पञ्चबाणः क्षणोऽपि हा! बाह्येन्द्रियाणां वैकल्यं निद्रादुःखश्रमादिभिः ॥ स्वप्ने दृष्ट्वा प्रियं बाहू प्रसारयति सा मुधा ।

शान्तस्य नवमरसस्यापि सत्त्वम्—

निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।[1]

भावस्वरूपम्—

रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥ ३५ ॥
भावः प्रोक्तः[2] ।

---

अपस्मारोऽतिभीत्यादेः आकुलीभाव इष्यते ॥ स्वप्ने प्रयान्तं त्वां मत्वा मा याहीत्याकुला भृशम् । सुप्तं तु सुखदुःखाद्यैः अन्तरिन्द्रियमीलनम् ॥ चिरं निद्राति निश्चिन्तं त्वदाश्लेषसुखादियम् । विबोधः चेतनाऽऽवाप्तिः जृम्भाक्षिपरिमुष्टिकृत् ॥ चिरादुत्स्वप्नतां याता विद्धेवोन्मिषति क्षणात् । क्रोधः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते ॥ याहि याहि प्रिया यत्र कदर्थयसि किं वृथा । अवहित्थाऽऽकारगुप्तिः भवेत् लज्जादिसम्भवा ॥ निह्नोति सत्त्वरागस्य निःश्वासं कम्पितस्तनम् । अपकारिषु पारुष्यं उग्रता तर्जनादिकृत् ॥ जितोऽसि मन्द! कन्दर्प! त्वज्जेताऽस्ति हृदि प्रियः । विमृश्य युक्तिभिः शश्वत् अर्थनिर्धारणं मतिः ॥ और्वाग्निः जृम्भते नेन्दुः यतो दहति मामसौ । व्याधिः शरीरसन्तापः विरहादिकृतो भवेत् ॥ तस्याः शरीरसन्तापः यदौर्वो हिमशीतलः । उत्कण्ठाहर्षशोकादेः उन्मादः चित्तविभ्रमः ॥ आगतेयं प्रियतमेत्यालिङ्गति लतामसौ । मरणं मरणोद्योगः विरहादिभवो मतः ॥ चन्द्रमुद्वीक्षते बाला निजजीवितनिःस्पृहा । त्रासः चित्तस्य संक्षोभः आकस्मिकभयादिभिः ॥ मानिनी स्तनितं श्रुत्वा हठात् आलिङ्गति प्रियम् । सन्देहात् कल्पनाऽऽनन्त्यं वितर्कः परिकीर्तितः ॥ प्रेषयामि सखीं यद्वा स्वयं यामि तदन्तिकम् ॥ १७४ ॥

1 निर्वेदस्थायिकः काव्ये शान्तोऽपि नवमो रसः । संसारे किमसारेऽस्मिन् भक्तिं कुरु भवे मनः ॥ १७५ ॥ 2 रतिर्देवादिविषया व्यञ्जिता भाव उच्यते । श्यामा दूर्वेव वामाङ्गे पाटला देवताऽवतात् ॥ एवं भावतया वेद्याः व्यञ्जिताः व्यभिचारिणः । क्षणेऽपि विरहे तन्व्याः कल्पकोटिशतायते ॥ १७७ ॥

रसाभासभावाभासयोः स्वरूपम्—

तदाभासाः अनौचित्यप्रवर्तिताः ।[1]

भावशान्त्युदयसन्धिशबलतानां निर्देशः—

भावस्य शान्तिरुदयः सन्धिः शबलता तथा ॥ ३६ ॥[2]

रसापेक्षया सातिशयचमत्कारकत्वे भावशान्त्यादीनामपि अङ्गित्वोपपत्तिः—

मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।[3]

लक्ष्यव्यङ्ग्यक्रमविभागः—

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥ ३७ ॥
शब्दार्थोभयशक्त्युत्थः त्रिधा स कथितो ध्वनिः ।[4]

तत्र शब्दशक्त्युद्भवस्वरूपम्—

अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ ३८ ॥

---

1 रसाभासस्तु रत्यादेः अनौचित्यप्रवर्तने । स्मृत्वा दन्दह्यते चेतः दृशाऽप्यस्पृशतीं सतीम् ॥ भावाभासास्तु भावानां अनौचित्यप्रवर्तने । कटाक्षयेत् किं सा बाला पुरा या मां निराकरोत् ॥ १७९ ॥ 2 भावशान्तिस्त्वभिव्यक्ते प्रशमे व्यभिचारिणाम् । विनते विमते तस्याः दृक्कोणं शोणिमाऽत्यजत् ॥ भावोदयः स्यादुत्पत्तौ व्यङ्ग्यायां व्यभिचारिणाम् । किमिदं कुचयोरालीत्युक्ता मुग्धाऽभवन्नता ॥ भावसन्धिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि । सीताकपोलमुकुरे पश्यन् उत्पुलकं मुखम् । रक्षःकलकलं शृण्वन् जयं बध्नाति राघवः ॥ पूर्वपूर्वोपमर्दे तु तेषां शबलता मता । फलं किं बन्धुसंक्षोभात् कातर्यं किं वदेत् जनः । का हानिः किंवदन्त्या मे द्रष्टव्या द्रौपदी कथम् ॥ १८४ ॥ 3 मुख्ये रसे—कदाचन ॥ यथैव राजानुगताः भृत्याः परिणयोन्मुखाः । असंलक्ष्यक्रमव्यङ्ग्यः सप्रपञ्चमितीरितः ॥ १८६ ॥ 4 निरूप्यतेऽथ संलक्ष्यक्रमोऽनुरणनात्मकः । उक्तो बुधैः सः संलक्ष्यक्रमोऽनुरणनोपमः ॥ शब्दार्थोभयशक्त्युत्थः त्रिधाऽयं कथितो ध्वनिः ॥ १८७ ॥

प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा[1]

अर्थशक्त्युद्भवस्वरूपम्, भेदाश्च—

अर्थशक्त्युद्भवोऽप्यर्थः व्यञ्जकः सम्भवी स्वतः ॥ ३९ ॥
प्रौढोक्तिमात्रात् सिद्धो वा कवेः तेनोम्भितस्य वा ।
वस्तु वालङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ ४० ॥
वस्त्वलङ्कारमथवा तेनासौ द्वादशात्मकः ।[2]

---

1 स्यात् पर्यायासहिष्णुत्वे शब्दशक्त्युद्भवो ध्वनिः ॥ अलंकृतेः वस्तुनो वा प्राधान्यात् शब्दशक्तितः । यत्र व्यक्तिर्भवेत् सोऽयं शब्दशक्त्युद्भवो द्विधा ॥ प्रतापवान् इनो भाति भजन्नुदयमुच्चकैः । इत्यत्र शब्दशक्त्युत्थः स्याद्वाक्येऽलंकृतिध्वनिः ॥ अवनी च वनी च त्वद्द्विषां न दिशति स्थितिम् । इत्यत्र शब्दशक्त्युत्थोवाक्ये वस्तुध्वनिर्भवेत् ॥१९१॥ 2 अर्थशक्त्युद्भवोऽन्यो यो लक्ष्यव्यङ्ग्यक्रमस्त्वसौ । अर्थस्य हि स्वतःसिद्ध्या कविप्रौढोक्तिकल्पनात् ॥ वक्तुः कविनिबद्धस्य प्रौढोक्त्या कल्पनात् तथा । त्रैविध्यात् त्रिविधः तत्राप्यर्थस्य त्रिविधस्य च ॥ वस्त्वलङ्कारभेदेन द्वैविध्ये षड्विधो भवेत् । वस्त्वलङ्कारभेदेन व्यङ्ग्यद्वैविध्यतः पुनः ॥ षड्विधो द्विविधीभूय भवेत् द्वादशभेदवान् । अविदूरे निशाऽऽयाति किमित्यालि! विलम्ब्यते ॥ इत्यादौ वस्तुना वस्तुध्वनिः वाक्येऽर्थशक्तिजः । अपुरश्चरणायासं राममन्त्रः फलत्यसौ ॥ इत्यादावर्थशक्त्या स्यात् वस्तुनाऽलंकृतिध्वनिः । मन्यते वज्रनिर्घोषं त्वन्मौर्वीटंकृतिं द्विषः ॥ इत्यलङ्कारतो वस्तुध्वनिः वाक्येऽर्थशक्तितः । मुञ्चन्ति जीवान् निशितैः त्वद्बाणैः सह वैरिणः ॥ इत्यलङ्कारतो वाक्ये विज्ञेयोऽलङ्कृतिध्वनिः । वैरिस्त्रैणस्मितज्योत्स्नां निर्धुनीते भवन्महः ॥ इत्यादौ कल्पितार्थेन वाक्ये वस्तुध्वनिर्मतः । जयश्रीस्त्वां भजत्याजौ सेनाधूल्यन्धकारिते ॥ अलङ्कारध्वनिर्वाक्ये कल्पितेनात्र वस्तुना । सख्युः सृजति पुष्पेषोः प्रीत्यै बाणान् बहून् मधुः ॥ इत्यलङ्कारतो वाक्ये ध्वनिः कल्पितवस्तुनः । हसन्त्यां किल गङ्गां त्वत्कीर्त्या धवलितं जगत् ॥ इत्यलङ्कारतो वाक्ये विज्ञेयोलंकृतिध्वनिः । प्रेमातिमानतो नश्येत् प्रसीद प्रणते प्रिये ॥ इति वक्तृवचस्सिद्धवस्तुना वस्तुनो ध्वनिः । मीलिते स्मरतापेन शठ! तस्या दृगम्बुजे ॥ इति वक्तृवचस्सिद्धवस्तुनाऽलंकृतिध्वनिः । नाहं दूती क्षणं चास्याः न विग्रहः स्मरज्वरः ॥ इति वक्तृवचस्सिद्धालंकृत्या वस्तुनो ध्वनिः । प्रवातकदलीवाऽऽस्ते तमालं वीक्ष्य सा हरे ॥ इति वक्तृवचस्सिद्धालंकृत्याऽलंकृतिध्वनिः ॥ २०६ ॥

शब्दार्थोभयशक्त्युद्भवस्वरूपम्—

**शब्दार्थोभयभूरेकः ।**[1]

ध्वनिभेदसङ्कलनम्—

**भेदा अष्टादशास्य तत् ॥ ४१ ॥**[2] (18)

रसवदादिभेदेन अधिक्यनिरासे हेतुः—

**रसादीनां अनन्तत्वात् भेद एको हि गण्यते ।**[3]

तत्र पदवाक्याश्रयध्वनिविभागः—

**वाक्ये द्व्युत्थः, पदेऽप्यन्ये ।**[4]

---

1 भवेदेकविधस्तत्र शब्दार्थोभयशक्तिजः । मनो हृद्द्विजराजोऽयं भाति सर्वज्ञशेखरः ॥ २०७ ॥ 2 अष्टादशप्रभेदाश्च ध्वनेरेवमुदाहृताः ॥ २०८ ॥ 3 व्यङ्ग्यानां हि रसादीनां यद्यप्यानन्त्यमिष्यते । तथाप्यलक्ष्यक्रमतोपाध्यैक्यादेकतोदिता ॥ २०९ ॥ 4 वाक्य एव भवेदेषः शब्दार्थोभयशक्तिजः । भेदाः सप्तदशान्ये ये वाक्यवत् ते पदेऽपि च ॥ यस्मिन् जीवति जीवन्ति बहवः स तु जीवति । अर्थान्तरे सङ्क्रमितवाच्यतेहावगम्यताम् ॥ धवलिम्ना विलिम्पन्ति यशांसि तव दिक्तटान् । इत्यादिषु पदे वाच्यं स्यादत्यन्ततिरस्कृतम् ॥ संनिधत्ते सदा चित्ते तद्वक्त्रं तरुणीमणेः । असंलक्ष्यक्रमव्यङ्ग्यध्वनिरत्र पदे भवेत् ॥ चित्ते स्फुरतु तद्रूपं हरेः दैत्यद्विपद्विषः । इत्यादौ शब्दशक्त्युत्थः स्यात् पदेऽलंकृतिध्वनिः ॥ समरे त्वद्भुजाशौर्यं पश्यन्त्यनिमिषाः द्विषः । इत्यत्र शब्दशक्त्युत्थः पदे वस्तुध्वनिर्भवेत् ॥ अद्य खड्गसमुच्छेदात् सफलः तद्द्विषां वने । पदे स्यादर्थशक्त्याऽत्र वस्तुना वस्तुनो ध्वनिः ॥ सदा त्वदर्थिनामाशां पूरयस्यवनीपते ! पदे स्यादर्थशक्त्याऽत्र वस्तुनाऽलंकृतिध्वनिः ॥ शुचादोहि पयः स्वस्त्रीगोभिस्तेऽरौ तृणादरे । इत्यलंकृतितो वस्तुध्वनिरूह्यः पदे बुधैः ॥ दैन्यं सहजमेक्ष्य त्वद्द्विषि नूनं दरिद्रता । तमेव श्रयतीत्यत्रालंकृत्याऽलंकृतिध्वनिः ॥ नानावर्णं जगत्पूर्वं त्वत्कीर्तेरवदन् जनाः । इत्यादौ कल्पितार्थेन कल्पितार्थध्वनिः पदे ॥ मधुः प्रसूनमाध्वीभिः ससर्ज सरितो नवाः । इत्यादौ तु पदे क्लृप्तवस्तुनाऽलंकृतिध्वनिः ॥ स्मरः कुक्कुटकाह्वया निवर्तयति किं रणात् । द्वन्द्वमध्येत्यलंकृत्या क्लृप्तवस्तुध्वनिः पदे ॥ जयत्यस्याः कटाक्षेऽद्धा स्वशरान् क्षिपति स्मरः । इत्यादिषु पदे ज्ञेयोऽलंकृत्याऽलंकृतिध्वनिः ॥ शठाधुना सा तनुते साहसं शशिवीक्षणे । इति वक्तृवचस्सिद्धवस्तुना वस्तुधीः पदे ॥ न श्रोतास्यशुभं यावत् तावदेव व्रज प्रिय ! इति वक्तृवचस्सिद्धवस्तुनाऽलंकृतिध्वनिः ॥ कुमुद्वतीव जाताऽद्य वीक्ष्येन्दुं त्वद्युता सखी । इति वक्तृवचस्सिद्धालंकृत्या वस्तुनो ध्वनिः ॥ मेरो ! कैलास ! किं भूभृत्प्रतापैः त्वत्समोऽस्म्यहम् । इति वक्तृवचस्सिद्धालंकृत्याऽलंकृतिध्वनिः ॥ २२६ ॥

तत्र अर्थशक्तिमूलद्वादशविधध्वनेः प्रबन्धाश्रयत्वं च—

प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४३ ॥[1]

रसादिध्वनेराश्रयाः—

पदैकदेशरचनावर्णेष्वपि रसादयः ।[2]

शुद्धभेदानां परिगणनम्—

भेदाः तदेकपञ्चाशत् ।[3] (51)

सङ्कीर्णभेदानां परिगणनम्—

तेषां चान्योन्ययोजने ॥ ४३ ॥

सङ्करेण त्रिरूपेण संसृष्टया चैकरूपया ।

वेदखाब्धिवियच्चन्द्राः ।[4] (10404)

आहत्य सर्वभेदपरिगणनम्—

शरेषुयुगखेन्दवः ॥ ४४ ॥[5] (10455)

इति श्रीकाव्यप्रकाशमूलकारिकासु
चतुर्थः उल्लासः

———

1 प्रबन्धेऽपि द्वादश स्युः अर्थशक्त्युद्भवाः भिदाः ॥ २२७ ॥ 2 पदैकदेश-रचनावर्णेष्वपि रसादयः । जगत्सु स जयत्येकः कृशाऽसि सखि! यत्कृते ॥ रचना-वर्णयोः व्यक्तिं ब्रूमो गुणनिरूपणे। एवं रसादयो व्यङ्ग्याः प्रबन्धेष्वपि भूयसा ॥ २२९ ॥ 3 उक्तरीत्यैकपञ्चाशद्भेदाः शुद्धाः ध्वनेर्मताः ॥ २३० ॥ 4 सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया । तेषां योगे मिथो भेदाः वेदखाम्बुधिखेन्दवः ॥ २३१ ॥ 5 शुद्धभेदैः मिलित्वा तु शरेषुयुगखेन्दवः । वक्ष्ये सा कशिमाऽऽश्लिष्टा शठोच्छ्वसिति साम्प्रतम् । संसृष्टिः सङ्करश्चात्र ध्वनीनामूह्यतां मिथः ॥ २३२ ॥

इति काव्यदर्पणमूलकारिकासु
चतुर्थः उल्लासः

———

## तत्रेयं सोदाहरणपट्टिका ध्वनिभेदसारणी




संलक्ष्यक्रमः
शब्दशक्तिमूलः
अर्थशक्तिमूलः
शब्दार्थोभयशक्तिमूलः
वाक्ये
51
अलङ्कारः
वस्तु
पदे
वाक्ये
पदे
वाक्ये
11
12
13
14
स्वतःसम्भवी
प्रौढोक्तिमात्रसिद्धः
वस्तुना
अलङ्कारेण
वस्तु
अलङ्कारः
वस्तु
अलङ्कारः
प. वा. प्र. प. वा. प्र. प. वा. प्र. प. वा. प्र.
15 16 17 18 19 20 21 22 23 24 25 26
Continued

- प्रौढोक्तिमात्रसिद्धः
  - कविप्रौढोक्तिमात्रसिद्धः
    - वस्तुना
      - वस्तु — प. 27, वा. 28, प्र. 29
      - अलङ्कारः — प. 30, वा. 31, प्र. 32
    - अलङ्कारेण
      - वस्तु — प. 33, वा. 34, प्र. 35
      - अलङ्कारः — प. 36, वा. 37, प्र. 38
  - कविनिबद्धनायकादिप्रौढोक्तिमात्रसिद्धः
    - वस्तुना
      - वस्तु — प. 39, वा. 40, प्र. 41
      - अलङ्कारः — प. 42, वा. 43, प्र. 44
    - अलङ्कारेण
      - वस्तु — प. 45, वा. 46, प्र. 47
      - अलङ्कारः — प. 48, वा. 49, प्र. 50

- संसृष्टिः परस्परनिरपेक्ष संयोगरूपा — 1
- सङ्करः
  - संशयास्पदरूपः — 2
  - अनुग्राह्यानुग्राहक भावरूपः — 3
  - एकव्यञ्जकानुप्रवेश रूपः — 4

एवं एकपञ्चाशत् (५१) संख्याकानां शुद्धभेदानां एकपञ्चाशत्संख्याकैः स्वप्रभेदैः, तेषां चतुर्भिश्च गुणने—(51×51=2601×4=10404 १०४०४ संख्याकाः ध्वनिभेदाः, एवं तैः सह एकपञ्चाशतः शुद्धध्वनिभेदस्य योजने १०४५५ ध्वनिभेदाः सम्पद्यन्ते इति भावः॥ 51

10455)

[प.—पदे। वा.—वाक्ये। प्र.—प्रबन्धे।]

## एषां यथासम्भवं उदाहरणपङ्क्तिका

| | |
|---|---|
| 1 यस्य मित्राणि–७३ | 43 सखि विरचय–६९ |
| 2 त्वामस्मि–२३ | 45 प्रविशन्ती–९० |
| 3 खलव्यवहाराः–७४ | 46 आर्द्रार्द्रकर–७० |
| 4 उपकृतं–२४ * | 48 ज्योत्स्नया–९२ |
| 6 शून्यं वासगृहं–३० | 49 महिलासहस्र–७१ |
| 7 लावण्यं–७५ | 51 अतन्द्रचन्द्रा-७२ |
| 8 प्रेयान्–९८ | संसृष्टिः— स्निग्ध–११२ |
| 9 अनङ्गरङ्ग–३४७ | सङ्करः—(संशय) क्षणप्राघु–१११ |
| 10 मूर्ध्नामुद्वृत्त–३४८ | ,, (अनुग्रा) स्निग्ध–११२ |
| 11 रुधिरविसर–७७ | ,, (एकव्यं) स्निग्ध–११२ |
| 12 उल्लास्य–५४ | रसः—शून्यं–३० |
| 13 भुक्तिमुक्ति–७८ | भावः—कण्ठकोण–४५ |
| 15 सायं स्नानं–७९ | रसाभासः— स्तुमः–४८ |
| 16 अलसशिरोमणि–६० | भावाभासः—राका–४९ |
| 17 अलं स्थित्वा–९३ | भावशान्तिः—तस्याः सान्द्र–५० |
| 18 तदप्राप्ति–८० | भावोदयः—एकस्मिन्–५१ |
| 19 धन्याऽसि–६१ | भावसन्धिः—उत्सिक्तस्य–५२ |
| 21 क्षणदाऽसौ–८२ | भावशबलता—क्वाकार्यं-५३ |
| 22 दर्पान्ध–६२ | शृङ्गारः (सं) शून्यं–३०. त्वं–३१ |
| 24 तव वल्लभस्य–८३ | ,, (वि) अ—प्रेमार्द्राः–३२ |
| 25 गाढकान्त–६३ | ,, वि—अन्यत्र–३३ |
| 27 रात्रीषु–८४ | ,, ई—सा पत्युः–३४ |
| 28 कैलासस्य–६४ | ,, प्र—प्रस्थानं–३५ |
| 30 निशित–८५ | ,, शा—त्वामलिख्य–३६ |
| 31 केशेषु–६५ | हास्यः—आकुञ्च्य–३७ |
| 33 वार्यमाणोऽपि–८६ | करुणः—हा मातः–३८ |
| 34 गाढालिङ्गन–६६ | रौद्रः—कृतं–३९ |
| 36 स मुग्धश्याम–८७ | वीरः—क्षुद्राः–४० |
| 37 या स्थविरमिव-६७ | भयानकः—ग्रीवाभङ्गा–४१ |
| 39 नवपूर्णिमा–८८ | बीभत्सः—उत्कृत्य–४२ |
| 40 ये लङ्कागिरि–६८ | अद्भुतः— चित्रं–४३ |
| 42 सखि नव–८९ | शान्तः—अहौ वा–४४ |

* काव्यप्रकाशे प्रायशः प्रबन्धोदाहरणं त्यक्तमिति ज्ञेयम्।

अथ ध्वनिनिर्णयो नाम

चतुर्थः उल्लासः

—o—

यद्यपि—शब्दार्थयोः निर्णये कृते[1] दोष[2]गुणालङ्काराणां स्वरूपं अभिधानीयम्[3]। तथापि-धर्मिणि[4]

---

## सङ्केतः

स्वरूपं अभिधानीयमिति । अभिधानीयं—वक्तव्यं इति प्रस्तुतम् । अन्ये तु—हितः योग्यः साधुः इत्येतेषां शब्दानां एकार्थत्वात्,[5]

## मधुमती

विष्णवे भक्तचित्ते वर्तिष्णवेऽसुरजिष्णवे ।
सर्वलोकगणान्तर्भ्राजिष्णवे धृष्णवे नमः[6] ।

ननु काव्यस्वरूपे तद्विशेषलक्षणे चोक्ते प्राप्तावसरतया दोषादीनां निरूपणं उचितम् । न तु पुनः काव्यभेदप्रदर्शनं इत्याह—**यद्यपीति** । **धर्मिणि प्रदर्शिते इति** । साकल्येनेति शेषः । पूर्वं धर्मिप्रदर्शनस्य एकदेशरूपत्वात्[7] इति भावः ॥

---

1 निर्दोषरसगुणालङ्कारशब्दार्थयुगलं काव्यमित्युक्तलक्षणे काव्ये विशेष्यभूतयोः शब्दार्थयोः निरूपणे कृते इत्यर्थः । 2 अत्र 'अदोष' इति नञ्प्रश्लेषेण दोषस्य काव्यधर्मत्वोक्त्याभासं केचन परिजहुः । 3 विशेषणीभूतनिर्दोषत्वप्रतियोगित्वेन दोषाणां, विशेषणत्वेन गुणालङ्कारयोश्च निरूपणमुचितमित्यर्थः । 4 काव्ये । 5 पर्यायत्वादिति यावत् । शब्दभेदादर्थभेदस्य अनिवार्यत्वेन तथैव वक्तव्यत्वात् । प्रवृत्तिनिमित्तभेदस्यैव अर्थभेदप्रयोज्यत्वादिति भाव्यम् । 'एकार्थत्वे'–ग. 6 अयं श्लोकः नास्तिः–च. 7 'एकदेशत्वात्'–ज.

**प्रदर्शिते धर्माणां[1] हेयोपादेयता ज्ञायते इति प्रथमं काव्यभेदानाह[2]—**

---

## सङ्केतः

अभिधानाय हितं—**अभिधानीयं** इति व्याचक्षते।[3] **काव्यभेदानिति**। यथाक्रमं उल्लासत्रयेण उत्तममध्यमाधमान् आह इत्यर्थः ॥

## मधुमती

**यद्यपि** च व्यक्त्यपेक्षया साकल्यप्रदर्शनं असम्भवि[4]। तथापि अविवक्षितवाच्यत्वादिरूपोपाधीनां साकल्येन प्रदर्शनं इह विवक्षितमिति भावः।[5] एतच्च उपरिष्टात् आकरे एव स्फुटीभविष्यति। तत्र चतुर्थे—ध्वन्युपाधीनाम्,[6] पञ्चमे—गुणीभूतव्यङ्ग्योपाधीनाम्, षष्ठे—चित्रोपाधीनां च अभिधानमिति द्रष्टव्यम् ॥

**धर्माणामिति**। यद्धर्मविशिष्टानां **हेयता,** यद्विशिष्टानां च **उपादेयता** इत्यर्थः। अत्र[7] दोषविशिष्टानां हेयतेति तदभावविशिष्टानां उपादेयता[8]। गुणालङ्कारयोस्तु[9] स्वरूपत एव तथात्वमिति मन्तव्यम्। यथाश्रुते तु—दोषस्य काव्यधर्मत्वाभावात् असङ्गतिरेव स्यात्। किञ्च रसादिध्वनिनिरूपणं विना दोषादि[10]निरूपणमेव न स्यात्। दोषगुणालङ्काराणां साक्षात् परम्परया वा रसाश्रितत्वात्[11]। रसपदं च सर्वत्र व्यङ्ग्यमात्रपरं रस्यमानत्वगुणयोगात् इति अस्मत्पितृचरणाः। एवं च **प्रथमं काव्यभेदान्** इत्यत्र **काव्यपदं** उत्तमध्वनिकाव्यपरं, प्रकरणात्। **यद्वा**—सामान्यपरमेव। पूर्वता च दोषादिनिरूपणापेक्षया इति कृत्वा यथाश्रुतमेव सम्यक् ॥

---

1 काव्यधर्मभूतनिर्दोषत्वप्रतियोगिनां दोषाणां, धर्मभूतानां गुणालङ्काराणां चेत्यर्थः। 2 पूर्वोक्तध्वन्यादिरूपकाव्यत्रयावान्तरभेदान् आहेत्यर्थः। 3 'नीयं वक्तुं योग्यं इत्यपि व्याख्यान्ति'–ग. 4 काव्यव्यक्तीनां आनन्त्यात् इति भावः। 5 'प्रदर्शनमित्याह—विवक्षितम्'–ज. 6 'ध्वन्यादीनाम्'–ज. 7 'तत्र'–च. 8 'उपादेयतेति'–च. 9 'ङ्कारस्तु'–ज. 10 'दोष'–च. 11 'रसागतत्वात्'–ज.

**अविवक्षितवाच्यो यः**
**तत्र वाच्यं भवेत् ध्वनौ ।**
**अर्थान्तरे सङ्क्रमितं**
**अत्यन्तं वा तिरस्कृतम् ॥२४॥**[1]

---

## सङ्केतः

अर्थान्तरे सङ्क्रमितमिति । सङ्क्रमितशब्दः यदा णिजन्तः[2] तदा—अर्थान्तरे सहकारिसहितव्यञ्जनाव्यापारेण सङ्क्रान्तिं नीतं[3] वाच्यं इति व्याख्येयम् । यदा पुनः इतच्प्रत्ययान्तः[4] तदा—अर्थान्तरे सङ्क्रान्तं इति । व्याख्याद्वयं चेदं अग्रे 'क्वचिदर्थान्तरे परिणमितम्', इति,[5] 'क्वचिदर्थान्तरे परिणतम्' इति च पाठद्वयदर्शनात् कृतम्[6] ॥

## मधुमती

उक्तलक्षणाप्रकारेषु उपादान-लक्षणलक्षणयोः[7] उपयोगं दर्शयति—

**अविवक्षितवाच्यः इति ।** यः **अविवक्षितवाच्यः** सः ध्वनिरिति ज्ञेयः । **तत्र** च अविवक्षितवाच्ये **ध्वनौ वाच्यं, अर्थान्तरे सङ्क्रमितं, अत्यन्तं तिरस्कृतं वा भवेत्** इत्यन्वयः ॥[8]

---

1 उत्तमं ध्वनिकाव्यं सामान्यतः लक्षणामूलं अभिधामूलं चेति द्विविधम् । तत्र लक्षणामूलध्वनौ वाच्यं अविवक्षितमेव भवति । द्वितीये तु विवक्षितमपि वाच्यं व्यङ्ग्यनिष्ठं भवति । तत्र लक्षणामूलत्वे सति गूढव्यङ्ग्यप्रधानकत्वं अविवक्षितवाच्यध्वनेः लक्षणम् । तदेवात्र विभजते अर्थान्तरे इति । यत्र सर्वथा वाच्यार्थस्यानुपयोगेन अर्थान्तरतया परिणामः तत्राद्यः । यत्र तु अर्थान्तरपरिणत्याऽप्यन्वयायोगः तत्र द्वितीयः इति बोध्यम् । संक्रमः—परिणामः । तिरस्कारः त्यागः । 2 'णिगन्तः'–ग. 3 'संक्रान्तिनीतं'–घ. 4 'इतप्रत्ययान्तः'–ग. 5 'परिणमति'–ग. 6 'क्रियते'–ग. 7 'लक्ष्यलक्षणयोः'–च. 8 'इत्यर्थः'–ज.

लक्षणामूलगूढ[1]व्यङ्ग्यप्राधान्ये सत्येव[2] अवि-

## सङ्केतः

लक्षणामूलेति। लक्षणामूलं यत् गूढव्यङ्ग्यं तस्य प्राधान्ये। गूढेति अनुवाद्यतया विशेषणम्, न विधेयतया। प्राधान्योक्त्यैव गूढत्वस्य लब्धत्वात्। न ह्यगूढं प्रधानं स्यादिति। क्वचित्तु—'लक्षणामूलरूढ[3]-व्यङ्ग्यप्राधान्ये' इति पाठः। तदा च एवं व्याख्येयम्—लक्षणैव मूलं ततो रूढं जातं[4] यत् व्यङ्ग्यं तस्य प्राधान्ये इति। अस्मिंश्च पाठे अयं गुणः—यत् लक्षणामूलरूढव्यङ्ग्यत्वस्य सामान्यलक्षणत्वेन उत्तममध्यमकाव्य-भेदयोः प्राधान्याप्राधान्याभ्यां उपयुज्यमानत्वम्। तेन च व्यङ्ग्यस्य अप्रा-धान्येऽपि एतौ भेदौ भवतः[5]। "सर्वत्र हि समान्यलक्षणानुवादेन विशेष-लक्षणं विधेयं"—इति न्यायात्, अत्र उत्तमकाव्यभेदप्रस्तावे लक्षणामूल-गूढव्यङ्ग्येति[6] सामान्यलक्षणमनूद्य प्राधान्ये इति विशेषलक्षणं कृतम्।

## मधुमती

लक्षणामूलेति। अत्र विवक्षितान्यपरवाच्यध्वनिव्यवच्छेदाय लक्षणा-मूलेति विशेषणम्। गूढपदं च अगूढरूपगुणीभूतव्यङ्ग्यव्यवच्छेदाय। 'स्निग्धश्यामले'त्यादौ[7] अत्यन्ततिरस्कृतवाच्याभ्यां,[8] 'राम'पदं अर्थान्तरे[9] सङ्क्रमयद्भ्यां, वाच्य[10]सिद्ध्यङ्गमिति वाच्यसिद्ध्यङ्गत्वात् तद्व्यवच्छेदाय प्राधान्ये सति इत्युक्तम्। एवं च यतः लक्षणामूलगूढव्यङ्ग्यप्रधानं अत एव

---

1 'मूलरूढ'–क. 2 'सति'–क. 3 'मूलज्ञात'–ग. 4 'ततो ज्ञातं'–ग. 5 'अयं गुणः, यत् लक्षणभेदौ भवतः'–घ. 6 'लरूढव्यङ्ग्येति'–ग. 'लव्य-ङ्ग्येति'–घ. 7 इदं च पद्यं अत्रैव उल्लासान्ते उदाहृतम् (११२)। 8 द्रवद्रव्य-संयोगविशेषस्य लेपनस्य अमूर्ते वियति, चित्तवृत्तिविशेषस्य सौहार्दस्य अचेतने मेघे च असंभवादिति भावः। तथाचात्र लेपः व्याप्तौ, सुहृद्भावः अनुबन्धित्वे च पर्यवसन्नौ। 9 राज्यनिर्वासन—जटावल्कलादिधारण—पितृवियोगाद्यसंख्यदुःखपात्रत्वरूपे इत्यर्थः। 10 'वाक्य'–च.

वक्षितं वाच्यं यत्र—सः, 'ध्वनौ' इत्यनुवादात्[1], ध्वनि रिति ज्ञेयः ॥

तत्र च[2] वाच्यं क्वचित् अनुपयुज्यमानत्वात्[3] अर्थान्तरे परिणमितम्[4]। यथा—

---

## सङ्केतः

एवं विवक्षितवाच्यभेदेष्ववगन्तव्यम् ॥

## मधुमती

अविवक्षितवाच्यमित्यर्थः। लक्षणापरतया व्याख्याने तु उत्तरप्रतीकवैयर्थ्यापातः। **स इति**। **सः ध्वनिरिति ज्ञेयः** इत्यन्वयः। तत्र हेत्वपेक्षायामाह—**ध्वनावितीति**। अयमभिसन्धिः—'तत्र ध्वनौ" इत्यनेन ध्वनित्वमनूद्य, तत्र अर्थान्तरसङ्क्रमितवाच्यत्वादि विधीयते। न चात्र ध्वनित्वविधानं श्रूयते, न च अविहितस्य अर्थवाच्यता सम्भवति, इत्यतः **सः ध्वनिः इति ज्ञेयः** इति आक्षिप्य योजितं इति ॥

**तत्र वाच्यमिति**। **अनुपयुज्यमानत्वात्**[5] इति ब्रुवता तात्पर्यानुपपत्तिः तद्विषयीभूतानुपपत्तिर्वा अर्थान्तरसङ्क्रमितध्वनिमूललक्षणाबीजमिति सूचितमिति द्रष्टव्यम्[6] ॥

---

1 अनुवादस्य पुरोवादतात्पर्यग्राहकत्वादिति भावः। 2 अविवक्षितवाच्यध्वनौ चेत्यर्थः। 'च' इति नास्ति–क. 3 यद्रूपेण वाच्यं तद्रूपेण प्रकृते अन्वयस्य अनभिप्रेतत्वात् इति भावः। 4 'परिणतम्'–ख. 5 'मानतया'–च. 6 'बीजमिति द्रष्टव्यम्'–ज.

त्वामस्मि वच्मि, विदुषां समवायोऽत्र[1] तिष्ठति ।
आत्मीयां मतिमादाय[2] स्थितिमत्र विधेहि तत्[3] ॥ २४ ॥

---

### सङ्केतः

त्वामस्मीति । वच्मि—आप्ततया उपदिशामि, न तु वचनमात्रं ब्रवीमि । मतिमादाय—सावधानीभूय । अत्र वचनरूपस्यार्थस्य साक्षात् गृह्यमाणत्वात् वच्मि इत्यस्य अनुपयुज्यमानत्वेन[4] मुख्यार्थबाधः, तुल्ययोग-हेतुजन्यत्वं योगः,[5] बुद्धिपूर्वकत्वसत्यत्वाशेषकथनाकीर्तिभ्रंशाद्यं च प्रयोजनं

### मधुमती

त्वामस्मीति । अस्मि इति अस्मच्छब्दार्थानुवादकं अव्ययम्[6] । अत एव वच्मि इति नोत्तमपुरुषानुपपत्तिः[7] । समवायः—समूहः । अत्रेति विदुषां समवायः[8] । इत्यादिनैव प्रकृतार्थलाभे वच्मि इत्यनुपयोगात् तात्पर्यानुपपत्तिः । धर्मधर्मिभावश्च संबन्धः । उपदेशत्वं लक्ष्यम् । तथा च 'त्वां उपदिशामि' इत्यर्थः । 'मद्वचनं च सर्वं त्वया उपदेशत्वेन ज्ञातव्यम्' इति उपदेश्यत्वप्रतीतिश्च प्रयोजनम् । अत एव वाच्यस्य वि[10]परि-

---

1 'समुदायोऽत्र'—क. 2 'मास्थाय'—ख. 3 नटीं प्रति सूत्रधारस्य वाक्यमिदमिति काव्यदर्पणे। वादाय सभां गन्तुकामं प्रति कस्यचन सुहृदः वचनमिति केचित् । सभायामस्यां विद्वत्समाजः वर्तते, तस्मात् त्वया अत्र आत्मीयां मति-मवलम्ब्य—एकाग्रीकृत्य सावधानतया स्थातव्यमिति अहं त्वां प्रति वदामीत्यर्थः । 4 'मानत्वे'—ग. 5 'जन्यत्वं च सम्बन्धः'—ग. 6 तिङन्तप्रतिरूपकं मिन्-प्रत्ययान्तमव्ययमित्यर्थः। अत्र 'सुन्दरि! नास्मि दूये' इत्यादिः काव्यप्रयोगः, अहंभावः इत्यर्थे प्रयुक्तः 'अस्मिता' इत्यादियोगशास्त्रप्रयोगश्च अनुसन्धेयः। 7 'अस्मद्युत्तमः' (पा. सू. १-४-१०७) इत्यत्र अर्थग्रहणादिति भावः । 8 एक-वाक्यतापन्नः समुदायः इति यावत् । 9 'समूहः'—च. 10 'वि' इति नास्ति—च.

**अत्र वचनादि उपदेशादिरूपतया परिणमति ॥**

---

## सङ्केतः

ज्ञेयम् । अत्र **वचनस्य उपदेश**परिणत्या स्वपरत्वेन अनुपात्तं वाच्यम् । तेन च अविवक्षितं, न पुनः अत्यन्ततिरस्कृतम्, उपदेशस्यापि वचनरूपत्वात् । **वचनादि** इत्यत्र आदिशब्दात् अस्मि इत्यादेः, **उपदेशादि** इत्यत्र आदि-शब्दात् अत्याप्तत्वादेश्च स्वीकारः ॥

अत्र च विषयिणा वचनेन लक्ष्योपदेशरूपोऽर्थः स्वविषयः निगीर्णः इति साध्यवसाना । सम्बन्धान्तरनिमित्तत्वात् शुद्धा लक्षणेयम् । न ह्यत्र वचनोपदेशयोः लेशेनापि सादृश्यं पश्यामः, येन इमां गौणीं साध्यवसानां ब्रूमः । साध्यवसानात्वं च अस्याः लक्षणायाः **अत्र वचनादि उपदेश-रूपतया परिणमति** इत्यक्षरापेक्षया व्याख्यातम् । यावता तु उपादान-

## मधुमती

णामोऽपि सङ्गच्छते । सत्येव वचनरूपे धर्मिणि उपदेशत्वरूपधर्मान्तरापत्तेः सम्भवात्[1] । **आदिपदात् मतिमात्रस्य** अनुपयोगितया प्रामाणिकमतित्वं लक्ष्यम् । सामान्यविशेषभावः सम्बन्धः । सकलवादिविजयः व्यङ्ग्यः ॥

**यत्तु**[2]—आदान[3]क्रियायाः मूर्तमात्रसाध्यतया **सतौ** बाधात् प्राप्तिमात्रं लक्ष्यमिति अत्यन्ततिरस्कृतवाच्योदाहरणमिदम् । **आदिपद**ग्राह्यं तु असकृदुच्चारणादि । यथा "होन्ति कमलाइँ कमलाइँ"[4] इत्यत्र द्वितीय-

---

1 'सम्भवात्' इति नास्ति–ज. 2 'यद्वा'–च. 3 'आधान'–च.
4 'ताला जाअन्ति गुणा जाला ते सहिअएहिं घेप्पन्ति । रइकिरणाणुग्गहिआइं होन्ति कमलाइं कमलाइं ॥' इति पूर्णा गाथा । (का. प्र. उ. ३१६) (आनन्दवर्धनस्य पञ्चबाणलीलायाम् । )

## सङ्केतः

लक्षणाऽपि स्यात् । तथाहि—यत्र आरोपविषयं मनसि कृत्वा अत्यन्ताभेद-प्रतिपत्तये ह्यारोप्यं निवेश्यते तत्र साध्यवसाना शुद्धा लक्षणा । यथा—'आयुरेवेदम्' इत्यत्र । यत्र तु आरोपविषयं प्रति मनोऽपि न धावति तत्र उपादानलक्षितलक्षणे[1] । न ह्यत्र आरोपविषयं उपदेशादि मनसि कृत्वा अत्यन्ताभेदबुद्धये वचनादि विषयिरूपं प्रयुज्यते । तस्मात् **वच्मि** इत्यादि अनुपयुज्यमानं, स्वसिद्धये परस्य उपदेशादेः आक्षेपं करोतीति ॥

## मधुमती

कमलपदं सौरभादिशालिपरम्, इति द्रष्टव्यमिति—तन्न । अमूर्तायां मतौ आदानवत् प्राप्तेरपि बाधात् । प्राप्तिर्यदि बौद्धी[2] विवक्षिता, तर्हि आदान-मपि बौद्धमेवेति क्वामूर्तमतौ तद्बाधः? इति । किञ्च—अत्रेत्युपक्रमात् आदिपदग्राह्यमपि एतत्पद्यनिविष्टमेव भवेदिति तदन्योदाहरणोपादानमपि एतत्सन्दर्भविरुद्धं मन्तव्यम् ॥

**इदं तु विचारमर्हति**—'कुन्ताः प्रविशन्ति' इत्युपादानलक्षणा-मूलव्यङ्ग्यं क्वान्तर्भवतु? न तावत् अत्यन्ततिरस्कृतवाच्ये, स्वार्थापरित्यागात् । नापि अर्थान्तरसङ्क्रमितवाच्ये, परिणामरूपसङ्क्रमस्य अभावात् । न हि **वच्मि** इत्यत्र वचनरूपस्य धर्मिणः उपदेशत्वलक्षणरूपान्तरापत्ति[3]वत्, अत्र कुन्तस्य धर्मिणः रूपान्तरापत्तिरस्ति । कुन्तत्वेनैव तत्प्रतीतेः । पुरुषस्य कुन्तवत्त्वे-नैवोपस्थितावपि परिणामित्वाभावात् । परिणामिनश्च कुन्तस्य लक्ष्यपुरुष-धर्मत्वात् । तथाच कथं वा लक्ष्यतावच्छेदकरूपेण अन्यत्रावधारिता[4] लक्ष्योपस्थितिः वच्मि इत्यादौ परिहार्या? इति । उच्यते—सतो रूपान्तरा-

---

1 'लक्षितलक्षणा'–ग. 2 'बुद्धौ'–ज. 3 त्वलक्षणमूलावान्तरापत्ति'–ज. 4 'त्रापवादिका'–ज.

**क्वचित् अनुपपद्यमानतया[1] अत्यन्तं तिरस्कृतं यथा—**

**उपकृतं बहु, तत्र[2] किमुच्यते ?**
**सुजनता प्रथिता भवता परम् ।**

---

### सङ्केतः

**उपकृतमिति । तत्रेत्युपकृते ।[3] अनुपकारिणं प्रति—'उपकृतम् ,**

### मधुमती

पत्तेरेव परिणामत्वात् । सत्त्वं च धर्मिसाधारणम् । एवं च धर्मिपरिणामो धर्म इव धर्मपरिणामोऽपि धर्म्यैव । तत्र आद्यः 'वच्मीत्यादौ, द्वितीयस्तु 'कुन्ताः प्रविशन्ती'त्यादौ । 'कथं वे'त्यादिदूषणं च तदैव घटते, यदि तथा नियमः स्यात् । न चैवम् । किन्तु—प्रयोजनप्रतीत्यनुरोधेन[4] लक्ष्योपस्थितिरिति, क्वचित् तथा, क्वचिदन्यथा च तदुपस्थितिः[5] । कुन्तवृत्तिसंयोगाश्रयत्वेन कुन्तपुरुषोभयोपस्थितिः इति मते तु सर्वं समञ्जसमेव ॥

**क्वचिदिति । अनुपपद्यमानतया** इत्यनेन मुख्यार्थ[6]बाधो मूलमिहेत्यनुजानाति । **उपकृतमिति ।** अत्र विरोधित्वसम्बन्धेन अपकारो लक्ष्यते । अपकारिणि उपकरणबाधात् तदुपस्थितिः उपकृतत्वरूपेण, प्रयोजनप्रत्ययानुरोधात् । **यद्वा**—अपकारित्वेनैव[7] रूपेण तदुपस्थितिः । तत्पदप्रति[8]पाद्यत्वज्ञानानन्तरं तु तत्प्रतीतिः । एवं अन्यत्रापि बोद्धव्यम् । त्वया

---

1 वाच्यार्थस्य अर्थान्तरपरिणत्याऽपि प्रकृतान्वयानुपयोगितयेत्यर्थः । 'क्वचित्पुनरनुपपद्यमानत्वात्'–क. 2 'यत्र'–क. 'नाम'–ख. 3 'यत्रेत्युपकृते'–ग. 4 'त्यविरोधेन'–ज. 5 'तदनुपस्थितेः'–ज. 6 'मुख्यसिद्ध्यर्थं'–च. 7 'अपकारत्वेनैव'–च. 8 'तत्प्रति'–ज.

विदधदीदृशमेव सदा सखे!
सुखितमास्स्व ततः शरदां शतम्[1] ॥ २५ ॥

एतत् अपकारिणं प्रति विपरीतलक्षणया कश्चित् वक्ति ॥ २४ ॥

---

## सङ्केतः

सुखितं आस्स्व '—इत्युक्तेः अनुपपद्यमानत्वेन[2] मुख्यार्थबाधः। वैपरीत्यं च सम्बन्धः। ततः अनुपकृतत्वं दौर्जन्यादिकं दुःखितत्वेनावस्थानं च लक्ष्यते। गुप्तासभ्यार्थप्रतिपादनेन 'आशु म्रियस्व' इति व्यङ्ग्यम्। यदि वा—'उपकारिणां श्लाघ्यत्वं' इति व्यङ्ग्यम्। शुद्धा साध्यवसाना लक्षणेयम्। अत्र उपकृतत्वादेः वाच्यस्य अत्यन्ततिरस्कारः, अनुपकृतत्वादिना अर्थान्तरेण सर्वथा अनन्वितत्वात्। **तदयं भावः**—यत्र **अनुपयुज्यमानतया** मुख्यार्थ-बाधः, तत्र अर्थान्तरक्रमितवाच्यः भेदः। यत्र तु **अनुपपद्यमानतया** तत्र अत्यन्ततिरस्कृतवाच्यता इति ॥ २४ ॥

## मधुमती

अपकारे कृतेऽपि मया प्रियमेवोच्यते इति आत्मप्रकर्षोऽत्र व्यज्यते। **सुजनतया** दुर्जनता, **सखितया** शत्रुता, **सुखिताऽऽसनेन** दुःखिताऽऽसनं च लक्ष्यते। सम्बन्धप्रयोजने तु पूर्ववत् ॥

---

1 कस्यचित् धीरोदात्तनायकस्येदं वचनम्। सखे! त्वया बहूपकारः कृतः, श्रृणु। अथवा किमनेन विस्तरसंरम्भेण? सारतः त्वया सौजन्यमेव प्रकटितम्। ईदृशमुपकारमेव सदा वितन्वन् संवत्सराणां शतं सुखितं यथा भवति तथा आस्स्व इत्यर्थः। अत्र अपकारिण्यन्वयायोग्यानि उपकृतादिपदानि विपरीतं लक्षयन्तीति भावः। तथा च उपकारेण अनुपकारः, सौजन्येन दौर्जन्यम्, विधानेन अविधानम्, सख्येन शात्रवम्, सौख्येन दुःखिता, संवत्सरशतावस्थानेन सद्योविपत्ति लक्ष्यन्ते ॥

2 'मानत्वे'—न.

## मधुमती

एवं क्वचित् धर्मिणि लक्ष्ये धर्मव्यङ्ग्यता। यथा—'कुन्ताः प्रविशन्ति' इत्यादौ। अत्र हि कुन्तिना[1] धर्मिणा लक्ष्येण बाहुल्यं धर्मः व्यज्यते। क्वचिच्च धर्मे लक्ष्ये धर्मिव्यङ्ग्यता। यथा—

"उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः
गायन्ति मञ्जु मधुपाः गृहदीर्घिकासु।
एतच्चकास्ति च रवेः नवबन्धुजीव-
पुष्पच्छदाभं उदयाचलचुम्बि बिम्बम्" ॥[2]

इत्यादौ। अत्र गाढाश्लेषे धर्मे लक्ष्ये प्रत्यूपारम्भस्य[3] धर्मिणः व्यङ्ग्यता। क्वचित् विशिष्टे लक्ष्ये विशेषान्तरस्य व्यङ्ग्यता। यथा—

'चन्दो चन्दो विअ वराओ'। [चन्द्रः चन्द्र इव वराकः]

इत्यादौ द्वितीयचन्द्रादिपदं कलङ्कित्वादि विशिष्टलक्षकम्। तेन च तदानन्दानिकृष्टत्वं धर्मान्तरं व्यज्यते। क्वचिच्च धर्मे लक्ष्ये धर्मान्तरमेव व्यङ्ग्यम्। यथा—

'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितम्।'[4]

इत्यादौ। अत्र सातिशयत्वं लक्ष्यम्, सौरभातिशयः व्यज्यते। एवं अविवक्षितवाच्यभेदाः ऊहनीयाः ॥ २४ ॥

---

1 कुन्तविशिष्टेनेत्यर्थः। 2 (शार्ङ्गधरपद्धतौ ३७३६. का. प्र. उ. ११४.)
3 'प्रत्युत्थारम्भस्य'–ज. 4 (का. प्र. उ. ९.)

**विवक्षितं चान्यपरं**
**वाच्यं यत्रापरस्तु सः[1]।**

अन्यपरं—व्यङ्ग्यनिष्ठम् ॥ एष च—

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो**
**लक्ष्यव्यङ्ग्यक्रमः परः ॥२५॥**

---

## सङ्केतः

**विवक्षितमिति** । अत्र **अन्यपरत्वेनैव** विवक्षणात्—विवक्षितं चेत् कथं अन्यपरम्? इति विरोधो नाशङ्क्यः। **अपरस्तु सः**। विवक्षितान्यपरवाच्यः ध्वनिः इत्यर्थः। **न लक्ष्यते इति**। शतपत्रपत्रसूचीभेदवत्।

## मधुमती

सम्प्रति विवक्षितवाच्यं लक्षयितुमाह—**विवक्षितमिति**। अत्रापि ध्वनिरिति शेषः। तेन सः अपरः ध्वनिरित्यर्थः। **विवक्षा** च बाधाभावः, न तु वक्तुमिच्छा, अविवक्षितवाच्येऽपि गतत्वात्। पदात् वाच्यं, वाच्यात् लक्ष्यमुपतिष्ठते इति तत्रापि विवक्षासत्त्वात्। एवं च प्रकृतवाच्यबाधाबाधौ[2] विवक्षाऽविवक्षे इति द्रष्टव्यम्। **अन्यपरं**—व्यङ्ग्योपसर्जनम्। न तु अन्यतात्पर्यमित्यर्थः। शब्दशक्तिमूलध्वनौ विवक्षितवाच्यविशेषे अव्याप्तेः। न हि तत्र अपरार्थेऽपि[3] तात्पर्यम्। तथासति अभिधयैव उभयोपस्थितौ व्यञ्जनैव न स्यात्। अत एव वृत्तौ **अन्यनिष्ठं** इत्युक्तम् ॥

एतद्विभजते—**कोऽपीति**[4]। अत्र रसस्य प्राधान्यं आविष्कर्तुं प्रथमं असंलक्ष्यक्रमनिरूपणम् ॥

---

1 अभिधामूलध्वनिं लक्षयति—विवक्षितमित्यादिना। वाच्यतावच्छेदकरूपेण अन्वयबोधविषयत्वं विवक्षितत्वम्, आकाङ्क्षायोग्यतावत्त्वमेव वा। 2 'बाधाभाव'—च. 3 'अपराधेऽपि'—च. 4 कोऽपि—अनिर्वचनीयचमत्कारकारी।

**अलक्ष्येति । न खलु विभावानुभावव्यभिचारिणः एव रसः । अपि तु रसः तैः[1] इति, अस्ति क्रमः[2] । स तु लाघवात्[3] न लक्ष्यते[4] ॥ २५ ॥**

---

## सङ्केतः

रसादिः अर्थः वाच्येन विभावाद्यर्थेन सममेव प्रतीयते इत्यर्थः । अलक्ष्यक्रमत्वप्रतिपादनाच्च न लक्षणागन्धोऽप्यत्रास्ति ॥ २५ ॥

## मधुमती

**यत्तु**—असंलक्ष्यक्रमस्य लक्ष्यक्रमाभावरूपतया तन्निरूपणाधीननिरूपणत्वेन[5] तस्य प्राङ् निर्देशः न युक्तः इति—तत् तुच्छम् । असंलक्ष्यक्रमत्वं हि न लक्ष्यक्रमत्वाभावः, अविवक्षितवाच्येऽपि गतत्वात् । किन्तु नीलपीतयोरिव परस्परविरहव्याप्यत्वम् । अतो नात्र प्रतियोग्यनुयोगिभावः । अत एव 'अनुस्वानाभसंलक्ष्यक्रमे'[6]त्यादि वक्ष्यति । यथा घण्टाभिघातादनन्तरं अविच्छेदेनैव क्रमवन्तः ध्वनयः श्रूयन्ते, एवं शब्दोच्चारणानन्तरमपि अविच्छेदेनैव क्रमवन्तः वाच्यव्यङ्ग्यादयः प्रतीयन्ते । अत एव अविवक्षितवाच्ये नैतद्भेदद्वयम्, बाधितवाच्यविच्छेदात्[7] इति द्रष्टव्यम् ॥

ननु शब्दं श्रुत्वा अनन्तरं विभावादय एव प्रतीयन्ते, न त्वन्यत् । तथा च 'लक्ष्यक्रमः' इत्येव वक्तुमुचितम्, न तु 'अलक्ष्यक्रमः इति, अत आह—**न खल्विति । न** हि **विभावादय एव** प्रतीयन्ते, किन्तु तदुपकृतं अन्यदपि इति, लक्ष्यक्रमत्वं नोपपद्यत इति अलक्ष्यक्रमत्वमुक्तमिति भावः । उपकारश्च—उत्पत्तिः, प्रतीतिः, भुक्तिः, अभिव्यक्तिर्वा इत्यन्यदेतत् । अत एव **अपि तु रसस्तैः** इति साधारण्येनैवोक्तम् ॥ २५ ॥

---

1 अभिव्यज्यते इति शेषः । 2 व्यङ्ग्यव्यञ्जकयोः रसविभावाद्योरिति शेषः । 3 सूक्ष्मकालघटितस्य तस्य अनाकलनादित्यर्थः । 'लाघवात्' इति नास्ति—क. 4 न ज्ञायते । 5 'धीनरूपत्वेन'—ज. 6 (का. प्र. का. ३७). 7 'विभेदात्'—ज.

तत्र[1]—

**रसभावतदाभास-**
**भावशान्त्यादिरक्रमः ।**
**भिन्नो रसाद्यलङ्कारात्**
**अलङ्कार्यतया स्थितः ॥२६॥**

आदिग्रहणात् भावोदयभावसन्धिभावशबलत्वानि । प्रधानतया यत्र[2] स्थितो रसादिः, तत्र अलङ्कार्यः । यथा उदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे[3] यत्र

---

### सङ्केतः

रसाद्यलङ्कारादिति । रसादीनां अलङ्कारः इति विग्रहे—रसालङ्कारो रसवत्, भावालङ्कारः प्रेयः,[4] तदाभासालङ्कारः ऊर्जस्वि,[5] भावशन्तिरलङ्कारः समाहितम् इत्यर्थः । परविश्रान्तिरूपतया रसस्य न शान्तिः इति भावस्यैव शान्तिरुक्ता । प्रधानतयेति । अङ्गितयेत्यर्थः । प्रधानतयेति[6] असाधारणं विशेषलक्षणं काव्यभेदानां उत्तमत्वनिबन्धनम् ।

### मधुमती

अलक्ष्यक्रमं विभजते—रसभावेति । अक्रमः—अलक्ष्यक्रमः । वस्तुतः क्रमसत्त्वात् । अत्र रसभावतदाभासशान्त्यादिः इत्येव वक्तव्ये, मध्ये भावग्रहणं रसशान्त्यादिप्रतिषेधार्थम् । तच्च व्यभिचारिपरम् ।

---

1 अलक्ष्यक्रमव्यङ्ग्य-लक्ष्यक्रमव्यङ्ग्ययोर्मध्ये इत्यर्थः । अस्य कारिकास्थेन अक्रमः इत्यनेनान्वयः । 2 ‘शून्यं वासगृहं’ इत्यादौ । 3 रसान्तरेऽङ्गिनि वाक्योद्देश्ये इत्यर्थः । 4 ‘प्रेयस्वत्’–ग. 5 ‘ऊर्जस्वित्’–ग. 6 ‘त्यर्थः । भेदोपलक्षिताविवक्षितप्रधानतयेति’–घ.

**अङ्गभूतो रसादिः तत्र गुणीभूतव्यङ्ग्ये,[1] रसवत्प्रेय-ऊर्जस्वि[2]समाहितादयः अलङ्काराः। ते च गुणीभूत-व्यङ्ग्याभिधाने[3] उदाहरिष्यन्ते ॥ २६ ॥**

---

## सङ्केतः

अतः सर्वोत्तमकाव्यभेदेषु प्रधानतया इत्यनुषञ्जनीयम्। भेदोपलक्षिताविवक्षितविवक्षितवाच्यसंलक्ष्यासंलक्ष्यक्रमत्वं तु मध्यमकाव्येष्वपि सम्भवात् सामान्यलक्षणम्। विशेषलक्षणं सामान्यलक्षणाव्यभिचारि स्यात्। सामान्यलक्षणं तु न विशेषलक्षणाव्यभिचारि इति ध्येयम् ॥ २६ ॥

## मधुमती

तथाहि—रसस्य विभावादिजीवितावधित्वेन तदपगम[4] एव शान्तिर्वक्तव्या। न च[5] तदनुपकृतो व्यञ्जनया प्रतिपद्यते,[6] नास्त्यव्यक्तः[7] चमत्कुरुते इति, रसशान्तिः नोक्ता। रसोदयस्तु रसाभिव्यक्तिपर्यवसन्न एव, तस्य नित्यत्वात्। रससन्धिः रसशबलता वा न सम्भवत एव, रसानां विगलितवेद्यान्तरत्वात्। नापि स्थायिनः, विभावाद्यसंवलने[8] रसतया तेषां अनभिव्यक्तेः, तत्संवलने च रसतापर्यवसानेन विगलितवेद्यान्तरत्वात्। ननु रसादयो रसवदलङ्काराः, ते च गुणीभूताभिधाने अभिधातुमर्हाः। न तु ध्वन्यभिधाने इत्यत आह—**भिन्न** इति। तथा च रसादीनां यत्र अपराङ्गता तत्र गुणीभूतव्यङ्ग्यत्वम्, अन्यत्र तु प्रधानतया ध्वनित्वम् इति उभयत्राभिधानं अविरुद्धमिति भावः ॥ २६ ॥

---

1 'अयं स रसनोत्कर्षी' इत्यादौ। 2 'ऊर्जस्वित्'–क. 3 पञ्चमोल्लासे इति यावत्। 'व्यङ्ग्ये'–क. 4 'तदवगम'–च. 5 'स च'–च. 6 'पाद्यते'–छ. 7 'स चाव्यक्तः–च. 8 'द्यसङ्कलने'–च.

तत्र रसस्वरूपमाह—

**कारणान्यथ कार्याणि**
**सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके**
**तानि चेत् नाट्यकाव्ययोः ॥२७॥**
**विभावाः अनुभावास्तत्**[1]
**कथ्यन्ते व्यभिचारिणः ।**

---

### मधुमती

**कारणानीति** । कारणं तत्तद्रससमुचितं अङ्गना[2]नवयौवनादि[3] । कार्यं स्वेदादि[4] । सहकारीणि[5] चिन्तादीनि । ते यदा **काव्येन नाट्येन**—अभिनयेन वा प्रतिपाद्यन्ते, तदा **विभावानुभावव्यभिचारि**-भावसंज्ञां लभन्ते इत्यर्थः । **रत्यादेः स्थायिनः** इत्यभेदान्वयः । **तदिति** । तदेत्यर्थः । क्वचित्तु 'अनुभावाश्च' इति पाठः । तत्रापि **चकारस्य** अयमेवार्थः । अव्ययानां अनेकार्थत्वात् ॥

**अयमभिसन्धिः**—लोके सरागस्य पुंसः तादृशः सुदृशो वा[6] दर्शनश्रवणादिना मिथः प्रथमं युगपत् अयुगपद्वा प्रीतिः[7] उत्पद्यते । तत्र

---

1 'अनुभावाश्च'–क. 2 'अङ्गं'–च. 3 कारकरूपं उद्दीपकरूपं चेत्यर्थः। 4 स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलयः इत्यष्टौ सात्त्विकाः मताः ॥ इत्युक्तं, वाङ्मनोबुद्धिशरीरजन्यं काकूक्त्यादि च । 5 तेषु कार्येषु जनयितव्येषु इति शेषः। 6 तत्समानरागवतः, निरतिशयसौन्दर्यवतो वा इत्यर्थः । 7 'प्रतीतिः'–च.

## मधुमती

रूपशीलावण्ययौवनतज्जन्यचेष्टाऽलङ्करणऋतुचन्द्रसमीरणादयोऽपि प्रीत्युत्पादकाः[1] परस्परज्ञानस्य[2] सहकारितां भजन्ते। ततश्च जातप्रीत्योः यूनोः मिथः अभिलाषः जायते। अमुमेव बाह्यरतिमाचक्षते[3]। ततश्च मिथो लाभोपायं जिज्ञासमानयोः चिन्ताग्लानिविषादादयः प्रादुर्भवन्ति। तदनुप्रीतिचिन्तादिजनिताः तदुभयोर्नायिका:[4] चेष्टाः जायन्ते। तदनन्तरं उपायारूढयोः स्वयं दूतादिना वा सति सङ्गमे, प्रीतिरनुवर्तते। चिन्तादयस्त्वपगच्छन्ति ॥

तत्र प्रीतिः स्थायिभावः। चिन्तादयः व्यभिचारिणः। तदुभयप्रकाशिकाः[5] चेष्टाः अनुभावाः। स्थायिनो विषयः आलम्बनविभावः। आलम्बनान्यस्थायिजनकालम्बनज्ञानविषयाः रूपशीलादयः उद्दीपनविभावाः। तद्वत्तया ज्ञातस्य आलम्बनस्य प्रीत्युत्पादकत्वात्। एवं च तद्वत्तया आलम्बनज्ञानं जनकम्। 'इयं मम, अहं अस्याः' इत्यादिरूपं प्रीत्यादिनामकं ज्ञानं जन्यमिति विज्ञेयम् ॥

**इदं त्ववधातव्यम्**—याः यौवनोद्भूताः चेष्टाः तासां उद्दीपने, याश्च प्रीत्यादिजनिताः तासां अनुभावे च अन्तर्भावः। प्रीतिजनकज्ञानविषयत्वाविशेषेऽपि युवानौ कारणमेव[6]। तद्गुणादयस्तु कारणान्यपि उद्दीपकानि। अत एव सङ्गतयोरपि तत्तदालोकनात्[7] चेतोविकारः जायते। उद्दीपनं च प्रीतेः अभिलाषे जनयितव्ये स्वलक्षणसहकारिसमवधानम्। न च अत एव उद्दीपकतया अन्यथासिद्धत्वात् न तानि कारणानीति वाच्यम्। प्रीतिजनक-

---

1 'प्रीत्यन्ताः दश'–च. 2 अन्योन्यनिर्दिष्टभावविशेषावबोधस्येत्यर्थः।
3 'रतमित्याचक्षते'–च. 4 'तदुभयोः नायिकानायकयोः'–छ. 5 'प्रकारिकाः'–ज.
6 'युवानोऽकारणमेव'–च. 'युवानौ पौरणमेव'–ज. 7 'तत्तथाऽऽलोकनात्'–ज.

**व्यक्तः स तैः विभावाद्यैः**
**स्थायी भावो रसः स्मृतः[1] ॥२८॥**

---

## मधुमती

ज्ञानविषयत्वेन आलम्बनरूपकारणत्वात्, सहकारितया उद्दीपकत्वाच्च। एवं सर्वरसेष्वप्युन्नेयम् ॥

इदानीं स्वाभिमतं पक्षं सिद्धवदाह—**व्यक्तः इति। व्यक्तः**—दध्यादिवत् रूपान्तरतां आपन्नः। नात्र घटदीपयोरिव पूर्वसिद्धयोः प्रत्याय्य-प्रत्यायकभावतया, किन्तु—ज्ञानविषयीभूयैव[2] अभिव्यक्तः इत्यर्थः। अत्र **तैः व्यक्तः** इत्येतावतैव सामञ्जस्ये पुनः **विभावादि**ग्रहणं 'नामी प्रत्येकं वशीभवितुमीशते, किन्तु मिलिता[3] एव' इति विभावयितुम्। एतच्च अग्रे स्फुटयिष्यति ॥

---

1 अयं भावः—लोके--काव्यनाट्यातिरिक्त-कामिनीकामुकव्यवहारस्थले यानि तदीयरत्यादेः कारणानि-कामिनीकामुकरूपाणि उद्यानचन्द्रोदयमन्दमारुतादीनि च, तत्कार्याणि—स्वेदरोमाञ्चकटाक्षादीनि, तत्सहकारीणि—तत्परिपोषहेतुभूतानि निर्वेद-ग्लानिचिन्तादीनि च, तानीमानि नाट्ये-अभिनयप्रधाने नटव्यापारे दृश्ये, काव्ये-श्रव्ये च यदि चित्रितानि स्युः, तदा क्रमेण कारणानां विभावाः इति, कार्याणां अनुभावाः इति, सहकारिणां व्यभिचारिणः इति च संज्ञाः स्युः। एतैश्च विशेषेण व्यक्तः—पानकरसन्यायेन मिश्रणेनैव आस्वादनीयतां प्राप्तः, स्थायी-चिन्तादिवत् चञ्चलताविहीनः रत्यादिः भाव एव रसः इत्युच्यते इति ॥ तत्र रत्यादयः अमीभिः भाव्यन्ते इति भावाः। रत्यादिकं अनुभावयन्ति=अनुमापयन्तीत्यनुभावाः। विविधमाभिमुख्येन चरन्तीति व्यभिचारिणः इति संक्षेपः ॥ 2 'भूयेह'-ज. 3 'मिलित्वा'-ज.

उक्तं हि[1] भरतेन—

"विभावानुभावव्यभिचारिसंयोगात् रसनिष्प-त्तिः।"[2] इति॥

---

## सङ्केतः

[१ तत्र भट्टलोल्लटादिमतम्]

एतत् इति भरतमुनिसूत्रम्। विभावैरिति। वागङ्गसत्त्वाभिनयात्मिकाः[3] स्थाय्यादिचित्तवृत्तयः विभाव्यन्ते—विशिष्टतया ज्ञायन्ते सभ्यैः

## मधुमती

स्वोक्ते वृद्धसंमतिमाह—उक्तं हीति। चत्वारो भरतटीकाकाराः इति संयोगनिष्पत्तिपदयोः क्रमेण तेषां व्याख्यानमाह—एतदिति।

---

1 'उक्तं च'–क. 2 अत्र—एवं बहूनां संयोगात् अपूर्वो रसः उत्पद्यमानः क्व दृष्टः? इति जिज्ञासायां स्वयमेवाह भरतः—'यथा हि नानाव्यञ्जनौषधिसंयोगात् रसनिष्पत्तिः भवति, यथा हि गुडादिभिः द्रव्यैः व्यञ्जनौषधिभिश्च षाडवादयो रसाः निर्वर्तन्ते, तथा नानाभावोपगताः अपि स्थायिनः भावाः रसत्वमाप्नुवन्ति। अत्राह—रसः इति कः पदार्थः? आह—आस्वाद्यत्वात्। कथमास्वाद्यते रसः? यथा हि नानाव्यञ्जनसंस्कृतं अन्नं भुञ्जानाः रसान् आस्वादयन्ति सुमनसः पुरुषाः, हर्षादींश्चाभिगच्छन्ति; तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावान् अस्वादयन्ति सुमनसः प्रेक्षकाः, हर्षादींश्च अधिगच्छन्ति। तस्मात् नाट्यरसाः इत्यभिव्याख्यास्यामः॥" इति॥ (नाट्यशास्त्रे ६-३४) अस्य सूत्रस्य–मीमांसको भट्टलोल्लटः, नैयायिकः श्रीशङ्कुकः, सांख्यः भट्टनायकः, आलङ्कारिकः अभिनवगुप्तश्च स्वस्वमतानुसारेण विवृण्वते इति भाव्यम्॥ 3 वागङ्गसत्त्वानां अभिनयैः सहिता इति यावत्। सत्त्वं चात्र अभियुक्तं जीवच्छरीरम्।

एतत् विवृण्वते—

विभावैः—ललनोद्यानादिभिः आलम्बनोद्दीपन-कारणैः स्थायी—रत्यादिको भावः जनितः, अनु-भावैः—कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिश्च[1]—निर्वेदादिभिः सहकारिभिः

---

**सङ्केतः**

एभिः कृत्वा इति विभावाः[2]। **अनुभावैरिति**। वागङ्गसत्त्वाभिनयैः चित्तवृत्तिरूपं अर्थं अनुभवन्तः अनुभाव्यन्ते—साक्षात्कार्यन्ते जनाः एभिः इति अनुभावाः। ते चात्र न रसजन्याः ग्राह्याः। तेषां रसकार्यत्वेन गणनाऽनर्हत्वात्। अपि तु स्थायिनामेव ये अनुभावाः। **व्यभिचारिभिरिति**। विविधं आभिमुख्येन स्थायिधर्मोपजीवनस्वधर्मार्पणाभ्यां चरन्तीत्येवं-शीलाः व्यभिचारिणः। अथवा—व्यभिचरन्ति रसाद्युपयोगेन[3] जन्ममध्ये न सर्वथा भवन्त्यपीत्येवंशीलाः। **निर्वेदादिभिः सहकारिभिरिति**। चित्तवृत्तीनां क्रमभावित्वात् व्यभिचारिरूपाः चित्तवृत्तयः यद्यपि स्थायिरूप-चित्तवृत्तिभिः समं न सहकारितां यान्ति। तथापि व्यभिचारिचित्तवृत्त्युदये

**मधुमती**

**भट्टलोल्लटप्रभृतयः** इति सम्बन्धः। **व्यभिचारिभिश्चेति**। अत्र— "**निर्वेदादिभिः** इति अतद्गुणसंविज्ञानो बहुव्रीहिः। तेन ग्लान्यादिभिः इत्यर्थः बोद्धव्यः। निर्वेदस्य रसान्तरानुपकारकत्वात्। निर्वेदे च तस्य स्थायित्वात्" इति **केचित्**। तन्न। निर्वेदस्य रसान्तरानुपकारित्वे "व्यभिचारित्वेऽपि स्थायित्वाभिधानार्थम्' इति विरुद्ध्येत। किञ्च—

---

1 'च' इति नास्ति—क.　2 बहवोऽर्थाः विभाव्यन्ते वागङ्गाभिनयात्मकाः। अनेन यस्मात् तेनायं विभावः इति संज्ञितः, इति भरतः॥　3 'रसायनाद्युपयोगेन'—ग.

**उपचितः,[1] मुख्यया वृत्त्या रामादौ अनुकार्ये तद्रूपताऽनु[2]सन्धानात् नर्तकेऽपि[3] प्रतीयमानः रसः—**

---

## सङ्केतः

स्थायिचित्तवृत्तीनां वासनात्मतया सद्भावात् स्थायिभिः सह व्यभिचारिणः सहभाविनः । **प्रतीयमानो रसः इति** । अयं भावः—**विभावैः जनितः अनुभावैः प्रतीतिं** नीतः **व्यभिचारिभिः उपचितः मुख्यया वृत्त्या अनुकार्ये तद्रूपतानुसन्धानात्** अनुकर्तर्यपि **प्रतीयमानः** स्थायी भावः **रसः**

## मधुमती

" न हि सुलभवियोगा कर्तुमात्मप्रियाणि
प्रभवति परवत्ता, शासने तिष्ठ भर्तुः ।
अहमपि तव सूनावद्य विन्यस्य राज्यं
विचरितमृगयूथान्याश्रयिष्ये वनानि ॥ "[4]

इत्यादौ ऊर्वशीविरहशङ्किनः पुरूरवसः सत्यपि निर्वेदे, पुनर्नारदागमनेन तल्लाभनिश्चये सत्यां रतौ निर्वेदापगमेन,[5] तद्व्यभिचारित्वानुभवात् । तस्मात् यत्र रसे यो **व्यभिचारी** सम्भवति तै **उपचितः** इति यथाश्रुत एवार्थः ॥ काव्यमधिकृत्याह—**मुख्ययेति** । अभिधयेत्यर्थः । **अनुकार्ये प्रतीयमानः** इति अग्रेतनेन सम्बन्धः ॥

---

1 तथा च अनुपचितावस्थः स्थायीभावः उपचितावस्थस्तु रसः इति भावः । 2 ' तद्रूपानु '—ख. 3 ' अपि ' इति नास्ति—क. ' नटेऽपि '—ख. 4 तापसीवेषधारिण्या सत्यवत्या आनीतं स्वकुमारं प्रेक्ष्य ' आपुत्रदर्शनं प्रियेण सह समागमस्तव ' इति इन्द्रशासनं स्मरन्ती यदा उर्वशी रोदिति, तदा समाधत्ते राजा—न हीत्यादिना । अयि सुन्दरि ! पराधीनता खलु सुलभं स्वमनोरथविघटनकारिणी । पराधीनः खलु स्वकामनानुकूलं किमपि कर्तुं न पारयति । अतो यथेन्द्रशासनं वर्तस्व । ततश्च त्वयि स्वर्गं गतायां अहमपि कुमारे आयुषि अद्यैव राज्यं संस्थाप्य मृगसङ्घाध्युषितनि वनानि अवगाहिष्ये इत्यर्थः । (विक्रमोर्वशीये ५-१७) । 5 ' दावगमेन '—च.

## मधुमती

इदमत्राकूतम्—लौकिक[1]सामग्र्युत्पन्न एव रसः मुख्यः। स च रामस्य पुरैव सीतागोचरज्ञानेन रतिरूपो जनितः, अनुभावेन प्रतीतः, व्यभिचारिभिश्च पुष्टः। न त्विदानीं क्वाप्यन्यत्र जन्यते प्रतीयते वा, सामग्रीविरहात्। किन्तु—इदानीं पदार्थसंसर्गवत्तात्पर्यानुगामिन्या अभिधयैव रामादिनिष्ठं काव्येन प्रतीयते इति। यदाहुः—'तात्पर्यं चतुराद्दतम्'[2] इति। वक्ष्यति च वृत्तिकार एव पञ्चमोल्लासे पूर्वपक्षग्रन्थे—'सोऽयमिषोरिव'[3] इत्यादिना॥

एतेन—"न रामादौ अनुकार्ये रसः उत्पद्यते, तस्य तदानीं असत्त्वात्, नाप्यनुकर्तरि नटे, अभिनयाविष्टचित्तत्वात्, सीतादीनां अतदालम्बनत्वाच्च। न सामाजिके, अत एव[4] सामाजिकत्वाविशेषेण ग्राम्यविरक्तयोः तत्प्रसङ्गाच्च" इत्यादि निरस्तम्॥

नाट्यमधिकृत्याह—तद्रूपतेति। अनुकरणीयरामादिरूपतानुसन्धानबलादित्यर्थः। तथाच—तद्रूपारोपात् तन्निष्ठरसारोपो नटे इति भावः। क्वचित् 'नर्तकेऽपि' इति पाठः। तत्रापि नटेऽपीत्येवार्थो बोद्धव्यः। नर्तकस्य पदार्थाभिनेतृतया वस्त्वनुकर्तरि नटे तदसम्भवात्॥

एवं च—विभावरसयोः कार्यकारणभावः, अनुभावरसयोश्च प्रत्याय्यप्रत्यायकभावः, व्यभिचारिरसयोश्च पोष्यपोषकभावः सम्बन्धः। निष्पत्तिरपि उत्पत्तिज्ञप्तिपुष्टिभेदात् त्रिरूपैव। तथा च इदं सूत्रं एकतया आपाततः प्रतीयमानमपि उक्तयुक्त्या त्रितयमिति ज्ञेयम्॥

---

1 'पौरिक'–ज. 2 'च तुलाद्दतं'–च. 3 'सोऽयमेषां वा'–च.
4 'तत एव'–ज.

इति भट्टलोल्लटप्रभृतयः ॥[1]

---

## सङ्केतः

इति । विभावानुभावव्यभिचारिसंयोगात् स्थायी परिपुष्टः रसतां यातीति तात्पर्यम् ॥

## मधुमती

वस्तुतस्तु—उक्तयुक्त्या कारणैः कार्यैः सहकारिभिः इति वृत्तिस्वरसाच्च प्रकृतसूत्रस्य भट्टलोल्लटमते लौकिकरसपरत्वनिर्णये व्यभिचारिसहकृतस्य स्थायिनः अनुभावहेतुतया आर्थेन क्रमेण शाब्दः क्रमः लङ्घ्यते । तथाच—विभावात् स्थायिनः उत्पत्तिः, व्यभिचारिणश्च स्वलक्षणसहकारिसमवधानरूपा पुष्टिः, अनुभावात् प्रतीतिः इति प्रकृतसूत्रार्थः अस्य मते पर्यवस्यति ॥

---

1 'लोल्लटादयः'–क. अयमत्र सङ्ग्रहः—अत्र मते—स्थायिनां विभावेन सह उत्पाद्योत्पादकरूपात् संबन्धात्, अनुभावेन सह गम्यगमकरूपात् संबन्धात्, व्यभिचारिभिः सह पोष्यपोषकभावरूपात् संबन्धाच्च रसस्य क्रमेण उत्पत्तिरूपः, अभिव्यक्तिरूपः, पुष्टिरूपश्च निष्पत्तिः भवति इति सूत्रार्थः । एवं च विभावैः जनितः अनुभावैः प्रतीतः व्यभिचारिभिश्च परिपुष्टः रत्यादिको भावः मुख्यो रसः । स च वस्तुतः सीतादिगोचरः रामादावेव वर्तते नान्यत्र । स एव काव्ये–तत्तद्विभावादिप्रतिपादकैः पदैः अभिधाख्यया मुख्ययैव वृत्त्या सहृदयैः प्रतीयमानः, नाट्ये तु—रामाद्यनुकर्तरि नटे असन्नपि तुल्यरूपतानुसन्धानवशादारोप्यमाणतया सामाजिकैः तथा प्रतीयमानश्च रसः इत्युच्यते । तस्य च साश्चर्यानुभवः तत्र चमत्कारहेतुः इति ।

## सङ्केतः

### [२ श्रीशङ्कुकमतम्]

एतन्नेति श्रीशङ्कुकः। तथाहि—विभावाद्ययोगे स्थायिनोऽवगमः[1] न घटते, अवगमकस्याभावात्। न हि धूमं विना पर्वतस्थः अग्निः अवगम्यते। अपि च—'स्थायिनः संयोगात् रसीभवन्ति' इत्येतद्यदि मुनेर्मतं स्यात्, तदा स्थायिभावानां उद्देशं लक्षणं च आदावेव अभिदध्यात्। अथ च आदौ रसानां उद्देशलक्षणे अभिहिते। कुतश्च रसानामेव विभावानुभावान् विस्तरेण[2] पूर्वमुक्त्वा, तानेव स्थायिनां लेशेन पुनराह ?। न चोत्पत्तौ पदार्थानां कारणं उक्त्वा, पुष्यतां पुनः तदुत्पत्तौ कारणं वक्तव्यम्। वैयर्थ्यात्॥ किञ्च—'अनुपचितः स्थायी भावः, उपचितो रसः स्यात्' इत्युच्यमाने, एकैकस्य स्थायिनः मन्द-मन्दतर-मन्दतमादिविशेषापेक्षया आनन्त्यं स्यात्। एवं रसस्यापि तीव्र-तीव्रतर-तीव्रतमादिभेदस्य असङ्ख्यत्वं प्रसज्येत॥ अथ—'उपचयं प्राप्त एव रसः' इत्युच्यते, तर्हि स्मित-हसित-[3]विहसिताद्याः षड्भेदाः[4] हास्यरसस्य न स्युः। अपरं च—'प्रागवस्थो भावः[5] स्थायी, रसीभवति तु[6] क्रमेणोपचितः' इत्यत्रापि व्यत्ययः दृश्यते, यस्मात्—इष्टवियोगजः महान् शोकः क्रमेण शाम्यत्येव, न तु दृढीभवति, एवं क्रोधोत्साहरतयश्च निजनिजकारणोद्भूता अपि कालवशात् अमर्षस्थैर्यसेवाविपर्यये अपचीयन्त एव। तस्मात् न भावपूर्वकत्वं रसस्य, अपि तु तद्विपर्यय एव। यदाह मुनिः—"रसपूर्वकत्वं भावानाम्। भावपूर्वकत्वं तु रसस्य विषयविशेषापेक्षया। तथाहि—प्रयोगे अनुकर्तरि रसं[7] आस्वादयतां अनुकार्ये

---

1 'नोऽवगमनं'—ग.　2 'विस्तारेण'—घ.　3 'स्मितावहसित—घ.
4 अत्र आद्यपदेन उपहसित—अपहसित—अतिहसितानि ग्राह्याणि। 5 'प्रागवस्थाभावः'—ग.　6 'न तु'—ग.　7 'रसान्'—घ.

(१) 'राम एवायम्' 'अयमेव रामः' इति[1], (२) 'न रामोऽयम्' इति औत्तरकालिके बाधे 'रामोऽयम्' इति, (३) 'रामः स्याद्वा न वाऽयम्' इति,[2] (४) 'रामसदृशोऽयम्' इति च सम्यङ्-मिथ्या-संशय-सादृश्य-

## सङ्केतः

भावप्रतीतिः जायते इति इति प्रथमपक्षोत्थानम्। लोके तु भावदर्शनात् तत्स्वरूपरसनिष्पत्तिः इति द्वितीयःपक्षः"[3] इति ॥

**वयं तु ब्रूमः**—अत्र मते—लौकिकस्य साक्षात् रामादिगतस्य रसस्य, लोकोत्तरस्य च नाट्यादिप्रत्येयस्य सभ्यरसनीयस्य च नान्तरं किमपि विभाव्यते। **अन्यच्च**—नटे अनुकर्तरि यदि रसः स्यात्, तदा तस्य लयाद्यननुसरणं प्रसज्येत। नटेन च विभावाद्यैः काव्यशिक्षादिप्रकाशितैः अनुकार्यगताः विभावादय एव अनुक्रियन्ते, न त्वनुकार्यगतो रसः, परचित्तवृत्तीनां अलक्ष्यमाणत्वेन अनुकर्तुं अशक्यत्वात् इति ॥ तस्मात् अन्यथोच्यते—**राम एवायमिति**। अत्र आद्ये रामस्य प्राधान्यम्। इदमर्थस्य तु द्वितीये। अनेन उल्लेखयुगलेन **सम्यक्प्रतीतिः** उक्ता। **रामोऽयं** इति

## मधुमती

**राम एवायमिति**। उपलक्षणमिदम्। 'अयं रामो भवत्येव' इत्यतोऽपि विभेदः[4] ग्राह्यः। **सम्यङ्मिथ्येति**। अत्र—सावधारणत्वं

---

1 तत्र राम एवायमिति रामत्वायोगव्यवच्छेदिका, अयमेव रामः इति अन्ययोगव्यवच्छेदिका, रामो भवत्येवेति अत्यन्तयोगव्यवच्छेदिका, न रामोऽयं इति रामभेदावगाहिनी चेति चतस्रः प्रतीतयः सम्यक्प्रतीतयः। व्यवच्छेदादिविषयकत्वं इह सम्यक्त्वम्। 2 'स्यान्न वेति'—क. 3 अयं च केवलं भावानुवादः। 'द्वितीयः पक्षः' इति नास्ति—घ. 4 'त्वभेदेऽपि भेदः'—च. 'त्वभेदोऽपि भेदः'—ज.

प्रतीतिभ्यः विलक्षणया चित्रतुरगादिन्यायेन 'रामोऽयम्' इति प्रतीत्या[1] ग्राह्ये नटे—[2]

---

## सङ्केतः

प्रतीतिः मिथ्या, न रामोऽयं इत्येवंरूपबाधस्य औत्तरकालिकस्य समुदयादित्यर्थः। चित्रेति। चित्रचित्रिन्तेततुरगदृष्टानेत्यर्थः। तदाह—

"प्रतिभाति न सन्देहः न तत्त्वं न विपर्ययः।
धीरसावयमित्यस्ति नासावेवायमित्यपि॥
विरुद्धबुद्ध्यसम्भेदात् अविवेचितविप्लवः।[3]
युक्त्या पर्यनुयुज्येत स्फुरन् अनुभवः कया?॥"[4]

इति। अत्र विरुद्धाः—सन्देहरूपाः। अविवेचितविप्लवः—असंविज्ञातानेकरूपत्वावभासः। प्रतीत्येति। इयं च लोकोत्तरा नटग्राहिका प्रतीतिः॥[5]

## मधुमती

सम्यक्त्वम्। बाधशिरस्कत्वं मिथ्यात्वम्। तेन—'प्रतीतेः[6] सम्यङ्मिथ्यावैलक्षण्यं असम्भवि, नटे रामत्वप्रतीतेः[7] भ्रमत्वाच्च' इति दूषणं अलग्नकं वेदितव्यम्॥

---

1 निर्गलितावधारणादिरूपयेत्यर्थः। इदमेव पातञ्जलानां विकल्पात्मकं ज्ञानम्। शब्दज्ञानानुपाती वस्तुशून्यो हि विकल्पः इति। 'प्रतिपत्त्या'–क. 2 अस्य 'अनुमीयमानोऽपि' इत्यग्रिमेणान्वयः। एवं च उक्तप्रतीत्या नटे विषयीकृते सति, तेनैव नटेन यदा उक्तकारणकार्यसहकारिणः अभिनयेन प्रकाश्यन्ते, तदा ते विभावादिपदव्यपदेश्याः भवन्ति इत्यर्थः। ननु नटेन विभावादिप्रकाशनं कथं? कथं वा तेन तत्कार्यस्वेदादिप्रकटनम्? तस्मिन् तत्कारणविभावाद्यभावात् इत्यत आह—सेयं इत्यादि। 3 'विक्रियः'–घ. 4 (अभिनवभारत्याम्—६-३४.) 5 'अज्ञातानेकरूपावभासः। एतेन लोकोत्तरा नटग्राहिका प्रतीतिरित्यर्थः।'–ग. 6 'प्रतीते'–च. 7 'नटरामत्वप्रतीते'–ज.

"सेयं ममाङ्गेषु सुधारसच्छटा
सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीः मनसः शरीरिणी
प्राणेश्वरी लोचनगोचरं गता ॥ २६ ॥"[1]

"दैवादहमद्य[2] तया चपलायतनेत्रया वियुक्तश्च ।[3]
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ २७ ॥"[4]

---

## मधुमती

ननु—परप्रतीतेः[5] रामभेदावगाहित्वेन रसानङ्गतया व्यवच्छेदेऽपि, सावधारणप्रतीतिवैलक्षण्याभिधानं कुतः? इति चेन्न । अतिरिक्तव्यवच्छेदभाने तथाभूतप्रत्ययस्यापि रसानङ्गत्वात् । तेषां विगलितवेद्यान्तरत्वात् ॥

वक्ष्यमाणानुमितिहेतुलिङ्गपरामर्शोपायमाह—**सेयमिति** । **सुपूरं** निर्मलम् । अत्र **मनोरथश्रीः** मनस एव भवतीति **मनसः** इति अयोगव्यवच्छेदार्थम्[6]—

'तत्साधवो न न विदन्ति विदन्ति सत्यम् ।'

इत्यत्र द्वितीय'वदन्ति'पदवत्—इति वदन्ति ॥

---

1 यद्विरहात् मया तादृशानि आचिन्तनीयानि दुःखान्यनुभूतानि, सेयं प्राणेश्वरी, मम सर्वावयवसन्तापनिर्वापणक्षमनिरतिशयनिर्वृतिजननी, स्निग्धत्वशीतलत्वादिभिः लोचनानन्दकन्दलनक्षमा, चुम्बनालिङ्गनादिविषयाः ये मनसो मनोरथाः तेषां अक्षय्यसम्पद्रूपा, प्रिया इदानीं लोचनगोचरं गता इत्यर्थः । एतादृशानां सम्भोगशृङ्गारविषयाणां आलम्बनविभावविषयाणां वा काव्यानां अनुसन्धानबलादित्यन्वयः । 2 'मत्र'–ख. 3 'विमुक्तश्च'–ख. 4 केवलं दुरदृष्टवशात् तया चटुलदीर्घलोचनया प्रियया वियोगमुपगतोऽहम् । निबिडवलमानवलाहकोऽयं प्रावृट्कालश्च समुपागतः । किं वा करोमि? । इति विप्रलम्भशृङ्गारविषयाणां उद्दीपनविभावविषयाणां वा काव्यानां अनुसन्धानबलाच्चेत्यन्वयः । 5 'प्रतीते'–ज. 6 तद्विषयकमनोरथैः मनसः सर्वदाऽप्ययोगव्यवच्छेदार्थमित्यर्थः । 'अन्ययोगव्यवच्छेदार्थमि'–च. 'अन्वयो रसव्यवच्छेदार्थम्'–ज.

इत्यादिकाव्यानुसन्धानबलात्,[1] शिक्षाऽभ्यासनिर्वर्तित-स्वकार्यप्रकटनेन च,[2] नटेनैव प्रकाशितैः कारणकार्य-

---

## सङ्केतः

काव्यानुसन्धानेति। अत्र प्रथमात् काव्यात् रामोक्तत्वेन अनुसंहितात् आलम्बनविभावः। द्वितीयात्तु कारणरूपः उद्दीपनविभावः प्रकाश्यते। शिक्षाभ्यासेति।[3] यथोपदेशं परिशीलनेन हि स्थायिकार्याः कटाक्षादयः अनुसन्धीयन्ते। न हि अशिक्षितः अनभ्यासी च नटः रोमाञ्च-स्वेदाद्यनुभावाभिनयक्षमः। अभ्यासेन निर्वर्तितं यत् व्यभिचारिकार्याणां कृत्रिमनिजानुभावानां प्रकटनं तेन। निर्वेदादयो हि व्यभिचारिणः स्वस्व-रुदिताद्यनुभावस्वरूपकार्यकारिणः सर्वेऽपि प्रत्येकं भवन्त्येवेति, व्यभिचारिणः

## मधुमती

इत्यादीति। अत्रापि प्रथमेन आलम्बनविभावः, द्वितीयेन च उद्दीपन-विभावः उक्तः। शिक्षेति। शिक्षाऽभ्यासेन निर्वर्तितं जनितं यत् स्वकार्यं व्यभिचारिकार्यं रोमाञ्चादि तत्प्रकटनेन इत्यर्थः॥

यद्यपि च—अनुभावव्यभिचारिणोः कार्या[4]दुपस्थितिः नाट्येऽपि भवत्येव।[5] तथापि नाट्यस्य अभिनयत्वात् तत एव चमत्कारानुभवात् तथैव क्रम आदृतः। अन्यथा काव्यरसात् अविशेषप्रसङ्गः इति स्मर्तव्यम्॥ एवं च—शब्दात् विभावस्य, प्रत्यक्षात् रोमाञ्चादीनां, तद्रूपलिङ्गात् व्यभि-

---

1 'इत्यादिकारणबलात्'–क. 2 उपदेशेन पुनः पुनः परिशीलनेन च सम्पादितं यत् स्वकर्तव्याभिनयप्रकाशनं तेन चेत्यर्थः। 3 'शिक्षाभ्यासादपि'–ग. 4 'णोरपि काव्या'–च. 5 'आविर्भवत्येव'–ज.

**सहकारिभिः, कृत्रिमैरपि तथा अनभिमन्यमानैः,[1] विभावादिशब्दव्यपदेश्यैः संयोगात्—गम्यगमकभाव-**

---

## सङ्केतः

अनुसन्धेयाः। स्थायी तु काव्यबलादपि नानुसन्धेयः। 'रतिः शोकः' इत्यादयो हि शब्दाः रत्यादिकं अभिधेयीकुर्वन्ति अभिधानत्वेन, न तु वाचिकाभिनयरूपतया अवगमयन्ति। न हि वागेव वाचिकम्, अपि तु तया निर्वृत्तम्, अङ्गैः आङ्गिकमिव। तेन—

" विवृद्धात्माऽप्यगाधोऽपि दुरन्तोऽपि महानपि।
बाडवेनेव जलधिः शोकः क्रोधेन पीयते॥ "

इत्येवमादौ न शोकोऽभिनेयः, अपि तु अभिधेय एव॥ **कृत्रिमैरपीति**। नाट्यकाले मुख्यरामाद्यभावात् कृत्रिमत्वम्। **तथा** कृत्रिमतया। **संयोगात्** सम्बन्धात्। सम्बन्धमात्रेऽपि संयोगशब्दः प्रयुज्यते। स चात्र **गम्यगमकभावात्मा**। तत्र रसः गम्यः, विभावादिः[2] गमकः।

## मधुमती

चारिणां च उपस्थितिः। ततः तत्प्रभवसंस्कारजन्यतावद्गोचरस्मृतिः। ततो मनसा तत्सहकृतेन पक्षीभूतनटवृत्तित्वज्ञानम्—इति प्रघट्टकतात्पर्यम्॥

ननु व्यभिचारिजन्य[3]रोमाञ्चादिना कथं तदनुमितिः? अत आह-**कृत्रिमैरिति**। न हि स्वरूपसन्तः ते स्थायिनं व्यभिचारिणो वा अनुमातुं ईशते। किन्तु ज्ञाता एव। ज्ञानं च भ्रमरूपं विशेषादर्शनदशायां इहापि न विरुद्धम्। नटे रामत्वारोपेण[4] भ्रमस्य सुश्लिष्टत्वात्। **गम्यगमकभाव-**

---

1 वस्तुतोऽसद्भिरपि कृत्रिमत्वेनागृहीतैः। 2 'गम्यः भावादिः'–ग. 3 'चार्यजन्य'–ज. 4 'नटरामत्वारोपे'–ज.

रूपात्[1] अनुमीयमानोऽपि, वस्तुसौन्दर्यबलात् रस-
नीयत्वेन अन्यानुमीयमानविलक्षणः[2] स्थायित्वेन
सम्भाव्यमानः[3] रत्यादिः भावः तत्र[4] असन्नपि
सामाजिकानां वासनया चर्व्यमाणः[5] रसः—इति

---

## सङ्केतः

वस्तु रसरूपम्। रसनीयत्वेन कषायफलचर्वणपर-पुरुषदर्शनप्रभव-मुखप्रसेक-कलनाकल्पया[6] रसनीयस्वरूपतया अन्येभ्यः अनुमीयमानेभ्यः विलक्षणः। **सम्भाव्यमानः** इति। हेत्वादिदर्शने सति 'हेतुमदादिभिर्भाव्यम्'[7] इति सम्भावना। तत्र नटे वस्तुतः **असन्नपि सामाजिकानां** सभ्यानाम्। मुख्यरामाद्यनुगतस्थाय्यनुकरणरूपः, अत एव[8] नामान्तरेण व्यपदिष्टः रत्यादिः **रसः**॥ तथा च रतिः अनुक्रियमाणा शृङ्गारः, हासः अनुक्रियमाणः हास्य-

## मधुमती

**रूपादिति**। व्याप्ते[9]रित्यर्थः। रसस्य अनुमेयत्वे वह्न्यनुमिताविव[10] चमत्कारानुपपत्तिः अत आह—**वस्तुसौन्दर्येति**। ततश्च अनुमीयमान-

---

1 गम्यं साध्यं, गमकः हेतुः, तयोः भावः व्याप्तिः–विभावादिसत्त्वे रतेरवश्यं-भावः इत्येवंरूपा, तद्रूपात् सम्बन्धात्। 'गम्यगमकरूपात्'–क. 2 अन्यः—'पर्वतो वह्निमान् धूमात्' इत्यादिलौकिकस्थले अनुमीयमानः यः वह्न्यादिः तद्विलक्षणः। 3 ज्ञायमानः। 4 नटे। 5 विभावाद्युपस्थितिप्रभवसंस्कारजन्य-तावद्गोचरस्मृतिसहकृतव्याप्तिस्मृतिमता मनसा पुनः पुनरनुसन्धीयमानः इत्यर्थः। 6 'प्रसेकक्लिन्नताकल्पनया'–ब. 7 'भक्तिर्भाव्यम्–ग. 8 'रूपः अनुकरण-रूपत्वादेव च'–ग. 9 'रूपादतिव्याप्ते'–ज. 10 'मिता एव'–च.

श्रीशङ्कुकः ॥ [1]

---

## सङ्केतः

रसः इत्यादि सिद्धम् ॥ मिथ्याज्ञानादपि अर्थक्रिया परं स्यादेव। यदाह धर्मकीर्तिः—

" मणिप्रदीपप्रभयोः मणिबुद्ध्याऽभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां[2] प्रति ॥ " [3] इति ॥

## मधुमती

रत्यादिपदार्थस्य प्रकर्षकाष्ठाप्राप्तं मनोहरत्वं वस्तुसौन्दर्यम्, तद्बलादित्यर्थः। एवं च—विषयमाहात्म्यादेव चमत्कारः इति तात्पर्यम्। अनुमानशरीरं च—रामोऽयं सीतालम्बनशृङ्गारा[4]श्रयः, तद्विभावादिसम्बन्धित्वात्। न यदेवं, न तदेवम्। यथा अहम्। इति। काव्ये भट्टलोल्लटमतादभेदः[5] इति तत्र विशेषो न दर्शितः ॥ [6]

---

1 अयं भावः—नाट्ये भेदावगाहिताद्रूप्यप्रतीतेः रसप्रतीतिविरोधात्, संयोग-निष्पत्तिपदयोः उक्तप्रकारेण अर्थत्रयपरताकल्पने गौरवात् अयुक्तत्वात् स्थायिभावपदस्य अध्याहार्यत्वाच्च लोल्लटमतं अयुक्तम्। किन्तु चतुर्विधप्रतीतिविलक्षणया रामोऽयमिति प्रतीत्या विषयीक्रियमाणेन नटेन काव्यानुसन्धानात् शिक्षादिबलाच्च अभिनीतैः विभावादिभिः तस्मिन् अविद्यमानोऽपि रत्यादिः अनुमीयमानः भावुकैः समाजिकैः चर्व्यमाणः रसः इति व्याख्येयम्। अत्र व्याप्तिरूपः सम्बन्धः संयोगपदार्थः, अनुमितिरूपा सामाजिकचर्वणैव निष्पत्तिपदार्थः इति च ज्ञेयम् ॥ 2 'र्थः क्रियां'–घ. 3 (न्यायविन्दौ।) 4 'न कृतशृङ्गारा'–च. 5 'मताद्भेदः'–ज. 6 'विशेषो नटविषयः'–ज.

## सङ्केतः

### [३. भट्टनायकमतम्]

नैतदपीति भट्टतोतः। तथाहि — अनुकरणरूपो रसः इति यदूचे—[1] तन्न। किञ्चिद्धि प्रमाणेनोपलब्धं तदनुकरणं इति वक्तुं शक्यम्। यथा— 'एवमसौ सुरां पिबती'ति सुरापानानुकरणत्वेन जलपानं प्रत्यक्षेक्षितं भाति। इह च नटगतं किं तदुपलब्धं सत् रत्यनुकरणतया[2] भाति? इति तावत् चिन्त्यम्। तद्वपुः, तन्निष्ठं प्रतिशीर्षकादि,[3] रोमाञ्चगद्गदिकादि, भुजाक्षेपवलनादि, भ्रूक्षेपकटाक्षादि च, न[4] चित्तवृत्तिरूपरतेः अनुकारत्वेन कस्यचित्[5] भाति; जडत्वेन भिन्नेन्द्रिय[6]ग्राह्यत्वेन भिन्नाधिकरणत्वेन च, ततोऽतिवैलक्षण्यात्। तथाहि—नटवपुरादीनां जडत्वं चक्षुर्ग्राह्यत्वं च, रतेः अजडत्वं अचक्षुर्ग्राह्यत्वं[7] च। प्रतिशीर्षकादीनां वपुः अधिकरणम्, रतेस्तु मनः अधिकरणम्। मुख्यदर्शने च तदनुकृत्याभासः[8]। न च रामरतिं उपलब्धपूर्वी कश्चित्। एतेन—रामानुकारो नटे इत्यपि निरस्तम्॥

अथ नटगता चित्तवृत्तिरेव प्रतीता सती रत्यनुकारः शृङ्गारः? तत्रापि किमात्मकत्वेन प्रतीयते? इति चिन्त्यम्। ननु प्रमदाऽऽदिभिः कारणादिभिः लिङ्गैः या लौकिकी कार्यकारणसहचररूपा चित्तवृत्तिः प्रतीतियोग्या, तदात्मकत्वेन सा नटचित्तवृत्तिः भाति। हन्त! तर्हि रत्याकारेणैव सा भातीति, दूरे रत्यनुकृतिवाचोयुक्तिः। ननु ते विभावादयः अनुकार्ये वस्तुसन्तः, इह तु अनुकर्तरि न तथा, इति विशेषः। अस्त्वेवम्। किन्तु ते विभावादयः

---

1 'इति वदेत्'—ग. 2 'किञ्चिदुपलब्धं स इत्यनुकरणतया'—ग. 'किञ्चिदुपलब्धं सत्यन्यत्र प्रमाणोपलब्धेऽनुकरणतया'—घ. 3 प्रतिशीर्षकं—अभिनयविशेषः। 4 'द्विवचनं'—घ. 5 'अनुकरणत्वेन न कस्यचित्'—ग. 6 'जडत्वभिन्नेन्द्रिय'—घ. 7 'मनोग्राह्यत्वं च'—ग. 8 तदनुकरणप्रतिभासः इति यावत्।

### सङ्केतः

अतत्कारणाः अतत्कार्याः अतत्सहचररूपाः[1] अपि काव्यशिक्षादिबलादानीताः कृत्रिमाः सन्तः, कृत्रिमत्वेन सभ्यैः गृह्यन्ते न वा? इति विवेचनीयम्। यदि गृह्यन्ते, तदा तैः कथं रतेः अवगतिः? । ननु अत एव तत् प्रतीयमानं रत्यनुकरणम्? मुग्धबुद्धे![2] हेत्वन्तरजाते हि कार्ये विशेषविदा हेत्वन्तरजत्वेन ज्ञाते रत्यनुकाररूपवस्त्वन्तरस्य अनुमानं तावत् भवेद्युक्तम्। अविशेषविदा तु तस्यैव मुख्यरतिरूपस्य प्रसिद्धस्य हेतोः—यथा वृश्चिकविशेषात् गोमयस्यैव अनुमानम्। सर्पस्य वृश्चिकस्यैव वा तत् परं मिथ्याज्ञानम्॥

अयं भावः—प्रसिद्धात् रामादिगतात् रतिरूपात् हेतोः रत्यनुकरणं नाम हेत्वन्तरम्, तज्जाश्चेत् अनुभावाः[3] स्युः। तथैव च विशेषविदा यदि ज्ञायेरन्, तदा रत्यनुकरणरूपवस्त्वन्तरस्य अनुमानं युज्येत। न चैवम्। तत्[4] कथमिव रत्यनुकारप्रतीतिः? अविशेषविदा तथाविधानुभावादिदर्शने[5] रतिरेवानुमीयते। तच्च मिथ्याज्ञानमेव इति॥

यत्रापि लिङ्गज्ञानं मिथ्या, तत्रापि तदाभासानुमानं अयुक्तम्। न हि धूमत्वेन ज्ञातात् बाष्पात् अग्न्यनुकारानुमितिः[6]। एवं तदनुकारत्वेन[7] भासमानादपि लिङ्गात् न तदनुकारानुमानं युक्तम्। न हि धूमानुकारत्वेन ज्ञायमानात् तुषारात् वन्ह्यनुकारजपापुञ्जप्रतीतिः दृष्टा॥

ननु अक्रुद्धोऽपि नटः क्रुद्ध इव भाति। सत्यम्। क्रुद्धेन सदृशः सः। सादृश्यं च भ्रुकुट्यादिभिः, गोरिव गवयेन मुखादिभिः, इति नैतावता अनुकारः कश्चित्। न च सभ्यानां सादृश्यं भाति, नापि सभ्यानां[8] भावशून्या नर्तके प्रतिपत्तिः इत्युच्यते। अथ च तदनुकारप्रतिपत्तिः इति स्ववचनविरोधः॥

---

1 'विभावादयः अनन्तकारणानन्तकार्यानन्तसहचाररूपा'—ग. 2 'बुद्धेः'—व. 3 'अनुभवाः'—ग. 4 'तत्' इति नास्ति—घ. 5 'भावादर्शने'—ग. 6 'अग्न्यनुमानं'—घ. 7 'तदनुकरणत्वेन'—ग. 8 'भाति अतो हेतोः सभ्यानां च न'—ग.

## सङ्केतः

यच्चोक्तम्—'रामोऽयं' इति अस्ति प्रतीतिः इति—तत्रापि यदि न बाधकोदयः, तत् कथं न सम्यग् ज्ञानम्? यदि च बाधकोदयः, कथं न मिथ्या? वास्तवेन वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात्। तेन—'विरुद्धबुद्ध्यसम्भेदात्' इत्यसत्। ननु नर्तकान्तरेऽपि 'रामोऽय'मित्यस्ति प्रतीतिः! ततश्च रामत्वं सामान्यरूपमित्यायातम्॥

विभावाश्च काव्यात् अनुसन्धीयन्ते—इत्यपि न। न हि 'ममेयं सीता काचित्' इति स्वात्मीयत्वेन प्रतीतिर्नटस्य। अथ सभ्यस्य तथा प्रतीतियोग्याः क्रियन्ते इत्येतावदेव अनुसन्धानम्, तर्हि स्थायिनि सुतरां अनुसन्धानं स्यात्। तस्यैव हि[1] मुख्यत्वेन 'अस्मिन् अयं' इति सभ्यानां प्रतीतिः॥

तत् न सभ्यप्रतीत्यनुसारेण स्थाय्यनुकरणं रसः। न चापि नटस्य इत्थं प्रतीतिः[2]—'रामं तद्वृत्तिं वा अनुकरोमि' इति। सदृशकरणं ह्यनुकरणं अनुपलब्धप्रकृतिना[3] न कर्तुं शक्यमिति। अथ पश्चात्करणं अनुकरणम्—तत् लोकेऽप्य[4]नुकरणात्मता प्रसक्ता। अथ न नियतस्य कस्यचित् अनुकारः, अपि तु उत्तमप्रकृतेः शोकमनुकरोमीति—तर्हि केनेति चिन्त्यम्॥ न तावत् शोकेन। उत्तमप्रकृतेः शोकाभावात्॥ न च अश्रुपातादिना शोकस्य अनुकारः। तद्वैलक्षण्यात्॥ इयत्तु स्यात्—उत्तमप्रकृतेः ये शोकानुभावाः तान् अनुकरोमीति। तत्रापि—कस्य उत्तमप्रकृतेः? यस्य कस्यापीति चेत्—सोऽपि विशिष्टतां विना कथं बुद्धौ आरोप्यते? य एवं रोदिति इति चेत्, तर्हि स्वात्मानमपि नटः अनुकरोति इत्यायातम्, तस्यापि रोदनसद्भावात्, इति गलितः अनुकार्यानुकर्तृभावः॥

---

1 'हि' इति नास्ति'—ग.　2 'प्रतीतेः'—घ.　3 'प्रतीतिना'—ग.
4 'लोकेष्व'—ग.

**न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते ;**

## सङ्केतः

**यच्चोच्यते**—'वर्णकैः हरितालादिभिः संयुज्यमान एव गौः' इत्यादि, तत्र यदि 'अभिव्यज्यमानः' इत्यर्थः संमतः, तत् न युज्यते। न हि वर्णकैः पारमार्थिको गौः अभिव्यज्यते, यथा दीपाद्यैः। किन्तु तत्सदृशः समूहविशेषः निर्वर्त्यते ॥ त एव हि वर्णकाः गवावयवसंनिवेशसदृशेन संनिवेशेन स्थिताः 'गोसदृक्' इति प्रतिभासं उत्पादयन्ति[1] इति चेत्—नैवं हि विभावादिसमूहः रतिसादृश्यप्रतीतिग्राह्यः। न च 'स्थाय्यनुकरणं रसः' इति मुनिना क्वचिदप्युक्तम् ॥ तत् न भावानुकरणं रसः॥ अन्यान्यपि दूषणानि सन्ति। परं विस्तरभीरुभिः नोक्तानि ॥

**वयं तु ब्रूमः**—अत्र मते[2] यत्—'नटगतत्वेन अनुमीयमानः स्थायी सभ्यानां रसः' इत्यूचे, तत्र अनुमीयमानत्वं अनुभवविरुद्धम्। तस्य-विगलितवेद्यान्तरत्वेन रस्यमानत्वात् इति॥ तस्मात् अन्यथोच्यते—**न ताटस्थ्येनेत्यादि** ॥

**ताटस्थ्यम्** स्वव्यतिरिक्ताश्रयत्वम्। अत्र—तद्गतत्वेन[3] हि रतिप्रतीतौ, घटादिवत् न रसनीयत्वं स्यात् स्वगतत्वेन[4] तु प्रतीतौ स्वात्मनि रसस्योत्पत्तिः इत्यङ्गीकृतं स्यात्। सा च न युक्ता। सीतादेः सभ्यान् प्रति अविभावत्वात्[5] ॥ **ननु**—कान्तादित्वं च साधारणं वासनाविकासहेतुः

## मधुमती

भट्टनायकमतमवतारयति—**न ताटस्थ्येनेति**। **ताटस्थ्यं** नाम नटनिष्ठत्वम्। **आत्मगतत्वं** अनुकरणीयनिष्ठत्वम्। एवं च अनुकरणी-

1 'प्रतिभां समुत्पादयन्ति'—ग. 2 'मते' इति नास्ति—व. 3 ताटस्थ्येनेत्यस्यैतद्विवरणम्। तथा च अनुकार्ये अनुकर्तरि वा स्थितत्वेनेत्यर्थः। 4 सामाजिकमतत्वेनेत्यर्थः। 5 'अविभावात्'—ग.

**नोत्पद्यते, नाभिव्यज्यते वा[1]। किन्तु[2]—काव्ये नाट्ये**

### सङ्केतः

विभावीभविष्यतीति चेत्—देवतावर्णनादौ तदपि वा कथं भवेत्? न वा स्वकान्तादिस्मरणं मध्ये संवेद्यते। लोकोत्तरस्य रामादेश्च ये सेतुबन्धादयः ते वा कथं साधारणाः स्युः?॥ न च उत्साहादिमतः रामादेः स्मृतिः। अननुभूतत्वात्॥ शब्दादेः तत्प्रतीतावपि न रसोत्पत्तिः, प्रत्यक्षादिव नायकमिथुनप्रतीतौ। प्रत्युत लज्जादेरेव उत्पत्तिः स्यात्॥ किञ्च—उत्पत्तिपक्षे—सीतादिषु कामित्वं स्यात्। करुणस्योत्पादात् दुःखित्वं च। ततश्च तत्प्रेक्षासु पुनः अप्रवृत्तिरेव स्यात्। विभावादिनिवृत्तावपि कार्यरूपरसस्य घटादिवत् अवस्थानं च प्रसज्येत। न चैवमस्ति। विभावादिनिवृत्तौ रसस्यापि निवृत्तेः। तत् नोत्पत्तिरपि॥ **नाप्यभिव्यज्यते**। दीपादिप्रकाश्यघटादिवत् तस्य पूर्वसिद्धत्वाभावात्॥ **अथ** शक्तिरूपतया अस्ति चेत्, तदा तदभिव्यक्तौ विषयार्जनरतस्य अप्रवृत्तिः[3] स्यात्॥ तत्रापि च—स्वगतः अभिव्यज्यते? परगतो वा? इति पूर्ववदेव दोषः। तत् कथं अयं[4] अनुभूयते? इत्याह—**किन्तु[5] काव्ये इत्यादि। काव्ये**—श्रव्ये, **नाट्ये**—अभिनेये। तन्मते हि—

### मधुमती

यानुकर्तृनिष्ठत्वे निरस्यता सामाजिकनिष्ठत्वं दर्शितम्। **नोत्पद्यते नाभिव्यज्यत इति**। तत्र उत्पत्तिपक्षे वक्ष्यमाणं दूषणम्। व्यक्तिपक्षे तु

---

1 प्रत्यासन्नेषु नटनायकसामाजिकेषु आद्यौ तटस्थौ, तृतीयः आत्मा चेति त्रिषु किंगतत्वेन रसः प्रतीयते? इति प्रश्ने उत्तरं नेत्यादि। तत्रापि न प्रतीयतेनानुमीयते, नोत्पद्यते न जन्यते, नाभिव्यज्यते—न व्यञ्जनया उपस्थाप्यते। अनुमितेः चमत्कारा-जनकत्वात्, विभावादीनां वास्तविकत्वाभावात्, पूर्वमसिद्धत्वात् व्यञ्जनायां प्रमाणा-भावाद्वेति भावः। 'वा' इति नास्ति–क. 2 'अपि तु'–क. 3 'विषयार्जन-तारतम्यप्रवृत्तिः'–ग. 4 'अयं' इति नास्ति–घ. 5 'अपि तु'–ग.

**च[1] अभिधातो द्वितीयेन[2] विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण[3] भाव्यमानः[4] स्थायी**

---

## सङ्केतः

वाच्यविषयाभिधाव्यापारानन्तरभावी रसादिविषयः भावकत्वनामा व्यापारः स्वीकृतोऽस्ति। स च घननिविडसंमोहसंवृतत्वं[5] निवार्य विभावादीन् स्वस्य नटस्य च साधारणान् करोति। अत एव न ताटस्थ्यात्मगतत्वे ॥

अयं भावः—यदि हि—अभिधाव्यापारानन्तरभावी भावकत्वव्यापारः नाङ्गीक्रियते, तदा शास्त्रेभ्यः काव्यनाट्ययोः किमन्तरं स्यात्?। तस्मात् द्वितीयोऽस्ति रसभावनाख्यः व्यापारः, यद्वशात् विभावानां साधारणत्वापादनं स्यादिति ॥

## मधुमती

व्यञ्जनायामेव प्रमाणाभावः इति हृदयम् ॥ **अभिधातो द्वितीयेन** इत्युपलक्षणम्। 'लक्षणातः तृतीयेन' इत्यपि द्रष्टव्यम् ॥

न च 'सीता'ऽऽदिपदं तात्पर्यानुपपत्तिमूलकलक्षणया स्त्रीत्वोपस्थापकमस्तु, रसादिप्रतीतिस्तु प्रयोजनं; इति किं भावु(व)कत्व[6]व्यापारेण इति वाच्यम्। एवं सति अर्थान्तरसङ्क्रमितवाच्यतया रसादिध्वनीनां अविवक्षितवाच्यान्तर्भावापत्तेः। न च इष्टापत्तिः। अपसिद्धान्तात्। व्यञ्जनाऽनङ्गीकारात्, अन्यतः प्रयोजनाप्रत्ययेन लक्षणानुपपत्तेः ॥

**भाव्यमानः**—साधारण्येन विषयीक्रियमाणः। **सत्त्वेत्यादि**। **सत्त्वं**

---

1 'नाट्ये वा'–ख. 2 अभिधालक्षणाभ्यां तृतीयेनेति यावत्। केचित्तु अभिधैव द्विविधा निरन्तरा सान्तरा चेति। तत्र द्वितीयैव लक्षणेत्युच्यते इत्याहुः। 3 विभावादीनां रामादीनां व्यक्तिविशेषांशपरिहारपूर्वकं पुरुषत्वादिरूपेणैव सहृदयेपूपस्थानरूपेण, साधारणीकरणेन भावकत्वसंज्ञकेन व्यापारेणेत्यर्थः। 4 साधारणीक्रियमाणः। 5 'घनसंमोहसङ्कटत्वं'–घ. 6 'किं विभावकत्व'–च.

सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन

---

## सङ्केतः

भाविते च रसे तस्य भोगः स्यादित्याह—**भोगेनेति**। यत् स्वयं भुज्यते—रस्यते, परस्मै दीयते च, सः **भोगः**। स च अनुभवस्मृत्यादि विलक्षण एव॥ तद्विशेषणमाह—**सत्त्वेति**। यदा हि रजसो गुणस्य द्रुतिः, तमसोऽविस्तरः, सत्त्वस्य च अतिविकासः, तदा **भोगः** स्वरूपं लभते। **सत्त्वोद्रेके** च **आनन्दः** भवति। **सत्त्वोद्रेकेण प्रकाशः** प्रकटः यः **आनन्दः** तन्मयी या **संवित्** तस्यां विश्रान्तिः, सा **सतत्त्वं** परमार्थः यस्य स तथा। स च परब्रह्मास्वादसोदरः सहृदय[1]विषयः रसः॥ **एतेन** काव्ये व्यापारत्रयं वाच्य[2]-रस-सहृदयविषयं—अभिधाभावनाभोगात्मकं उक्तम्॥

**अत्रोच्यते**—रसस्वरूपे एव तावत् विप्रतिपत्तिः प्रवादिनाम्[3]। तथाहि—प्रागवस्थायां यः स्थायी, स एव विभावादिभिः प्राप्तपरिपोषः[4] अनुकार्यगत एव रसः, अनुकर्त्रा नाट्ये प्रयुज्यमानत्वात् नाट्यरसः **इति केचित्**॥

## मधुमती

गुणविशेषः। तस्य **उद्रेकः** रजस्तमस्संवलनाभावः, तेन **प्रकाशः** स्फुटतरः यः **आनन्दः** तन्मयी तदात्मिका या संवित्, तत्र या **विश्रान्तिः** योगिनामिव[5] विगलितवेद्यान्तरत्वेन स्थितिः, तत्सतत्त्वेन[6] तत्समानत्वेन=समाध्यवस्थातुल्येन **भोगेन भुज्यते** विषयीक्रियते इत्यर्थः॥

---

1 'स्वादो रसः, स च सहृदय'–ग. 2 'वाच्यम्–ग. 3 'त्तिः वादिनां'–घ. 4 'प्राप्तपोषः'–ग. 5 'योगिनां'–ज. 6 'तत्सहितत्वेन'–च.

## सङ्केतः

प्रवाहधर्मिण्यां चित्तवृत्तौ चित्तवृत्तेः चित्तवृत्त्यन्तरेण कः पोषार्थः? विस्मयशोकक्रोधादेश्च क्रमेण तानवं दृष्टम्, न तु पोषः। तत् न अनुकार्ये रसः, अनुकर्तर्यपि न, लयाद्यननुसरणप्रसङ्गात्। सभ्यगते च कः चमत्कारः? प्रत्युत करुणादौ दुःखमेव। तस्मात् नायं पक्षः। कस्तर्हि? इह आनन्त्यात् नियतानुकारो न शक्यः, निष्प्रयोजनश्च। विशिष्टताप्रतीतौ ताटस्थ्येन वृत्त्यभावात्।[1] तस्मात् नियतावस्थात्मकं स्थायिनं[2] भावमुद्दिश्य विभावादिभिः संयुज्यमानैः 'अयं रामः सुखी' इति स्मृतिविलक्षणा, स्थायिनि प्रतीतिगोचरतया आस्वादरूपा प्रतिपत्तिः, अनुकर्त्रवलम्बना नाट्यैकगामिनी रसः। तस्य च अनुकार्याभिन्नत्वाभिमतः नर्तक एव आधारः, सभ्यस्तु आस्वादकः। तेन नाट्य एव रसाः, न अनुकार्यादिषु—इत्यन्ये॥

अनुकर्तरि यः स्थाय्यवभासः अभिनयादिना कृतः, भित्ताविव वर्णकादिना अश्वावभासः, स एव लोकातीततया आस्वादापरसंज्ञया प्रतीत्या रस्यमानः रसः इति, नाट्याद्रसाः नाट्यरसाः भवन्ति इत्यपरे॥

केचित्तु—[3]विभावानुभावमात्रमेव भावकत्वादिरूपविशिष्टसामग्र्या सम्पद्यमानं,[4] तद्विभावनीयानुभावनीयव्यभिचारिभिः उपचितचित्तवृत्त्युचितवासनानुरक्तस्वनिवृत्तिचर्वणाविशिष्टमेव रसः, तत् नाट्यमेव रसः[5] इत्याहुः॥

अन्ये तु शुद्धं विभावमेव, अपरे शुद्धं अनुभावम्, इतरे स्थायि[6] भावमात्रम्, परे व्यभिचारिणम्, अन्ये तत्संयोगम्, एके अनुकार्यम्, केचन सकलमेव समुदायं च रसमाहुः, इत्यलं बहुना॥

---

1 'स्थ्येन व्युत्पत्त्यभावात्'–ख. 2 'अनियतावस्थात्मानं'–ग. 3 'केचित्तु ध्वनेः'–ग. 4 'समर्प्यमाणं–ग. 5 'रसाः'–ख. 6 'स्थायि' इति नास्ति–ग.

भुज्यते[1]—इति भट्टनायकः ॥[2]

---

## सङ्केतः

[४. अभिनवगुप्तपादमतम्]

एवं स्थिते—सर्वपक्षेषु रसस्य प्रतीतिः अपरिहार्या । न ह्यप्रतीतं व्यवहार्यम्, पिशाचवत् । किन्तु—यथा प्रतीतिमात्रत्वाविशिष्टत्वेऽपि, प्रात्यक्षी, आनुमानिकी, आगमोत्था, प्रतिभानकृता,[3] योगिप्रत्यक्षजा चेति

## मधुमती

तदयमर्थः—भावकत्वव्यापारेण साधारणीकृतेषु विभावादिषु येन चमत्कार आधीयते स व्यापारः भोगः । एवं च साधारणीकरणात्मा भावक-व्यापारः, चमत्कारात्मा भोगव्यापारः इति सिद्धम् । तदुक्तं **भट्टनायकेनैव**—"यद्यपि अभिधा-भावकत्वलक्षणमेव व्यापारद्वयं काव्ये प्रधानम् । तथापि न तावन्मात्रे विश्रामः इति, तदुभयोत्तीर्णरसचर्वणात्मभोगापरपर्यायः विश्रान्ति-स्थानतया प्रधानम्" ॥ इति ॥

---

1 स्थायी रत्यादिकः रजस्तमोऽनभिभूतसत्त्वाख्यगुणोत्कर्षात् प्रकाशमानः यः आनन्दः तदात्मिकायाः संविदः—ज्ञानस्य या विगलितवेद्यान्तरता तत्तुल्येन चतुर्थेन भोगाख्येन व्यापारेण सामाजिकैः भुज्यमानः— आस्वाद्यमानः रसः इत्यर्थः । सह—सदृशं तत्त्वेन सतत्त्वम् । स्वभावार्थक इति हेमचन्द्रः । 2 तथा च—शब्द-सामान्यस्य अभिधालक्षणारूपव्यापारद्वयवत्, काव्यनाट्ययोः तद्विलक्षणं भावकत्व-भोजकत्वरूपं व्यापारद्वयमस्ति । काव्यार्थबोधोत्तरं तयोराद्येन सीतात्वरामत्वादिकं तत्संबन्धांशं च अपहाय केवलं कामिनीत्वकामुकत्वरत्यादिरूपेणैव विभावादीनां उपस्थापने, अपरेण सहृदयैः सा रतिः आस्वादयोग्यतां नीयते इति । सूत्रे च संयोगः भोज्यभोजकभावः सम्बन्धः, निष्पत्तिश्च भुक्तिः इति भावः ॥
3 'प्रधानकृतयः'–ग.

## सङ्केतः

प्रतीतयः[1] उपायवैलक्षण्यात् अन्यान्या एव,[2] तद्वत् इयमपि प्रतीतिः चर्वणा-रसन-आस्वादन-भोगाद्यपरनाम्ना[3] अस्तु, तत्र हेतुभूतायाः हृदयसंवादादिना उपकृतायाः विभावादिसामग्र्याः लोकोत्तररूपत्वात्; इति ॥

एवं च प्रतीयमान एव रसः। प्रतीतिरेव च विशिष्टा उक्तरीत्या रसना-चर्वणा-चमत्कार-आस्वादभोग-लयादिशब्दवाच्या भवति। सा च नाट्ये लौकिकानुमानप्रतीतेः विलक्षणा। सा च तां प्रमुखे उपायतया संदधाति। एवं काव्येऽपि अन्यशब्दप्रतीतेः विलक्षणा परं प्रमुखे उपायतया तां अपेक्षते। लौकिकप्रमाणादिव्युत्पन्नहृदयो हि लोकोत्तरं व्यवहारमाकलयति ॥

एवं च प्रतीत्यादिव्यतिरिक्तः न भोगः। प्रतीत्याद्यव्यतिरिक्तत्वात् भोगः रसना भविष्यति। रसनाऽपि[4] प्रतीतिरेव भोगीकरणव्यापारः काव्यस्य रसविषयः व्यञ्जनारूपः नामान्तरेण परैः स्मृतः।[5] किञ्च उत्पत्त्यभिव्यक्ति-द्वयानभ्युपगमे नित्यो वा असन् वा रसः इति न तृतीया गतिः स्यादिति

---

1 'प्रतीतिः'–ग. 2 'अन्यैव'–घ. 3 'नाम्ना'–व. 4 'रसो नापि'–ग. 'न रसोऽपि'–व. 5 अत्रायमाशयः—व्यञ्जनं द्विविधं, एकं कारणे सूक्ष्मतया स्थितस्य स्थूलरूपत्वं, यथा दुग्धावस्थायां शक्त्यवस्थस्योत्तरं दधिरूपत्वम्। इदं च प्रतीत्यनपेक्षमेव केवलवस्तुसमवेतव्यञ्जनम्। द्वितीयं तु उपायप्रतीतिसापेक्षं उपेयप्रतीतिरूपम्। यथा प्रदीपे घटादौ प्रदीपप्रतीतिसाहित्येनैव घटप्रतीतिः, प्रदीपस्य व्यञ्जकत्वात्, तथेह रस-विभावादीनां व्यङ्ग्यव्यञ्जकभावो व्याख्येयः, विभावादिप्रतीतिसाहित्येनैव रसप्रतीतेः। ततो रसाद्याश्रयेणालक्ष्यक्रमव्यङ्ग्यता व्यञ्जने प्रदीपघटदृष्टान्तता च प्रोक्ता। एवं रसादौ क्रमस्सन्नपि उत्पलपत्रशतभेदन्यायेन न लक्ष्यते। यतस्तत्र प्राक् केवलव्यञ्जकाः प्रतीयन्ते पश्चाद्व्यञ्जकसाहित्येन व्यङ्ग्यं प्रतीयते। लक्ष्यक्रमव्यङ्ग्ये तु व्यञ्जकप्रतीतिपूर्वं व्यङ्ग्यप्रतीतौ क्रमो लक्ष्यत एव। तदुक्तम्—न हि व्यङ्ग्ये प्रतीयमाने वाच्यप्रतीति-र्दूरीभवतीति। एवमेव चैतद्व्यङ्ग्यप्रतीतिसद्भावे हि व्यञ्जकप्रतीतिरुपयुक्ता न व्यञ्जक-प्रतीतौ व्यङ्ग्यप्रतीतिः, घटप्रदीपवदेव प्रदीपप्रतीतेः केवलाया अपि भावात्। तदेवं विभावादयो व्यञ्जकाः, रसादयस्तु व्यङ्ग्याः इति स्थिते व्यञ्जनं व्यवस्थितमिति ॥

**लोके प्रमदाऽऽदिभिः कारणादिभिः[1] स्थाय्यनुमाने**
**अभ्यासपाटववतां,[2] काव्ये नाट्ये च तैरेव[3] कारणत्वादि-**

---

### सङ्केतः

निराकृत्य श्रीमान् अभिनवगुप्तः प्राह—**लोके इत्यादि**। यथा-लोके धूमदर्शनानन्तरं अग्न्यनुमानं, धूमाग्न्योः नियत[4]दशादितया 'यत्र धूमः तत्राग्निः'[5] इति व्याप्तिनिश्चयश्च, तथा—विभावादिप्रतीत्यनन्तरमेव रत्याद्यनुमानम्—नियततया यत्र विभावादिः तत्र रत्यादिः इति व्याप्तिग्रहोऽपीत्यर्थः ॥

**काव्ये नाट्ये चेति**। नाट्ये हि तैरेव **कारणादिभिः**

### मधुमती

अभिनवगुप्तपादमतं अवतारयति—**लोके इति**। काव्यनाटक[6]-व्यतिरिक्तस्थले इत्यर्थः। **अभ्यासः** पौनःपुन्यम्; तेन **पाटवं** प्रज्ञाऽतिशयः, तद्वताम्। अस्य **सामाजिकानां** इत्यनन्तरोक्तेन सम्बन्धः। एवं च—**लोके** नायकादि[7]वृत्तान्तदर्शनेन येषां स्थाय्यनुमानाभ्यासपाटवं त एव रसिकाः। त एव चात्र अधिकारिणः। तदन्ये तु—काव्यनाट्यशालाऽ[8]न्तः-

---

1 प्रमदोद्यानकटाक्षनिर्वेदादिभिः आलम्बनोद्दीपनकारणकार्यसहकारिभिः इत्यर्थः। 'कारणादिभिः' इति नास्ति–क. 2 यो हि सर्वेषां नित्यसुखात्मकः रत्यादिः स्थायी वासनारूपेण आत्मनि तिष्ठत्येव, तस्य—कामिनीकामुकादिभिः कारणैः, तच्चेष्टादिभिः कार्यैः, तदनुमितैः चिन्तादिभिः सहकारिभिश्च सम्यगनुमातुं ये पुनः पुनः परिशीलनेन प्रज्ञातिशयवन्तः सिद्धहस्ताः, तादृशानां सामाजिकानामित्यर्थः। 3 प्रमदादिभिरेव। अस्य अभिव्यक्तः इत्यनेनान्वयः 4 'अनियत'–ग. 5 'यत्राग्निः तत्र धूमः'–ग. 6 'नाट्य'–च. 7 'लोकनायकादि'–च. 8 'नाट्यकालाऽ'–च.

परिहारेण[1] विभावनाऽऽदिव्यापारवत्त्वात्[2] अलौकिक-

---

### सङ्केतः

**विभावादिशब्दवाच्यैः स्थायी** व्यक्तः, काव्येऽपि च लोकनाट्यधर्मिस्थानीयेन स्वभावोक्तिवक्रोक्तिप्रकारद्वयेन अलौकिक[3]प्रसन्नमधुरौजस्विशब्दसमर्प्यमाण-विभावादियोगात् इयमेव रसवार्ता[4]। यदाह मुनिः—'काव्यार्थान् भावयतीति भावः' इति—

'स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा मता ॥
स्वरालङ्कारसंयुक्तं स्वस्वभूपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥ "[5] इति च ।

### मधुमती

पातिनोऽपि स्तम्भकुम्भायमाना एवेति[6] नातिप्रसङ्गः। अनुमानं च—अयं एतद्विषयकरत्याश्रयः, तत्सामग्रीसत्त्वात्, तत्कार्यवत्त्वाच्च, न यदेवं न तदेवम्, यथा विरक्तः—इति। एवं च यः यत्र स्थाय्यनुमानाभ्यासपाटववान् सः तत्र अधिकारी इति द्रष्टव्यम् ॥

**विभावनादीति**। तत्र **विभावनं**—सामाजिकरत्यादेः आस्वादाङ्कुर-योग्यताऽऽपादनम्। **अनुभावनं**—रत्यादेः समनन्तरमेव भावनम्। **व्यभि-**

---

1 परिहारः—तथा व्यपदेशपरित्यागः। 2 आदिपदेन अनुभावनव्यभिचारण-योः ग्रहणम्। विभावनं—वासनात्मतयाऽवस्थितस्य रत्यादेः अंकुरदशाऽर्पणम् अनु-भावनं—अनुभवविषययोग्यताकरणम्। विशेषेणाभिमुख्येन सुप्रकटत्वकरणं—व्यभि-चारणम्। 3 'लोकोत्तर'–घ. 4 'रसनावार्ता'–ग. 5 'नाट्यशास्त्रे 14, 13, 61–71 भागः, सङ्गीतरत्नाकरे 7–22 भागश्चात्र द्रष्टव्यः। 6 अत्र 'सवासनानां नाट्यादौ रसस्यानुभवो भवेत्। निर्वासनास्तु रङ्गान्तर्वेश्मकुड्याश्म-संनिभाः॥' इत्यादि स्मर्तव्यम्।

विभावादिशब्दव्यवहार्यैः, "ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते ; न ममैवैते, न शत्रोरेवैते, न तटस्थस्यै-

---

## सङ्केतः

तत्र—पदार्थवाक्यार्थौ रसेष्वेव पर्यवस्यतः इति असाधारण्यप्राधान्याभ्यां काव्यार्थाः एव रसाः। अत्र च अर्थ्यन्ते प्राधान्येनेत्यर्थाः। न त्वत्र अर्थशब्दः अभिधेयवाची। रसादेः स्वशब्देन अनभिधेयत्वात्॥

ममैवैते इत्यादिकं साधारण्यप्रतीतौ हेतुः। स्वस्य, शत्रोः, उदा-

## मधुमती

चारणं[1]—तथाभूतस्यैव तस्य सम्यगभिव्यक्तिः। तदपि साधारणप्रकारक-तत्तद्ज्ञानात् स्थायिनि तत्तदंशव्यक्तिः। अत एव अर्थात् रसाभिव्यक्तिः। व्यक्तिश्च स्थायिनः तत्तद्वैशिष्ट्यविषयत्वमेव। न ह्यविभावितोऽनुभाव्यते। न चाननुभावितः व्यभिचर्यते। एवं च यथा—बीजस्य धरणीसम्बन्धात् शिथिलावयवत्वे अङ्कुरादयः क्रमशो भवन्ति, तथा स्थायिनोऽपि उक्ताः अवस्थाः इति ध्येयम्॥ उक्तं च—

"विभावाः अनुभावाश्च सात्त्विकाः व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम्॥" इति॥

एवं च—यथा वर्णव्यङ्ग्यस्फोटस्य[2] उत्तरोत्तरं व्यक्तिप्रकर्षः, तथा विभावादि-व्यङ्ग्यरसस्यापीति बोद्धव्यम्॥

ननु सीतादीनां तदनालम्बनत्वात् कथं सामाजिकानां सीतात्वेन जानतां रसाभिव्यक्तिः? अत आह—ममैवैते इति। अत्र

---

1 'व्यभिचरणं'—च. 2 'व्यङ्ग्यस्थायिन्या'—ज.

दैते" इति सम्बन्धिविशेष[1]स्वीकारपरिहारनियमानध्यवसायात्[2] साधारण्येन[3] प्रतीतेः, अभिव्यक्तः; सामाजि-

## सङ्केतः

सीनस्येति पक्षत्रयेण सर्वसम्बन्धिनां दर्शनम्। सम्बन्धिनां विशेषेण सम्बन्धिविशेषाणां वा यौ स्वीकारपरिहारौ, यः तयोः नियमः तस्य

## मधुमती

सम्बन्धे विशेषः,[4] तत्स्वीकारः, तन्निरसः, एवं—सम्बन्धे विशेषः,[5] तत्परिहारः तन्नियमश्च इत्यर्थः। तथा च—यस्यां[6] प्रतीतौ इदं एकमपि वा न भासते, सैव रसाभिव्यक्त्यनुकूला इति तात्पर्यम्। तत्रापि—सम्बन्धविशेषस्य अनौचित्यात् परिहारः। इतरेषां तु रसस्य विगलितवेद्यान्तरत्वात् परिहारः॥

तादृशी च प्रतीतिः नाट्ये प्रत्यक्षात्। काव्ये च—'शून्यं वासगृहं' इत्यादौ शब्दादेव तयोरुपस्थितिः। यत्र तु सम्बन्धि[7]विशेषवाचकसीतादिपदोपादानं, तत्र समासोक्त्यलङ्कारेण नायकसामान्यवृत्तान्तविषयात् शब्दादेव व्यञ्जनव्यापारात् काव्यनाट्योपदर्शितविभावादिज्ञानेन सामाजिकानां स्वस्त्रीविषयकरत्यादेरेव चर्वणमिति सीतादीनामतदालम्बनत्वं न दोषाय। अनालम्बनत्वेऽपि आलम्बनसाधारणरूपेण[8]ज्ञानात्। एवं च काव्यं शृण्वतः, नाट्यं पश्यतो वा यावत् 'अयं रामः, इयं सीता' इति बुद्धिः तावत् न चमत्कारः, अनौचित्यात्। यदा तु नायकत्वेन नायिकात्वेन च ज्ञानं, तदैव चमत्कारः इति सर्वानुभवसिद्धं उक्तं भवति॥

---

1 'सम्बन्धविशेष'-क. 2 अनेन इत्यादिस्वीकारनियमस्य, न ममेत्यादिपरिहारनियमस्य वा अनिर्णयादित्यर्थः। 'नध्यवसायात्'-ख. 3 केवलकामिनीकामुकत्वादिरूपेणेत्यर्थः। 4 'सम्बन्धविशेषः'-ज. 5 'तन्निरसनं सम्बन्धिविशेषः'-ज. 6 'अस्यां'-ज. 7 'सम्बन्ध'-ज. 8 'साधारणत्वेन'-च.

**कानां वासनाऽऽत्मतया [1] स्थितः ; स्थायी रत्यादिकः ; नियतप्रमातृगतत्वेन[2] स्थितोऽपि साधारणोपायबलात्**

---

## सङ्केतः

अनवसायः अपरिच्छेदः तस्मात्। **नियतप्रमातृगतत्वेनेति**। यः कोऽपि विदग्धः सः नियतः। **साधारणोपायेति**। विभावादयो हि सर्वेषां तुल्यत्वेन प्रतीतिगोचराः॥

## मधुमती

वासनाऽऽत्मतयेति। वासना संस्कारः, तस्य आत्मा स्वभावः, सौक्ष्म्यमिति यावत्। तेन सूक्ष्मतया स्थितः इत्यर्थः॥

न च सूक्ष्मत्वे चमत्कारानुपपत्तिः। विभावादिज्ञानसंवलितस्य तस्य आविर्भावाभ्युपगमात्। तद्ज्ञाननाशे च तिरोभावः, प्रकृतेरिव सांख्यानाम्, ब्रह्मण इव च वेदान्तिनाम्। प्रकृतिविकारयोः अभेदाच्च 'स्थायी भावो रसः स्मृतः' इत्याद्युपपद्यते। आविर्भावतिरोभावदशयोः रसत्वस्थायित्वाभ्यां[3] व्यपदेशात्। न च आविर्भावाभ्युपगमे[4] नित्यताविरोधः। परिणामिनित्यताऽभ्युपगमेन सत्कार्यवादाभ्युपगमात्। यत्तु—'संस्काररूपतया स्थितः इत्यर्थः' इति, तन्न। संस्कारस्य जडत्वात्। ज्ञानान्तरग्राह्यत्वे स्वप्रकाशत्वाभिधानविरोधात् इति॥

ननु—अस्तु विभावादीनां साधारण्यम्, स्थायिनस्तु स्वस्त्रीमात्रविषयकत्वे[5] कुतः साधारण्यम्? अत आह—**नियतेति**। **नियतप्रमातृगतत्वं**—सामाजिकनिष्ठत्वम्॥

---

1 सर्वेषां अनादिवासनाविशीकृतचेतस्त्वात् इति भावः। 2 रसास्वादयितृत्वेन निखिलसामाजिकैक्यरूपगतत्वेनेत्यर्थः। 3 'स्थायिभाव'–ज. 4 'गमेन'–च. 5 'मात्रसाधारण्यात्'–ज.

**तत्कालविगलितपरिमितप्रमातृतावशोन्मीलितज्ञेयान्तर-स्पर्श[1]शून्यापरिमितभावेन प्रमात्रा सकलहृदय[2]संवाद-**

---

## सङ्केतः

तत्कालेति । तत्कालं विभावादिदर्शनश्रवणसमकालं विगलिता या परिमितप्रमातृता तद्वशात् उन्मीलितः ज्ञेयान्तरस्पर्शशून्यः यः अपरिमितभावः अपरिमितत्वं यस्य सः तथा, तेन[3] प्रमात्रा ॥

स्वगतत्वेन हि रतिप्रतीतौ कामित्वम्, परगतत्वेन तु द्वेषादि, ताटस्थ्यं वा घटादिवत् । सर्वसाधारणप्रतीतौ ताटस्थ्यमेव न रसनीयत्वम् । रसनीयतायामपि सुखवत् नियतनिष्ठत्वे कामित्वमेव स्यात्[4] । तस्मात् अनियतनिष्ठत्वेन सर्वप्रमातॄणां यो[5] रसनीयः, सः सर्वप्रमातृताऽवलम्बनेनैव रस्यते । अत एव रङ्गमण्टपान्तःप्रविष्टानां सकलानामपि हृदयसंवादभाक्त्वं[6] उच्यते ।

## मधुमती

तत्कालेति । तत्काले विभावादिसाधारण्योपस्थितिकाले विगलितायाः परिमितप्रमातृतायाः सामाजिकनिष्ठतायाः वशात् उन्मीलितः वेद्यान्तरसम्पर्कशून्यः अपरिमितभावः सामान्यविषयत्वं यस्य सः तथा, तादृशेन प्रमात्रा स्थायिरूपज्ञानेन गोचरीकृतः इत्यन्वयः । प्रकाराकाङ्क्षायामाह—साधारण्येनेति । सकलहृदयसंवादभाजा इति च

---

1 'प्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्क'—क. 2 'सकलसहृदय'—ख. 3 'केन'—ग. 4 'निष्ठत्वं कामित्वं'—घ. 5 'स्वेन यो'—ग. 6 'भागित्वं'—घ.

भाजा साधारण्येन स्वाकार इव अभिन्नोऽपि गोचरीकृतः,[1]

---

## सङ्केतः

अत एव च रङ्गभूमौ अहृदयानामपि साधारण्यप्रतीतये सहृदयीकरणाय साधारण्यमहिम्ना सकलभोग्यत्व[2]सहिष्णुभिः शब्दादिविषयमयैः आतोद्यगान-विचित्रमण्डपविदग्धगणिकादिभिः उपरञ्जनं आश्रितम्। अस्मादेव च साधारण-संवादकार्युपरञ्जनसमाश्रयणात् सुखादिप्रतीत्या न प्रमाता विवशीभवति । अविवशीभूतश्च रससंविदं वस्त्वन्तरे विश्रमयतीति[3] ॥

स्वाकार इवेति । यथा 'स्वात्मानं आत्मना जानामि' इत्यत्र अभिन्नोऽपि स्वाकारः गृह्यते तथा । ग्राह्यग्राहकता[4] हि सर्वत्र भेदे

## मधुमती

साधारण्येनेत्यस्य विशेषणम्[5]। तथा च— उक्तप्रकरणे स्थायिनः साधारण्यम्, तद्बलाच्च प्रमातुरपि स्थायिनः साधारण्यम्, तेन रसोऽपि साधारण्येन विषयीक्रियते इति प्रघट्टकतात्पर्यम् ॥ न च अन्यसाधारण्यात् कथं अन्यसाधारण्यमिति वाच्यम् । व्याप्यसाधारण्यात् व्यापकसाधारण्यवत्[6] अस्यापि अनुभवसिद्धत्वात्[7] ॥ तदिदमुक्तम्—सकलहृदयेति। स्वाकार इवेति । स्वाकारः स्वविषयः । अतिरिक्ताकारानभ्युपगमात् । एवं च विभावादिवत् स्वयमपि स्थायिनो विषयः इत्यर्थः ॥

---

1 ज्ञानानन्दस्वरूपोऽप्यात्मा यथा आत्मना गोचरीक्रियते, तथा ज्ञानानन्द-स्वरूपः ज्ञानादनन्योऽपि रत्यादिः आस्वादविषयीक्रियते इति भावः। 2 'योग्यत्व'–ग. 3 'इति च'–ग. 4 'स्वाकारो ग्राह्यः। ग्राहकता हि'–ग. 5 'विवरणम्'–च. 6 'व्यापकसन्देहात् व्याप्यसन्देहवत्'–च. 7 विभावादेः साधारण्यात् स्थायिनः कथं साधारण्यमिति शङ्का। सामान्यलक्षणाप्रत्यासत्त्या धूमसामान्याधिकरणे वह्निसामान्याधिकरणताज्ञानवदिति समाधानमिति भावम् ।

चर्व्यमाणतैकप्राणः, विभावादिजीवितावधिः,[1] पानकरस-
न्यायेन चर्व्यमाणः, पुर इव परिस्फुरन्,[2] हृदयमिव

---

### सङ्केतः

स्यात्, अत्र तु अभेदेऽपि इति अपि शब्दार्थः। चर्व्यमाणतैकेति। न सिद्धस्वभावः, अपि तु तात्कालिक एव। एवं न चर्वणातिरिक्तकालस्थायी, अत एव विभावादिजीवितावधिः। विभावादीनां यावत् जीवितसत्ता-प्रतीती, तावत् रसस्य जीवितसत्ताप्रतीती। अत एव रसः न कार्यः। न हि कार्यं स्वज्ञानकाले कारणजीवितसत्ताप्रतीती अपेक्षते इति[3]। पानक-रसेति। यथा हि पानकरसास्वादः गुडमरिचादिषु वस्तुषु मध्ये एकस्मिन्

### मधुमती

विभावादीति। विभावादेः जीवितं स्थायिविषयत्वं, तदवधिः। तेन—यावदेव विभावादयः स्थायिनि भासन्ते तावदेव रसचर्वणम्। यदा तु विषयौत्कट्यादिना तत्प्रतिबन्धः, तदा तत्तिरोभावः। एवं च विभावादि-ज्ञाननाशनाश्यः[4] इति भावः॥ ननु विभावादीनां चमत्कारविषयत्वे स्थायिभ्यः ते पृथक् अनुभूयेरन् इत्यत आह—पानकरसेति। तथा च विविच्य न गृह्यते इति भावः। अत एव अलक्ष्यक्रमत्वं चास्येति ध्येयम्॥

वक्ष्यमाणालौकिकचमत्कारकारित्वसिद्ध्यर्थमाह—पुर इवेति।

---

1 अवधिः पूर्वांगरसीना। 2 स्फुरन्निवेत्यादिलिङ्ग्या क्रियाभिः इवशब्दार्थान्वयः ज्ञेयः। 3 विभावादीनामित्याद्यवधेः पर्यन्तं नास्ति—घ. 4 'ज्ञाननाश्यः'—च.

प्रविशन्, सर्वाङ्गीणमिवाऽऽलिङ्गन्,[1] अन्यत् सर्व-
मिव तिरोदधत्,[2] ब्रह्मानन्दास्वाद[3]मिवानुभावयन्,[4]

---

## सङ्केतः

वस्तूनि चर्वद्भिः अवधारयितुं न शक्यते, तथा अयमपि। अनुभावयन् साक्षात्कारयन् ॥

अयमाशयः—प्रमदादिभिः कारणादिभिः, लौकिकीं कारणत्वादि-भुवं अतिक्रान्तैः विभावनाऽनुभावनासमुपरञ्जकत्वप्राणैः, अत एव अलौकिक-विभावादिशब्दव्यपदेश्यैः अलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरः चर्वणैक-सारः स्थायिविलक्षण एव रसः; न तु यथा शङ्कुकादिभिः अभ्यधीयत। स्थाय्येव विभावादिभिः प्रत्याय्यमानः रस्यमानत्वात् रसः उच्यते। एवं लोकेऽपि हि रसः स्यात्। अततोऽपि हि यत्र रसनीयता, तत्र वस्तुसतः कथं रसनीयता न भवेत्? इति[5]। तेन स्थायिप्रतीतिः अनुमितिरूपा वाच्या,[6] न तु रसः। अत एव 'विभावानुभावव्यभिचारिसंयोगात्' इति

## मधुमती

सर्वाङ्गीणमिति तु[7] आलिङ्गनक्रियाविशेषणम्। अन्यत् सर्वमित्यादिना विगलितवेद्यान्तरत्वं उक्तम्। ब्रह्मानन्देत्यनेन अलौकिकचमत्कारस्य आनन्द-मयत्वं अभिव्यनक्ति ॥

---

1 'वा लिङ्गयन्'–क. 2 जुहोत्यादेः धाञ् धातोः लटः शत्रादेशे, शपः श्लौ, श्लौ द्वित्वे, अभ्यासस्य ह्रस्वे 'श्नाभ्यस्तयोरातः' इत्यालोपे 'नाभ्यस्ताच्छतुः' इति नुम्निषेधे च तिरोदधदिति रूपम्। 3 'ब्रह्मास्वादा'–ख. 4 'भवन्'–क. 5 'न भविष्यतीति'–ख. 6 'प्राच्या'–ग. 7 'मिवेति तु'–च

अलौकिकचमत्कारकारी, शृङ्गारादिको रसः ॥ [1]

---

## सङ्केतः

सूत्रवाक्ये स्थायिग्रहणं न कृतम् । तत् कृतं चेत्, प्रत्युत शल्यभूतं स्यात् । 'स्थायी रसीभूतः' इति पुनः औचित्यादुक्तम् । औचित्यं तु तस्थायिगतत्वेन कारणादितया प्रसिद्धानां इदानीं चर्वणोपयोगितया विभावादित्वावलम्बनात् ॥

## मधुमती

ननु शृङ्गारेऽस्तु रसास्वादः,[2] करुणादौ तत् कथम्? इति चेत्—काव्यश्रवण-नाट्यदर्शनदशायां करुणादिविभावादीनामपि सुखाभिव्यञ्जकत्वमेव, स्वभावात्,[3] दुःखजनकत्वेऽपि सम्भोगदशायां मुष्टिताडनादेरिव, सर्वस्थायिनां ज्ञानात्मकतया ज्ञानस्य सुखात्मकत्वेन सुखाभिव्यक्तौ अनुपपत्तेरभावात् । लौकिकसुखाभिव्यक्तिवत् अलौकिकसुखस्याप्यभिव्यक्तेः[4] । अश्रुप्रभृतिप्रवृत्तिरपि नानुपपन्ना, लोके स्वरूपसतः[5] यस्माद् यदुत्पत्तिः, काव्यादौ[6] तस्मादेव ज्ञायमानात् तदाविर्भावः इति वस्तुस्वाभाव्यात् । न चैवं एकशेषापत्तिः । समाधेः वक्ष्यमाणत्वात् ॥ [7]

---

1 तथा च सहृदयेषु सामाजिकेषु वासनारूपेण स्थितः नित्यसुखात्मकः रत्यादिः स्थायी, साहित्यशक्त्या अभिनयेन वा विभावादिषु प्रत्येकं प्रतीयमानेषु अंकुरावस्थां प्राप्तः शब्दादिना साधारणतयैव प्रतीतैः तैः विभावादिभिः अभिव्यक्ततया स्वयमपि साधारणतयैव पानकरसन्यायेन विभावादिसंवलिततया चर्व्यमाणः चमत्कारैकघनः रसः इति सिद्धम् । 2 'व्यनक्ति । करुणादौ सुखाभिव्यक्तिनिर्वाहः । ननु शृङ्गारादिरस्तु रसास्वादः'—ज. 3 'स्वभावात् । अन्यथा'—ज. 4 'स्यानभिव्यक्तेः'—ज. 5 'स्वरूपतः'—ज. 6 काव्यादौ'—च. 7 सुखात्मकस्य स्थायिनः एकत्वात् एक एव रसः स्यात् इति शङ्का । विभावादिभेदेन रसभेदः इति समाधानम् ।

स च न कार्यः, विभावादिविनाशेऽपि[1] तस्य सम्भव[2]प्रसङ्गात् । नापि ज्ञाप्यः, सिद्धस्य तस्य

---

## सङ्केतः

विभावादिभिः व्यञ्जितः दीपादिव्यङ्ग्यलौकिकघटादिवैलक्षण्येन

## मधुमती

न कार्यः[3] न कादाचित्कः । सत एव सदुत्पत्तेरभ्युपगमात् । अत्र हेतुमाह—विभावादीति । निमित्तकारणनाशस्य कार्या[4]नाशकत्वादिति भावः[5] । न च निमित्तकारणापेक्षाबुद्धिनाशात् द्वित्वनाशवत्[6] एतदपि स्यादिति वाच्यम् । तत्रापि द्वित्वस्य नित्यतया[7] अपेक्षा[8]बुद्धेः तद्व्यञ्जकत्वमात्राभ्युपगमात् । न च अयमनुयोगः तवापि तुल्यः इति वाच्यम्[9] । अस्माकं हि कारकमन्यत्, ज्ञापकमन्यत् । तथा कार्यमन्यत्, ज्ञाप्यमन्यत् । एवं दृष्टानुरोधं कार्यमन्यत् कारणमन्यदिति नियमं परिहृत्य, विभावादिज्ञानस्य कारकत्वं ज्ञापकत्वं च, रसस्य कार्यत्वं ज्ञाप्यत्वं च, कार्यत्वं स्वस्य कारणत्वं च, इत्यभ्युपगमः; रसस्यालौकिकत्वात्, दृष्टानुरोधेन एतदनुपपत्तेः[10] ॥ तथा निमित्तकारणनाशात् तत्कार्यनाशः इत्यपि दृष्टानुरोधं परिहृत्य कारकज्ञापकोभयात्मकविभावादिज्ञाननाशात् रसनाशः इत्यभ्युपगमः । कार्यत्वमात्राभ्युपगमे तु दृष्टानुरोधपरवशतया तद्विरुद्धस्य अभ्युपगन्तुं अशक्यत्वात् ॥ नापि ज्ञाप्यः नाप्यागन्तुकज्ञानविषयः । अत्र हेतुः—सिद्धस्येति ।

---

1 'विनाशेऽपि'–क. 2 सम्भवः— स्थितिः । 'तत्सम्भव'–क. 3 'न (च) कार्यमिति'–च. 4 'कार्य'–ज. 5 तस्य समवाय्यसमवायिकारणत्वासंभवात् । प्रकृते च विभावादौ भासमाने एव रत्युद्बोधस्य रसत्वाभ्युपगमात् इति भावः । 6 'अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः' इति हि सिद्धान्तः । 7 द्वित्वादेः जातित्वाभ्युपगमात् । 8 'क्रियापेक्षा'–ज. 9 'इति वाच्यं' इति नास्ति–ज. 10 'तदुपपत्तेः'–च.

असम्भवात्[1]। अपि तु विभावादिभिः व्यञ्जितः चर्वणीयः[2] ॥

कारकज्ञापकाभ्यां अन्यत् क्व दृष्टम्? इति चेत्, न क्वचित् दृष्टमिति; अलौकिकसिद्धेः[3] भूषणमेतत् न[4] दूषणम् ॥

चर्वणानिष्पत्त्या तस्य निष्पत्तिः उपचरितेति

---

## सङ्केतः

व्यञ्जितः। ननु यदि रस्यमानतैकप्राणोऽसौ[5] न प्रमेयादिरूपः, तर्हि सूत्रे 'निष्पत्तिः' इति कथम्? इत्यत आह—चर्वणानिष्पत्त्येति। नेयं रसस्य

## मधुमती

अजन्यस्येत्यर्थः। जन्यत्वे हि[6] आगन्तुकज्ञानविषयता, नित्यस्यास्य चिद्रूपत्वात् तदभावादिति भावः॥ नन्वेवं सर्वदा चर्वणाऽऽपत्तिः—अत आह—अपि त्विति॥

न क्वचिदिति। अत्र 'अदृष्टं' इति पाठोऽप्यस्ति। तदा—कारकज्ञापकाभ्यां इत्यादिप्रश्ने गूढाभिसन्धेः उत्तरं न क्वचित् इति, अभिसन्धिमुद्घाटयति अदृष्टं इति, इति क्रमेण योज्यम् ॥

एवं स्थिते कारकत्वज्ञापकत्वप्रसिद्धिं अन्यथा समर्थयति—चर्वणेति। यद्यपि चर्वणाऽपि चर्वणीयाभिन्नैव। तथापि—निष्पत्तिरपि सत एव

---

1 रसस्य सिद्धत्वाभावात् इति भावः। 'अभावात्'–ख. 2 विभावादिसंवलिततया चर्वणैवात्र व्यक्तिः इति अलौकिकमेवात्र व्यङ्ग्यत्वमिति भावः। 3 'अलौकिकत्वसिद्धेः'–क. 4 'न तु'–ख. 5 'रसनैकप्राणो ह्यसौ'–ग. 6 'जन्यस्येत्यर्थः। जन्यत्वेऽपि'–च.

कार्योऽप्युच्यताम्[1] । लौकिकप्रत्यक्षादिप्रमाण[2]-
ताटस्थ्यावबोधशालिमितयोगिज्ञान[3]-वेद्यान्तरसंस्प-

---

## सङ्केतः

निष्पत्तिः, अपि तु तद्विषयरसनायाः । तन्निष्पत्त्या तु तदेकायत्तजीवितत्वात् यदि रसस्य निष्पत्तिः उपचर्यते, तन्न कश्चिद्दोषः । सा च चर्वणा न प्रमाणान्तरतः पूर्वं जाता, येनेदानीं स्मृतिः स्यात् । न च अधुना प्रमाणान्तरादुत्पन्ना, लोकोत्तरे प्रत्यक्षाद्यव्यापारात् । स्वयं तु न अप्रामाणिकी, स्वसंवेदनसिद्धत्वात् । चर्वणेयं अवबोधरूपैव, ज्ञानविशेषस्यैव चर्वणारूपत्वात् इति ॥ अयं भावः—विभावादिभ्यः लोकोत्तरेभ्यः उपायेभ्यः जातत्वात् लोकोत्तरा चर्वणैषा बोधरूपा । अत एव लौकिककारणादिजातेभ्यः लौकिकेभ्यो ज्ञानान्तरेभ्यः विलक्षणैवेयमिति ॥ प्रत्येयत्वमपि दर्शयति—**लौकिकेति** । **लौकिकप्रमाणेभ्यः विलक्षणम्**, चमत्कारकारित्वात्[4] । **ताटस्थ्येन** स्वात्मानं विना यः परस्य बोधः तेन शालते यत् **मितयोगिज्ञानं** तस्मात् **विलक्षणम्**, ताटस्थ्यप्रतीत्यादित्वेन रत्यादिबोधस्य

## मधुमती

रूपान्तरापत्तिः न तु सर्वथैव[5] असतः इति न दोषः । **एवं च** कश्चित् कार्यो ज्ञाप्यश्च, कश्चित्तु उभयरूपः इति इयमेव लोकोत्तरता ॥

**लौकिकेति** । विलक्षणशब्दः प्रत्येकमन्वेति । तेन अयमर्थः—**लौकिकप्रत्यक्षविलक्षणम्, ताटस्थ्यावबोधशालिपरिमितयोगिज्ञान-**

---

1 विशेषणस्य चर्वणस्योत्पन्नतया विशिष्टे कार्यत्वव्यवहारः इति भावः ।
2 'लौकिकप्रमाण'–क. 3 'शालिमित'–क. 4 'स्यात् । तथा'–ग.
5 'सर्वदैव'–ज.

र्श[1]रहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदन-विलक्षण[2]लोकोत्तरस्वसंवेदनगोचरः[3] इति प्रत्येयो[4]ऽ-प्यभिधीयताम् ॥

---

## सङ्केतः

निषिद्धत्वात् । तथा विषयोपरागशून्यस्वनिष्ठामितयोगिज्ञानाच्च विलक्षणम्, स्वात्मगतत्वेन प्रतीत्यादिनिषेधस्य उक्तत्वात् । यच्चेदं स्वसंवेदनं, अत एव लोकोत्तरं ग्राह्यम्; तस्य गोचरः[5] ॥

## मधुमती

विलक्षणम्, वेद्यान्तरसंस्पर्श[6]रहितस्वात्ममात्रपर्यवसितपरिमितेतर-योगिसंवेदनविलक्षणम् अत एव यत् लोकोत्तरस्वसंवेदनम्, तद्गोचरः इति । तात्पर्यं भेदः । अवबोधपदं[7] करणव्युत्पत्त्या प्रमाणपरम् । तत्र लौकिकप्रत्यक्षस्य अनुपयुक्तार्थविषयत्वात् तद्वैलक्षण्यम् । परिमितयोगि-ज्ञानस्य भेदविषयत्वात् अस्य[8] स्थायिभावादिभेदानवगाहितया तद्वैलक्षण्यम् । परिमितेतरयोगिज्ञानस्य स्वात्ममात्रविषयत्वात्, अत्र तु विभावादीनामपि भानात् तद्वैलक्षण्यमिति[9] नित्यस्वप्रकाशकज्ञानात्मकेऽपि रसे कादाचित्कीं चर्वणामुपादाय तदुभयव्यवहारः इति तात्पर्यम् ॥

---

1 'वेद्यसंस्पर्श'–क. 2 पामर-युञ्जान-युक्तानां यानि ऐन्द्रियिक-ध्यानज-योगजानि ज्ञानानि तत्सर्वविलक्षणेत्यर्थः । 3 'नागोचरः'–क. 4 ज्ञेय इति इत्यर्थः । 5 'त्तरम् । तद्ग्राह्यः'–घ. 6 'वेद्यसंस्पर्श'–च. 7 'भेदावबोधपरं'–ज. 8 'अन्य'–ज. 9 'तद्विलक्षणमिति'–ज.

तद्ग्राहकं च प्रमाणं[1] न निर्विकल्पकम्, विभावाऽऽदिपरामर्श[2]प्रधानत्वात्। नापि सविकल्पकम्,[3] चर्व्यमाणस्य अलौकिकानन्दमयस्य तस्य स्वसंवेदन-

## सङ्केतः

अलौकिकानन्दमयस्य संज्ञोल्लेख[4]रहितस्य ॥

तदयमत्र संक्षेपः—मुकुट[5]प्रतिशीर्षकादिना तावत् नटबुद्धिः आच्छाद्यते। गाढप्राक्तनसंचितसंस्काराच्च काव्यबलोपढौक्यमानाऽपि न तत्र

## मधुमती

प्रकारान्तरेण अलौकिकत्वं उपपादयितुमाह—तद्ग्राहकमिति। न निर्विकल्पकं न निर्विकल्पकमात्रम्। विभावादीति। तद्वैशिष्ट्यविषयत्वे चमत्कारविषयतैव न स्यात् इति भावः। नापि सविकल्पकं सविकल्पकमात्रम्। अलौकिकेति। सूक्ष्मतादशायां इति शेषः। सूक्ष्मता हि विषयोपरागाभावः। अत एव—तदानीं निर्विकल्पकरूपतया प्रत्यक्षागोचरत्वं च[6]। तथा च—एक एव स्थायी कालभेदेन निर्विकल्परूपः सविकल्परूपश्च। अत एव—कालभेदात् न विरोधोऽपि। पूर्ववदिति। यथा रसः कार्यः ज्ञाप्यश्च, तथा निर्विकल्पकः सविकल्पश्च भवतीति, अत एव लोकोत्तरश्चेत्यर्थः ॥

सम्प्रदायविदस्तु—नापि सविकल्पकं इत्यत्र स्वभिन्नमिति शेषः। तेन न उत्तरविरोधः। उभयाभावेत्यत्रापि[7]—निर्विकल्पकभिन्नतया सवि-

---

1 'प्रमाणं' इति नास्ति—क. 2 विभावादिसंवलनात्रगाहनेति यावत्। 'परामर्शन'—ख. 3 'सविकल्पः'—ख. 4 'सदोल्लेख—ग. 5 'मकुट'—ग. 6 'च' इति नास्ति—ज. 7 'अपि' इति नास्ति—च.

**सिद्धत्वात्। उभयाभावस्वरूपस्य च उभयात्मकत्वमपि[1] पूर्ववत् लोकोत्तरतामेव[2] गमयति, न तु विरोधम्—**

---

## सङ्केतः

रामवीः विश्राम्यति। अत एव उभयदेशकालत्यागः। रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टाः नटे[3] देशकालानियमेन रतिं गमयन्ति, यस्यां स्वात्माऽपि तद्वासनावत्त्वात् अनुप्रविष्टः। अत एव न ताटस्थ्येन रत्यवगमः, न च नियतहेतुतया,[4] येन अर्जनाभिष्वङ्गादिसम्भावना[5]। न च नियतपरात्मैकगततया, येन दुःखद्वेषकामित्वाद्युदयः। तेन—साधारणीभूता, सन्तानवृत्तेः एकस्या एव वा संविदः गोचरीभूता रतिः शृङ्गारः। साधारणीभावना च विभावादिभिः[6] इति ॥ अत्र 'सङ्केत'स्य प्रस्तुतत्वात् रसविचारः

## मधुमती

कल्पकत्वम्, सविकल्पकभिन्नतया[7] निर्विकल्पकत्वं चेत्युभयात्मकत्वमपि **लोकोत्तरतामेव** अभिव्यनक्ति, **न तु विरोधम्** इत्यर्थः इति वदन्ति ॥

**अत्र पक्षचतुष्टये—प्रथमे**—'अभिधया[8] रसप्रतीतिः' इति अशुद्धम्, तस्य अपदार्थत्वात् अवाक्यार्थत्वाच्च। नाट्येऽपि नटे रसारोपः न अनुभूयमानारोपः, तदनुभावकाभावात्। अत एव न स्मर्यमाणारोपः, स्मरणस्य अनुभवपूर्वकत्वात्, काव्यस्य अनुभावकत्वनिरासात् ॥

---

1 'विरुद्धयोः एकतरनिषेधे अपरस्मिन् पर्यवसानम्' इति नियमेनेत्यर्थः। 2 'सत्र'-ख. 3 'दृष्टास्तत्रावलोकिताः'-व. 4 'निर्हेतुतया'-ग. 5 'दिभावना'-घ. 6 'भावनादिभिः'-ग. 7 'स्वभिन्नस्वविकल्पक(का)विषयतया'-ज. 8 'अभिधेया'-ज.

## मधुमती

द्वितीयेऽपि—यदि वस्तुसौन्दर्यबलादेव यथातथाऽप्युपस्थितौ चमत्कारः तदा शृङ्गारादिपदादपि स्यात्। रसस्य च पूर्वमनुपस्थितौ अन्वयतो व्यतिरेकतो वा व्याप्तिग्रहात् नानुमितिः॥ न च—'रामोऽयं सीताऽऽलम्बन-रत्याश्रयः' इति साध्यम्। रतिश्च उपस्थितैवेति न व्याप्तिग्रहानुपपत्तिः। लिङ्गोपहितलैङ्गिकभानाभ्युपगमेन[1] स्थायिभावादिविषयतया अनुमितेः रस-विषयत्वपर्यवसानम्—इति वाच्यम्। व्यासङ्गान्यथानुपपत्त्या रसास्वादनस्य धारावाहन[2]रूपतया सिद्धसाधनेन पक्षताविच्छेदात् तदसम्भवात्[3]। न चान्तराऽनुमित्सया पुनः पक्षता। रसस्य विगलितवेद्यान्तरतया तदास्वादे[4] तदनुदयात्॥

तृतीयेऽपि—उक्तन्यायेनैव साधारण्यप्रतीतौ भावकत्वव्यापारकल्पने मानाभावात्। सामाजिकत्वाविशेषेण ग्राम्यविरक्तयोरपि तत्प्रसङ्गात्। कार्यत्व-ज्ञाप्यत्वयोः अन्यतरत्वे उक्तदोषात्, उभयरूपताऽभ्युपगमे तु चतुर्थपक्षप्रवेश एव पर्यवसानात् इति॥

---

1 इदं च उदयनाचार्यमतम्। तन्मते सर्वत्र हेतोः धर्मितावच्छेदकतया भानात्, 'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शेऽपि 'वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमान्' इत्येवानुमितिः। लिङ्गोपहिते—लिङ्गविशिष्टे पक्षे लैङ्गिकस्य—साध्यस्य भानं इति विग्रहः। 2 'वहन'–ज. 3 'तन्न स्यात्'–च. 4 'तथा-स्वादे'–ज.

इति श्रीमदाचार्याभिनवगुप्तपादाः[1] ॥

व्याघ्रादयः विभावाः भयानकस्येव वीराद्भुत-

---

## सङ्केतः

संक्षेपात् उक्तः। विस्तरेण तु लोल्लटादिविरचितरसविवरणेभ्यः ज्ञेयः। पादाः इति बहुवचनोक्त्या ग्रन्थकारः तन्मतं बहुमतवानिति ज्ञायते ॥

न वेत्ति यस्य गाम्भीर्यं गिरितुङ्गोऽपि लोल्लटः।
तत्तस्य रसपाथोधेः कथं जानातु शङ्कुकः? ॥
भोगे रत्यादिभावानां भोगं स्वस्योचितं ब्रुवन्।
सर्वथा रससर्वस्वं अभाङ्क्षीत् भट्टनायकः ॥
स्वादयन्तु रसं सर्वे यथाकामं कथंचन।
सर्वस्वं तु रसस्यात्र गुप्तपादा हि जानते[2] ॥

व्याघ्रादयः इति। विभावादयः प्रत्येकं रसेषु पृथगुच्यमानाः अनैकान्तिकतां भजन्ते। संयोगस्तु अव्यभिचारी। तथाहि—यत्र बन्धु-

## मधुमती

चतुर्थपक्षे एव औचित्यं मनसि निधायाह—श्रीमदिति ॥ सोऽयमर्थः उत्कर्षवाचिना श्रीपदेन कटाक्षितः। अभिनवपदेन च ध्वनि-टीकाकर्तृपुराणगुप्तपादलेखनविरोधः अत्र न देश्यः[3] इति प्रतिपाद्यते ॥

भरतसूत्रे निलितविभावादिनिर्देशस्य प्रयोजनमाह—व्याघ्रादयः इति। न च केवलात् विभावादितोऽपि यो यद्रसाधिकारी तस्य तदभिव्यक्तिः

---

1 'श्रीमदभिनवगुप्तपादाचार्याः'—क. 2 इमे त्रयोऽपि श्लोकाः न दृश्यन्ते—च.
3 'न दृश्यते'—च.

**रौद्राणां,[1] अश्रुपातादयः अनुभावाः शृङ्गारस्येव करुण-भयानकयोः,[2] चिन्ताऽऽदयः व्यभिचारिणः शृङ्गारस्येव**

---

## सङ्केतः

विनाशो विभावः, अश्रुपातादिश्च अनुभावः, चिन्तादैन्यादिश्च व्यभिचारी, सः अवश्यं शोको रसः । एवं अन्यत्रापि ॥ **अश्रुपातादयः इति** । तत्र वीरे अश्रुपातः माघे निबद्धः[3] । यथा—

## मधुमती

स्यात् इति वाच्यम् । एकस्य अनेकरसाधिकारिकत्वसम्भवेन दोषतादवस्थ्यात् । न च—मिलितव्यञ्जकत्वेऽपि, यत्र विभावानुभावव्यभिचारिणां साधारण्यम्, तत्र शृङ्गारभयानकयोः किं विनिगमकम् ? एकस्या एव अङ्गनातनोः कुणपत्वेन कामिनीत्वेन च परिव्राट्कामुकयोः प्रतीतिसत्त्वात् ।[4] तथा च कामिन्याः उभयरसविभावत्वं, चिन्तायाः उभयव्यभिचारित्वं, अश्रुपातस्य उभयानुभावत्वं च सिद्धमेव—इति वाच्यम् । तत्र केषांचित् साधारण्येऽपि, असाधारणं अन्यं व्यभिचारिणं अनुभावं वा समादाय रसविशेषाभिव्यक्तिनियमात् । तथैव च अनुभवात् ॥

---

1 यतो व्याघ्रादीन् हिंस्रानालोक्य कातर्यात् कश्चित् बिभेति, कश्चन विक्रमाः दुस्सहते, कुतूहलेनान्यो विस्मयते, अपरः क्रुध्यतीति स्थितिः, अत एव एषामपि व्याघ्रादयः विभावाः भवन्ति । 2 अश्रुमोचने क्वचिदानन्दः, क्वचित्कारुण्यम्, क्वचिद्भयं, च हेतुरिति । 3 'निबद्धा' इति नास्ति–ग. 4 'परिव्राट्कामुकशुनां एकस्यामङ्गनातनौ । कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः' ॥ इति [illegible] ॥

**वीरकरुणभयानकानां,[1] इति पृथक् अनैकान्तिकत्वात्[2] सूत्रे मिलिता एव[3] निर्दिष्टाः ॥**

(केवलं विभावानामुल्लेखे—)

**वियदलिमलिनाम्बुगर्भमेघं**
**मधुकरकोकिलकूजितैः दिशां श्रीः ।**
**धरणिः अभिनवाङ्कुराङ्कटङ्का**

---

### सङ्केतः

'स वमन् रुषाऽश्रु घनघर्मविगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरः व्यरुचत् प्रभिन्न इव कुञ्जरस्त्रिधा ॥'[4]

इति । **मिलिताः इति ।** संयोगरूपतयेति यावत् ॥

**वियदलीति । अङ्कः** चिह्नम्[5] । **टङ्कः** बन्धः । अत्र केवल-विभावसद्भावेऽपि अन्यतमद्वयाक्षेपकत्वेन रसपुष्टिः । तेन नानैकान्तिकत्वम् ।

### मधुमती

ननु प्रत्येकमपि रसः अनुभूयते इत्यत आह—**वियदित्यादि** ॥

---

1 यथा विप्रलम्भेन चिन्ता, तथा उत्साहेन शोकेन भयेनापीति । 2 विभावादीनां अनेकरससाधारण्यात्, एकैकमात्रात् नैकैकस्यापि रसस्य नियता अभिव्यक्तिरितिहेतोः इत्यर्थः । 3 'एव' इति नास्ति—क. 4 सभायां धर्मराजकृतकृष्णपूजां असहमानस्य शिशुपालस्य वर्णनमिदम् । सः शिशुपालः रोषेण अश्रु मुञ्चन्, अतिवेलेन क्रोधोष्मणा स्विद्यद्विस्तृतकपोलभागः स्वेदबिन्दुभिः दन्तुरहस्तश्च सन्, नेत्रकपोलहस्तदेशेषु मदजलस्रावी मत्तमातङ्ग इव व्यभात् इत्यर्थः ॥ (शिशुपालवधे १५-४). 5 इदं वाक्यं नास्ति—म.

**प्रणतिपरे दयिते प्रसीद मुग्धे ! [1] ॥ २८ ॥ इत्यादौ,**

(केवलं अनुभावानामुल्लेखे—)

**परिमृदित[2]मृणालीम्लानमङ्गं, प्रवृत्तिः**
**कथमपि परिवारप्रार्थनाभिः क्रियासु ।**
**कलयति च हिमांशोः निष्कलङ्कस्य लक्ष्मीं**
**अभिनवकरिदन्तच्छेदकान्तः[3] कपोलः ॥ २९ ॥[4] इत्यादौ,**

---

**सङ्केतः**

अन्यतमद्वयाक्षेपश्च **प्रसीद** इतिपदात् । प्रसन्नावलोकनमुखप्रसत्तिप्रसादवचनादिः अनुभाववर्गः, **प्रणतिपरे** इति पदाच्च औत्सुक्याभिलाष[5]दैन्यादिः, **मुग्ध**-पदाच्च[6] त्रासत्रपाहर्षादिः व्यभिचारी च समाक्षिप्यते इति ॥

**परिमृदितेति**[7] । अत्र **कथमपि**पदात् ग्लान्यालस्यश्रमप्रभृतिः व्यभिचारिगणः, **अङ्गं**, **प्रवृत्तिः**, **कपोलः** इति पदेभ्यः— 'कस्याः अङ्गम्' इत्याद्यपेक्षायां विभावश्च[8] लभ्यते ॥

---

1 इदं—प्रसादकालानभिज्ञां कामपि मुग्धां प्रति प्रसादं नेतुकामायाः सख्याः वचनम् । गगनमिदं भृङ्गश्यामलनवनीरदव्यापृतम् । भ्रमराणां झङ्कारैः कोकिलानां मधुरकूजितैश्च दिशां शोभा सर्वतो विजृम्भते । भूमिरपि पाषाणदारणटङ्कवत् मनोनोदकैः अभिनवहरिततृणांकुरैः पूर्णा । कालेऽस्मिन् मुग्धे! मुहुर्मुहुः प्रणामशालिनि प्रेमपात्रे प्रिये प्रसन्ना भव इत्यर्थः॥ अत्र केवलं दयित इत्यालम्बनं वियदित्याद्युद्दीपनं च निर्दिष्टम्, न तु अनुभावव्यभिचारिणौ । अथापि रसः पुष्कल एवेति भावः । 2 'परिमिलित'–ख. 3 'च्छेदपाण्डुः'–क. 4 मकरन्दं प्रति माधवस्य मालत्यवस्थावर्णनमिदम् । शरीरमिदं सन्ततसन्तापात् परितो मृदितबालमृणालवत् म्लानम् । (वैवर्ण्यम् ।) आहाराद्युचितक्रियास्वपि परिवारप्रार्थनाभिरेव प्रवृत्तिः, न तु स्वतः । (स्तम्भः ।) कपोलः सद्यः कृत्तदन्तिदन्तधवलः निष्कलङ्कहिमकरशोभां धत्ते (वैवर्ण्यम् ।) इत्यर्थः । (मालतीमाधवे १-२२) अत्रानुभावमात्रनिबन्धनेऽपि रसाभिव्यक्तिः अविकलेति भावः । 5 'औत्सुक्यातिलाप'–घ. 6 'पदाद्वा'–ग. 7 'मिलितेति'–ग. 8 'च' इति नास्ति–घ.

(केवलं व्यभिचारिणामुल्लेखे—)

दूरादुत्सुकं, आगते विवलितं,[1] सम्भाषिणि स्फारितं,
संश्लिष्यत्यरुणं, गृहीतवसने किञ्चाञ्चित[2]भ्रूलतम् ।
मानिन्याः चरणाऽऽनतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुः जातं, अहो ! प्रपञ्चचतुरं जातागसि प्रेयसि[3] ॥३०॥

---

## सङ्केतः

दूरादुत्सुकेति ॥ अत्र उत्सुकत्वादिव्यभिचार्यनुगतत्वेन दूरात् इत्यादिपदेभ्यः सहसा प्रसारणादिरूपः अनुभावः, प्रेयसि इत्यादिपदात् विभावश्च लभ्यते । पूर्णेक्षणं इत्यत्र ईक्षणशब्दः व्यापारवचनः । एवं द्वयसद्भावेऽप्युदाहार्यम् । परं विभावादित्रयसद्भावे रसप्रतीत्युत्कर्षः । त्रय-सद्भावश्च दशरूपके[4] एव । यदाह वामनः—

## मधुमती

दूरादुत्सुकमिति । अत्र दृष्टिलक्षणोदाहरणे विस्तरभिया उपेक्षिते ॥

---

1 'विचलितं'–क. 2 'कोपाञ्चित'–क. 3 मानिनीप्रसादनात् निवृत्तस्य नायकस्य पुनरागमनेन जातभावायाः मानिन्याः चक्षुःक्रियावर्णनमिदम् । प्रिये दूरतः दृष्टे चक्षुः क्षणादेव औत्सुक्यविशिष्टम्, समीपं प्राप्ते तिर्यक्कृतम्, सम्यक्भाषिणि विकसितम्, संश्लिष्यति आरक्तम्, गृहीतचेलाञ्चले किञ्चित्कुटिलीकृतभ्रूलतम्, चरणयोः प्रणामार्थमानते अश्रुजलपूर्णं च जातमिति, प्रियतमे जातापराधे अस्याः मानिन्याः चक्षुः अहो ! विचित्रव्यापारचतुरं अभवत् इत्यर्थः । (अमरुशतके ४४ . ) अत्र च केवलं औत्सुक्यलज्जाहर्षकोपासूयादीनां व्यभिचारिणामेव निबन्धनमिति ज्ञेयम् ॥ 4 दशधा भिन्नेषु नाटकभेदेष्वित्यर्थः । अभिनवगुप्तोऽपि—'काव्यं तावत् मुख्यतो दशरूपात्मकमेव' इत्याह । भोजराजस्तु—'अतः अभिनेतृभ्यः कवीनेव बहुमन्यामहे, अभिनेयेभ्यश्च काव्यम्' इत्याह । 'नाटकं सप्रकरणं भाणः प्रहसनं डिमः । व्यायोगसमवाकारौ वीथ्यङ्केहामृगाः दश ॥' इति दश रूपकाणि ॥

**इत्यादौ च—यद्यपि विभावानां अनुभावानां[1] औत्सुक्यव्रीडाहर्ष[2]कोपासूयाप्रसादानां च व्यभिचारिणां केवलानां[3] अत्र स्थितिः। तथापि—एतेषां असाधारणत्वमिति, अन्यतमद्वयाक्षेपकत्वे सति न अनैकान्तिकत्वं इति[4] ॥ २८ ॥**

---

## सङ्केतः

"सन्दर्भेषु दशरूपकं श्रेयः। तद्धि चित्रम्,[5] चित्रपटवत् विशेषसाकल्यात्।"[6] इति। तद्रूपसमर्पणया तु प्रबन्धेऽपि।

**नानैकान्तिकत्वमिति।** विभावानुभावव्यभिचारिसंयोगस्येति शेषः ॥ २८ ॥

## मधुमती

**अत्र स्थितिरिति।** यद्यपि प्रसादः न व्यभिचारी। तथापि तेन स्वहेतुभूता मतिः उपलक्ष्यते। शास्त्रोक्तार्थानुसन्धानेन अर्थनिर्धारणस्य सुव्यक्तत्वात्। "प्रणामान्तो मानः"[7] इति हि श्रूयते। 'प्रियः चरणपतितः' इति, इदानीमेव प्रसादोचितः इति प्रतिसन्धानात्। **तथापीति।** कार्योन्नेयधर्माणां यथाकार्यं उन्नयनमिति, सति रसचर्वणे अनुपात्ताः अपि अनुमित्युपनीताः रसचर्वणाविषयाः। न चैवं "कष्टकल्पनया व्यक्तिः"[8]

---

1 'विभावानुभावानां'—क. 2 'प्रहर्ष'—क. 3 'केवलानामेव'—ख. 4 एतेषां विभावादीनां मिलितानां रसान्तरसाधारण्याभावेन प्रकृतेऽपि स्वानुकूलेतरद्वयाक्षेपेणैव रसव्यञ्जकता अङ्गीक्रियते इति नोक्तदोषः इति भावः। 5 'तद्धिचित्रम्'—घ. चित्ताकर्षकम्, आश्चर्यकरम्, आनन्ददायकं वा इत्यर्थः। 6 बोधनीयैः विशेषांशैः परिपूर्णत्वादित्यर्थः। (वामनकाव्यालङ्कारे—१-३-३१). 7 अनुरक्तयोर्दम्पत्योः प्रणयेर्ष्यासमुद्भवः कोपविशेषः मानः। 8 (काव्यप्रकाशकारिका—६०. उल्लासः—७.)

तद्विशेषानाह—

**शृङ्गारहास्यकरुण-**
**रौद्रवीरभयानकाः ।**

---

## सङ्केतः

**शृङ्गारेति** । अत्र—कामस्य सकलजातिसुलभतया अत्यन्तपरिचितत्वेन सर्वान् प्रति हृद्यतेति पूर्वं **शृङ्गारः**,[1] तदनु तदनुगामित्वात् **हास्यः**, तद्वैपरीत्यात् निरपेक्षभावाच्च[2] ततः **करुणः**, ततः तत्कारणं अर्थसारः **रौद्रः**, ततः रौद्रस्य कामार्थप्राधान्येन कामार्थयोऽश्च धर्ममूलत्वादिति धर्मप्रधानः **वीरः**, तस्य च भीतत्राणसारत्वात् ततो **भयानकः**, ततः तद्विभावसाधारण्य[3]-

## मधुमती

इत्यनेन विरोधः । यत्र हि अनुभावविभावयोः काव्योपात्तयोरपि प्रणिधानगम्यत्वम्,[4] तत्र प्रतीतिविलम्बेन दोषस्य वक्ष्यमाणत्वात् । अत्र[5] तु अनुमितेः संभृतसामग्रीकत्वेन प्रतीत्यविलम्बः इति, न[6] तद्विषयत्वमेतस्य । तदिदं रसचर्वणतद्विलम्बाभ्यां अनुसन्धेयम् ॥

रससामान्यलक्षणं तु रसत्वमेव । न च तत्र मानाभावः । रसपदशक्यतावच्छेदकत्वेन तत्सिद्धेः । तच्च बाधकाभावात् जातिः, अखण्डोपाधिर्वा इति ध्येयम् ॥ २८ ॥

प्राप्तावसरतया रसं विभजते—**तद्विशेषानाहेति** । यद्यपि प्रकृत-

---

1 शृङ्गं हि शिखरस्थानम् । तत् ऋच्छति प्राप्नोत्यनेनेति शृङ्गारः । मुमुक्षूणां बद्धानां इन्द्रियकल्याणस्यैव आत्मकल्याणमूलत्वात् धर्माविरुद्धकामेन पुरुषार्थरूपेण यदा तत् कल्याणं प्राप्तुमिच्छति, तदा शृङ्गारस्य उत्तमसाधनत्वात् एवं आर्षो व्यवहारः । अन्येषां तु—शृणाति—चरमदशाप्रापणेन हिनस्ति इति शृङ्गं कामविकारः । तत् अनेन प्राप्नोतीति शृङ्गारः मारक एवेति भाव्यम् । 2 'भावत्वाच्च'–ग. 3 'तद्विभावैः साध्य (म्य)'–ग. 4 प्रकरणाद्यर्थान्तरपर्यालोचनया विलम्बेनाभिव्यक्तिरित्यर्थः । 5 'दोषत्वात्, यत्र'–च. 6 'इति न' इति नास्ति–ज.

**बीभत्साद्भुतसंज्ञौ चे-**

**त्यष्टौ नाट्ये[1] रसाः स्मृताः ॥२९॥**

---

### सङ्केतः

सम्भावनात् **बीभत्सः,** इति इयत् वीरेणाक्षिप्तम्[2]। वीरस्य च फलभूतः **अद्भुतः** इति अस्त्येषां क्रमः ॥

**द्वौ भेदाविति**। आत्मेति शेषः। तेन[3] द्वौ भेदौ आत्मा शृङ्गारस्य, न तु आत्मानौ इति। **अयमभिप्रायः**—सम्भोगे चेत् न विप्रलम्भाशङ्का, तदा स्वाधीने अनुकूले च अनादरः स्यात्, वामत्वात्

### मधुमती

तया "अष्टौ काव्ये रसाः स्मृताः" इत्येव वक्तुमर्हति। तथापि, एतावता सामान्यतो रसावगमे सिद्धे, इदानीं विशेषजिज्ञासायां, 'विशेषाभिधानस्य तदितरव्यवच्छेदकत्वम्' इति व्युत्पत्तिबलात्[4] श्रव्यकाव्ये शान्तरसाभाव-प्रसङ्गः इति, **नाट्ये** इति विभिद्योक्तम् ॥ तत्र रतिनिष्पाद्यत्वं **शृङ्गारत्वम्**। **न** च स्वस्मिन् स्वक्रियाविरोधः। सत्कार्यवादाभ्युपगमेन सामञ्जस्यात्। एवं रसान्तरलक्षणमप्यूह्यम् ॥

---

1 शान्ताभिनयस्य चमत्कारित्वाभावात् नाट्ये अष्टौ एव रसाः। काव्ये तु शान्तोऽपि स्वदते एवेति भावः। शान्तः नाट्येऽपीति तत्त्वदर्शिनः। परं तु सर्वत्र अष्टावेव रसाः उपरागजनकाः इति मन्तव्यम्। शान्तस्य विषयापरागहेतुत्वात्। स्नेहः भक्तिः वात्सल्यमिति तु रतेरेव प्रभेदाः। समानयोः रतिः स्नेहः। अनुत्तमस्योत्तमे भक्तिः। उत्तमस्य अनुत्तमे वात्सल्यमिति ॥ 2 'णाक्षिप्ते'–घ. 3 'त(अ)तः'–ग. 4 व्युत्पत्तिः—कार्यकारणभावः।

**तत्र शृङ्गारस्य द्वौ भेदौ—सम्भोगः विप्रलम्भश्चेति । तत्र आद्यः—परस्परावलोकनालिङ्गनाधरपानपरिचुम्बना[1]द्यनन्तभेदत्वात् अपरिच्छेद्यः इति—एक एव गण्यते ॥**

---

### सङ्केतः

कामस्य । यन्मुनिः—

“ यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।

दुर्लभत्वं च यत् नार्याः कामिनः सा परा रतिः ॥ ”[2] इति ॥

एवं विप्रलम्भे चेत् न संयोगाशा, तदा नैराश्येन करुण एव स्यात् । तस्मात्—

‘ प्राप्तं गतमिवेत्येवं गतं प्राप्तमिवेति च । ’[3]

इत्येवं परम्पराक्रमेण वर्धिष्णुः अयं कामः परमप्रीतिकृत् । सम्भोगविप्रलम्भयोस्तु शृङ्गारशब्दः—ग्रामैकदेशे ग्रामशब्दवत्—उपचारात् इति ॥ **सम्भोगः इति** । संयुक्ताभ्यां भुज्यते इति **सम्भोगः** । सम्भोगसुखास्वादलोभेन वियुक्ताभ्यां प्रलभ्यते आत्मा अत्रेति **विप्रलम्भः** ॥

### मधुमती

तत्र प्रथमोद्दिष्टं शृङ्गारं विभजते—**सम्भोग इति** । इष्टालिङ्गनाद्यवाप्तिपुष्टरतित्वं **सम्भोगत्वम्** । तदलाभापुष्टप्रकृष्ट[4]रतित्वं **विप्रलम्भत्वम्** ॥

---

1 ‘ परस्परालोकनालिङ्गनचुम्बना ’-क. 2 (नाट्यशास्त्रे—२२-२०७) अत्रैव ‘ संभाव्यते भयं यत्र यतश्चैव निवार्यते । दुर्लभं यत्तु तत्रासौ कामो रतिकरो भवेत् ’ इति पाठान्तरम् । 3 वस्तुतः प्राप्तं प्राप्तमप्यपहारितमिव, वस्तुतः गतं गतमपि प्राप्तमिव यत्र भातीत्यर्थः । 4 ‘ तदलाभाप्रकृष्ट ’-ज.

यथा—(नायिकाऽरब्धसंभोगशृङ्गारः—)

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य[1] जातपुलकामालोक्य गण्डस्थलीं
लज्जा[2]नम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता[3]॥३१॥

---

## सङ्केतः

शून्यमिति। किञ्चित् पूर्वकायेन। शनैः मन्दम्। तच्च यथा सः न जागर्तीत्याशयेन। अत्र गण्डयोः पुलकोद्गमेन निद्राव्याजावगमात्

## मधुमती

शून्यमिति। अत्र पत्युर्मुखं इत्यनेन आलम्बनम्, शून्यं इत्यनेन उद्दीपनम्, शयनादुत्थाय इत्यनेन उत्कण्ठालक्षणः व्यभिचारी, शनैः

---

1 'परिरभ्य'–क. 2 अत्र—'लज्जा' इति पृथक्कृत्य, लज्जावतीति व्याख्येयम्। तेन लज्जनक्रियया समानकर्तृकत्वात् आलोक्येति क्त्वाप्रत्ययोपपत्तिः इति नागेशः। 3 प्रथमावतीर्णमदनविकारायाः मुग्धायाः वर्णनमिदम्। शयनागारं निर्जनं विज्ञाय शयनात् मन्दं किञ्चिदुत्थाय, प्रेयस्यनुरागशोधनाय कपटनिद्रामुपागतस्य पत्युः मुखं सुचिरं निरीक्ष्य, निर्भरं परिचुम्ब्य, तेन रोमाञ्चपरिपूरितां पत्युः गण्डस्थलीं आलोक्य, लज्जया नम्रमुखी जाता बाला हसता प्रियेण चिरं चुम्बिता इत्यर्थः॥ (अमरुशतके-७७) अत्र—शून्यवासगृहावलोकनं उत्थानस्य, तच्च मुखनिर्वर्णनस्य, तच्च परिचुम्बनस्य, तच्च पुलकोद्गमस्य, तदवलोकनं लज्जायाः, सा च मुखावनतेः, सा च प्रियचुम्बनस्येति कारणतामालम्बते। ध्वनिपरम्परा तु—शून्यमिति विजनतया चुम्बनयोग्यता, वासगृहमिति स्रक्चन्दनादिपूर्णतया उद्दीपकता, विलोक्येति मौग्ध्यातिशयः, किंचिदुत्थायेति मिथःसन्दानितोरुकाण्डता, शनैरिति पत्युरुत्थानभीरुता, निद्रेत्यादिना अनुरागातिशयः, सुचिरं इति मौग्ध्यम्, पत्युरिति नवत्वम्, विस्रब्धमिति परवशत्वम्, परिचुम्ब्येति स्वाच्छन्द्यम्, जातपुलकामिति पुलकानामवशत्वम्, आलोक्येति ईषदालोकनमात्रप्रभावः, नम्रेति लज्जा, प्रियेणेति निरतिशयं प्रेम, हसतेति तदनुरागपरिज्ञानेन हर्षातिशयः, बालेति चातुर्यम्, चिरमिति सम्भोगाङ्गीकारपर्यन्तत्वमिति। इदं नायिकारब्धस्योदाहरणम्॥ नायक-शून्यवासगृहादिः विभावः, किञ्चिदुत्थानादिः अनुभावः। औत्सुक्यादिः व्यभिचारी॥

तथा—(नायकारब्धसंभोगशृङ्गारः—)

**त्वं मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं**
**लक्ष्मीं, इत्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।**

---

## सङ्केतः

नायिकायाः लज्जाभावः ॥

**त्वं मुग्धाक्षीति ।** वीटिका कशासंयोजनपाशः, जालिकेति यावत् ।[1] सम्भोगस्य तात्कालिकं फलं परीरम्भः । स च कञ्चुलिकासद्भावे तथाविध-सुखातिशयफलावहो न स्यात् इत्याशयेन **विनैव कञ्चुलिकया** इत्युक्तम् ।

## मधुमती

इत्यनेन स्तम्भरूपः अनुभावश्च ॥

**त्वं मुग्धाक्षीति ।** अत्र **त्वं मुग्धाक्षि !** इत्यनेन आलम्बनम्, **विनैव कञ्चुलिकया** इत्यनेन उद्दीपनम्, **अभिधायिनि वीटिकासंस्पृशि** इत्यनेन तुल्यकालत्वप्रतीत्या उत्कण्ठालक्षणः व्यभिचारी, **वीटिकासंस्पृशि** इत्यनेन अनुभावश्च ॥

**न च उदाहरणयोः अन्यतरवैयर्थ्यम् ।** नायकालम्बनस्य सम्भोगस्य आद्येन, नायिकालम्बनस्य च सम्भोगस्य अन्त्येन श्लोकेन उदाहरणात् ॥ तत्प्रयोजनमपि—नायकयोः आलम्बनत्वं आश्रयत्वं च समानमिति ध्वननम्[2] ॥

---

1 स्तनबन्धककञ्चुकग्रन्थि रित्यर्थः. 2 'कथनम्'—ज.

शय्योपान्त[1] निविष्टसस्मितसखीनेत्रोत्सवानन्दितः
निर्यातः शनकैः अलीकवचनोपन्यासं आलीजनः[2] ॥ ६२ ॥

अपरस्तु[3]—अभिलाषविरहेर्ष्याप्रवासशापहेतुकः इति पञ्चविधः। क्रमेणोदाहरणानि—

---

सङ्केतः

सस्मिता या सखी सैव **नेत्रोत्सवः** तेन **आनन्दितः**। **अलीकेति**।[4] समीपोपन्यासं यथा भवति तथेत्यर्थः।[5]

**अपरस्त्विति**। पूर्वं असङ्गे सङ्गेच्छा **अभिलाषः**। प्रतिनियतेऽपि सङ्गे कुतश्चित् कारणात् असङ्गः[6] **विरहः**। सपत्नीषु कान्तकृतसन्मानाद्यसहनं **ईर्ष्या**। देशान्तरगमनं **प्रवासः**। कुपितदेवादि[7]कृतः वाग्दण्डः **शापः**॥

मधुमती

**अपरस्त्विति**।[8] अभिलाषेण अयोगपूर्वविप्रलम्भः, विरहेण करुणविप्रलम्भश्च सङ्गृहीतः। **न च करुणः न शृङ्गारः** तस्या शोकप्रकृतिकत्वात्

---

1 'तल्पोपान्त'–क. 2 स्तनमर्दनेन रन्तुकामनया व्यवधानभूतकञ्चुकमोचनाय प्रवृत्तस्य नायकस्य वर्णनमिदम्। 'अयि सुन्दरनयने! त्वं निचोलेन विनैव चित्ताकर्षणशीलां शोभां धारयसि' इत्येवमाभाषमाणे प्रियतमे तन्निचोलबन्धनग्रन्थिं संस्पृशति सति, रिरंसया शय्योपान्ते निविष्टा सस्मिता च या प्रेयसी तस्याः नेत्रोल्लासेन आनन्दितः आलीजनः मिथ्यावचनैः मन्दं मन्दं निर्यातः इत्यर्थः। मिथ्यावचनं च—'दशत्यसौ परभृतः सहकारस्य मञ्जरीम्। तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥' इत्यादि ॥ (अमरुशतके २३) नायकारब्धस्योदाहरणमिदम् ॥ नायिका विभावः, वीटिकास्पर्शनाद्यनुमितकालाक्षमत्वरूपमौत्सुक्यं व्यभिचारि ॥ 3 विप्रलम्भश्रृङ्गारस्तु इत्यर्थः। 4 'अलीकेति' इति नास्ति–ग. 5 'भवतीत्यर्थः'–घ. 6 'असंयोगः'–ग. 7 'दैवादि'–व. 8 'करुणायुक्तविप्रलम्भसाधनम्। अपरस्त्विति'–च.

## मधुमती

इति वाच्यम्। प्रत्युज्जीवनान्तप्रयाणे[1] अन्यतरस्यापि रतेः अनपायात्।[2] तत्प्रकृतिकस्य[3] शृङ्गारस्यैव औचित्यात्।[4] अतथाभूते करुणसौलभ्यात्।[5] अत एव रघुवंशे—

तेनाष्टौ परिगमिताः समाः कथंचित्
बालत्वात् अवितथसूनृतेन सूनोः।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥[6] इत्यभिधाय,

तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद।
प्राणान्तहेतुमपि तं भिषजामसाध्यं
लाभं प्रियाऽनुगमनं त्वरया नु मेने ॥[7] इत्यनन्तरम्—

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोः
देहत्यागात् अमरगणनालेख्यमासाद्य सद्यः।
पूर्वाकाराधिकचतुरया सङ्गतः कान्तयाऽसौ
लीलागारेष्वरमत पुनः नन्दनाभ्यन्तरेषु ॥[8]

---

1 'प्रयोजने'—ज. 2 'अपायात्'—च. 3 'तत्प्रकृतिकस्थ'—च. 4 'स्यैव संभवात्'—च. 5 'करुणा असौलभ्यात्'—ज. 6 यथार्थं प्रियं च व्याहरन् सः अजः, पुत्रस्य राज्याक्षमतया तमेकं परित्यज्य गन्तुमक्षमस्सन्, तत्र तत्र इन्दुमत्याः सादृश्यं तच्चित्रं च पश्यन्, स्वप्नेषु क्षणभङ्गुरं प्रियासमागमोत्सवं च अनुभवन्, कृच्छ्रेण अष्टौ वत्सरान् अत्यवाहयत् इत्यर्थः। 7 प्रियाविरहजन्यशोकरूपः शङ्कुश्च, प्लक्षाङ्कुरः सौधतलमिव तस्य हृदयं बलात् किल बिभेद। स च भिषजामप्रतिसमाधेयं मरणहेतुमपि तं शोकरोगं, प्रियां प्रति त्वरया अनुगमने हेतुलाभमिव मेने इत्यर्थः॥ 8 एवं असौ अजः गङ्गासरयूसङ्गमे तीर्थे देहं संत्यज्य, सद्य एव अमरभावं प्राप्तस्सन्, तत्र पूर्वस्मादाकारादधिकतरकान्तियुतया स्वकान्तया सङ्गतः इन्द्रोद्यानान्तर्वर्तिषु क्रीडाभवनेषु स्वैरं अरमत इत्यर्थः॥ (रघुवंशे ८-९४, ९५, ९६).

(अभिलाषहेतुकः विप्रलम्भः—)

प्रेमार्द्राः प्रणयस्पृशः परिचयात् उद्गाढरागोदयाः
तास्ताः मुग्धदृशो निसर्गमधुराः चेष्टाः भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः [1] ॥ ३२ ॥

---

## सङ्केतः

**प्रेमार्द्राः** इति । **प्रणयस्पृशः** स्वयमाश्लेषादियाच्ञास्पृशः **परिचयात्** पुनः पुनः करणात् [2] **उद्गाढरागोदयाः तास्ताः चेष्टाः मयि भवेयुः** भवन्तु इति **आशंसापरिकल्पितासु** मनोरथविषयीकृतासु **लयः** चेष्टानां साक्षादनुभवः इव ॥

## मधुमती

इत्यनेन लोकोत्तरा रत्यनुवृत्तिः दर्शिता । अत एव स्थितोऽपि शोकः शृङ्गारस्य व्यभिचारितां भजते । अत एव अन्यत्रापि—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते ।' इत्युक्तम् ॥

**प्रेमार्द्राः इति** । अपराधसहस्रैरपि अविचलितं प्रेमैव **प्रणयः** । स एव परिचयातिशयेन रञ्जनक्षमः **अनुरागः** ॥

---

1 मालतीप्राप्त्यै श्मशानसाधने प्रवृत्तस्य सङ्कल्पदशामापन्नस्य माधवस्येयमाशंसा । अनतिप्रौढयौवनतया विलासचेष्टाऽनभिज्ञदृष्टेः मालत्याः स्वभावसुन्दराः वाङ्मनसागोचराः ते ते विलासविशेषाः मयि प्रेम्णा आनुकूल्यशालिनः किं ? किं वा प्रणयस्पृशः ? किं वा दृढासङ्गात् उद्गाढरागोदयाश्च भवेयुः ? येषु विलासेषु मनोरथमात्रविषयेष्वपि मनसः बाह्येन्द्रियप्रवृत्तिविरोधिनी आनन्देन तन्मयीभावरूपा [illegible] इत्यर्थः । (मालतीमाधवे ५.७) 2 'यान् पुनः करणात्'—म.

(विरहहेतुकः विप्रलम्भः—)

**अन्यत्र व्रजतीति का खलु कथा? नाप्यस्य तादृक् सुहृत्[1]**
**यो[2] मां नेच्छति, नागतश्च, ह ह हा![3] कोऽयं विधेः प्रक्रमः?**
**इत्यल्पेतरकल्पनाकबलितस्वान्ता निशान्तान्तरे**
**बाला वृत्तविवर्तनव्यतिकरा नाप्नोति[4] निद्रां निशि[5] ॥ ३४ ॥**

**एषा विरहोत्कण्ठिता ॥**

---

## सङ्केतः

अन्यत्रेति। अन्यत्र नायिकायाम्। एतेन—स्वस्मिन् पत्युः अनुरागः[6] उक्तः। **नाप्यस्य तादृक्** इत्यादिना तु परिवारानुकूलत्वं उक्तम्। निशान्तान्तरे गृहान्तः, न तु बहिः। एतेन सतीत्वं उक्तम् ॥

## मधुमती

ननु—एतच्छ्लोके विरहस्य नामापि नास्ति इत्यत आह—**एषेति**। "चिरयत्यधिकं कान्ते विरहोत्कण्ठिता मता।"[7] इत्युक्ततल्लक्षणसत्त्वादिति भावः ॥

---

1 'तादृग्जनः'—क. 2 'या'—ख. 3 'सहसा'—क. 4 'बालानामविघर्तनव्यतिकरादाप्नोति'—क. 5 कृतं संकेतस्थानं अनागते नायके तदनागमनकारणानि वितर्कयन्त्याः नायिकायाः वर्णनमिदम्। स खलु नायकः विपक्षरमणीगृहं प्रति गच्छतीति शङ्कैव नास्ति। यः प्रियं स्वगृहे अवस्थाप्य क्षणमपि मां विरहयति तादृशः सुहृदपि अस्य नास्ति। तथापि नैवागतः खलु। हन्त! कोऽयं विधेः हस्तप्रक्षेपः? किं वा मयाऽपराद्धं दैवस्य? इत्याद्यनन्तविकल्पनानिरन्तरहृदया गृहान्तरेव अतिशयेन विलुठन्ती बालेयं निश्यपि निद्रां न लभते इत्यर्थः ॥ अत्र नायिकारतेः नायकः आलम्बनम्। विवर्तनादिः अनुभावः। चिन्तादिः व्यभिचारी ॥
6 'पत्यनुरागः'—ग. 7 'चिरयत्यव्यलीकेऽपि विरहोत्कण्ठितोन्मनाः'—च.

(ईर्ष्याहेतुकः विप्रलम्भः—)

सा पत्युः प्रथमापराध[1]समये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।[2]
स्वच्छैः अच्छकपोलमूल[3]गलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैः[4] अश्रुभिः[5] ॥२५॥

---

## सङ्केतः

**सा पत्युरिति।** अत्र सख्युर्भावः **सख्यम्** मैत्री। सखिवणिग्दूताद्यः[6] इति यः। तेन **उपदेशः** तं तथा। अथवा सख्यां साधुः उचितः **सख्यः**। 'तत्र साधुः[7] इति यः। स चासौ **उपदेशश्च** तं तथा इति। **रोदनस्य** सशब्दत्वपरिहाराय **अश्रुभिः** इत्युक्तम्। अश्रूणामेव प्राचुर्याय **लोलोदकैः** इत्युक्तम्।[8] **स्वच्छैः** इत्यनेन तु चिरकालं रोदनं लभ्यते, न तु क्षणमात्रम्। क्षणमात्ररोदने हि किञ्चिदञ्जनसद्भावात्[9]अश्रूणां स्वच्छता न स्यात्। प्राक् अश्रूणि बिन्दुतया **कपोलमूले**[10]पतन्ति। पश्चात् तत्र मिलितानि **लुठल्लोलोदक**तया परिणमन्तीति तात्पर्यार्थः॥

---

1 'मेऽपराध'–क. 2 'संसूचितम्'–ख. 3 'कपोलपाणि'–ख. 4 'लोलालकैः'–क. 5 काचन सखी स्वप्रेयस्याः नवोढायाः दुःखमसहमाना तामेवं वर्णयति। सा खलु मुग्धा पतिकृतान्याङ्गनासङ्गमरूपप्रथमापराधसमये स्वाङ्गानि सव्याजं पराङ्मुखीकर्तुं, वक्रोक्तिभिः स्वमानं सूचयितुं वा, सखीकृतमुपदेशं विना स्वतः नैव जानाति। किन्तु केवलं अञ्जनकालुष्यरहितानि निर्मलकर्णजाहप्रान्तदेशगलितानि अश्रूणि सिञ्चन्ती तैश्च परितो निरुद्धनेत्रोत्पला विप्रकीर्णचञ्चलालकाऽलङ्कृता कमपि प्रसाधनोपायमजानाना निरन्तरं रोदिति॥ इति॥ अत्र नायिकागतविप्रलम्भस्य नायकः आलम्बनम्। अश्रुपातादयः अनुभावाः। मानः व्यभिचारी॥ अत्र ईर्ष्याहेतुकः विप्रलम्भः॥ (अमरुशतके २९). 6 (हेमचन्द्रशब्दानुशासने—७-१७५). 7 (हेम. श.—७-१-६०). 8 'इति चोक्तम्'–ग. 9 'संभवात्'–घ. 10 'मूलम्'–ग.

(प्रवासहेतुकः विप्रलम्भः—)

**प्रस्थानं वलयैः कृतं, प्रियसखैः अस्रैः अजस्रं गतं,**
**धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः।**
**यातुं निश्चितचेतसि प्रियतमे सर्वे[1] समं प्रस्थिताः[2]**
**गन्तव्ये सति जीवित! प्रिय! सुहृत्सार्थः किमु त्यज्यते?[3] ॥३६॥**

---

## सङ्केतः

**प्रस्थानमिति।** अत्र गतं आसितं इति[4] आरम्भे क्तः, न त्वतीते। अतीतक्ते[5] हि तयोः अतीतत्वात् **सुहृत्सार्थः किमु त्यज्यते** इत्यत्र अर्था-सङ्गतिः स्यात्। **जीवित! इति प्रिय!** इति च आमन्त्रणे।[6] इदं च पदद्वयम्। प्रियेति तु सुहृद्विशेषणे, पूर्वं **प्रियसखैः** इति अस्रविशेषणं न वाच्यं स्यात्। अथवा **प्रियस्य सुहृदां** मित्राणां **सार्थः** समूहः वलयादिः,[7] तद्भावभावित्वात्, इति यदि व्याख्या, तदा प्रियेति सुहृद्विशेषणतयैव वाच्यम्। **प्रियतमे** अत्यन्तवल्लभे, न तु भर्तरि॥ **तदयं तात्पर्यार्थः—हे प्रिय! जीवित!** प्रियत्वादेव त्वं[8] भण्यसे—पश्चादपि यातव्ये **सुहृत्सार्थः किमिति त्यज्यते?** पश्चात् महद्दुःखं अनुभविष्यसीति। **किमु** इति पदं काका

---

1 'सर्वैः'–क. 2 'प्रस्थितं'–क. 3 'किमुत्सृज्यते'–ख. स्वनायके प्रयाणोन्मुखे तत्क्षणसंजातकार्श्यादिकायाः प्रियायाः स्वजीवितं प्रति सोपालम्भोक्तिरियम्। हे जीवित! प्रियतमे गन्तुं चेतसि निश्चयं कृते, मदीयैः वलयैः कृतमेव प्रस्थानं कार्श्येन। एवं तत्र प्रियसखैः नेत्राम्बुभिः धाराकारतया निर्गतम्। क्षणमात्रमपि धैर्यं नालम्बितम्। तस्मादपि पूर्वमेव गन्तुं चित्तेन निश्चितं च। एवं सर्वेऽपि तेन सहैव प्रस्थिताः अभवन्। अत्र च त्वयाऽपि अवश्यं गन्तव्ये सति प्रियं सुहृत्समूहं च त्यक्त्वा ततः कुतः एकाकिना गम्यते? धिक्! त्वां निर्लज्जमिति भावः॥ अत्र प्रवासहेतुकः विप्रलम्भः। प्रियः आलम्बनम्। प्रयाणादि उद्दीपनम्। कार्श्यादयः अनुभावाः। तद्व्यङ्ग्या चिन्ता व्यभिचारिभावः। (अमरु ३५). 4 'इत्यत्र'–ग. 5 'अतीते'–ग. 6 'आमन्त्रणं'–ग. 7 'प्रियस्य पत्युः मित्राणि वलयानि'–घ. 8 'हे प्रिय! प्रियत्वादेवं'–ग.

(शापहेतुकः विप्रलम्भः—)

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायां
आत्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैः तावत् मुहुरुपचितैः दृष्टिरालुप्यते मे
क्रूरः तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः[1] ॥ ३७॥

---

## सङ्केतः

प्रश्नेन वा व्याख्येयम् ॥ यदि च प्रियेण सनाथः सुहृत्सार्थः इति मध्यमपद-लोपी समासः, तदा—अयमर्थस्तावत् एकः,[2] सुहृत्सार्थः अन्यश्च[3] प्रिययुक्तः, तत् गन्तुमुचितमेव—इत्यपि व्याख्या ॥

त्वामालिख्येति । आत्मानं अङ्घ्रिगतं यावत् आलेख्यतया साक्षादिव च इच्छामि,[4] तावत् आलेख्येऽपि साक्षादिव तद्विभावनात् अश्रूद्गमः । तस्मिन्नपीति । चित्रेऽपि इत्यर्थः । तथा अत्र मनसैव तस्याः

## मधुमती

त्वामालिख्येति । कृतान्तः—दैवम् । यद्यपि—अयं प्रवासस्यैव भेदः सम्भवति । अन्यथा सावधित्वलक्षणप्रकारभेदेन प्रवासोऽपि द्विविधः

---

1 कुबेरशापेन वियुक्तभार्यस्य यक्षराजस्य प्रलापोऽयम् । हे प्रिये ! प्रणय-कुपितायाः तव प्रतिकृतिं शिलापट्टे गैरिकादिरञ्जकद्रव्यैः विलिख्य मत्प्रतिकृतिं च तत्रैव तव चरणपतितामिव लिखितुं यावदिच्छामि, तावदेव मुहुर्मुहुरभिवृद्धैः अश्रुभिः मम दृष्टिरेव आच्छाद्यते, सर्वप्रकारेण दुःखकारी क्रूरः सः कृतान्तः चित्रेऽप्यावयोः सङ्गमं न सहते इति मन्ये । इत्यर्थः अत्र प्रवाससङ्कीर्णः शापहेतुको विप्रलम्भः । पाण्डोस्तु प्रवाससङ्कीर्णः इति ध्येयम् ॥ अत्र नायिका आलम्बनम् । प्रणयकोपः उद्दीपनम् । चरणपातेच्छादि अनुभावः । कृतान्ते असूया व्यभिचारिणी ॥ (मेघदूते–उ. ४४.)
2 'एकं'–ग. 3 'अन्यच'–घ. 4 'देवेच्छामि'–ग.

## सङ्केतः

चित्रविषयनयनं, तस्य च पादविषयं पतनं न बहिर्वर्णकादिभिः करणं, इत्यपि व्याख्यातम्।[1] अत्र व्याख्याद्वयेऽपि सहृदयैः सारेतरता विभाव्या (?) ॥

## मधुमती

स्यात्। तथापि कयाऽपि विवक्षया सन्नपि विशेषो नाभिधीयते। यथा—सम्भोगे मानान्तरत्वादयः, विप्रलम्भे च नोदनाद्यनेकावस्थाविशेषाः। कयाचित् विवक्षया अन्तर्भूतमपि पृथगभिधीयते। यथा—अत्रैव शापहेतुकस्य प्रवासप्रवेशेऽपि पृथक्कृत्य अभिधानमिति। आचार्यशैलीयम् ॥

पितृचरणास्तु—पाण्डोः शापहेतुको विप्रलम्भः प्रामाणिकः प्रवासपदेन सङ्ग्रहीतुं न शक्यते इति, तदर्थं पृथगभिधानम्। वैदेश्यनिबन्धन[2] चिरव्यवधानस्यैव प्रवासपदशक्यत्वात्। तस्य च अत्र अभावात्। वक्रेक्षितादिभिः आलिङ्गनं प्रतिश्रुत्य शापभयेन अप्रदानेन वञ्चनात्मकविप्रलम्भस्य स्फुटत्वात्।

यत्राङ्गना युवानश्च वसते न वसन्ति च।
स प्रवासः प्रशब्देन प्रतीपार्थेन कथ्यते ॥
चित्तोत्कण्ठादिभिः चेतः भृशं वासयतीह यः।
प्रवासयति वा यूनः स प्रवासो निरुच्यते ॥
प्रपूर्वको वसिः ज्ञेयः कारितान्तःप्रमापणे।[3]
तूष्णीं प्रवासयेदेनमिति वृद्धानुशासनात् ॥[4]

इत्यादि च प्रवासपदव्युत्पत्तिमात्रम्। तत्कथनमपि—'प्रवासे भूषणादि न वर्णनीयम्, चिन्तोत्कण्ठादि परं वर्णनीयम्' इत्युपदेशपरम् ॥[5]

---

1 'व्याख्यानं'–घ. 2 'वैशद्यनिबन्धनं'–ग. 3 अन्तःप्रमापणं—आभ्यन्तरो वधः। 4 (सरस्वतीकण्ठाभरणे—५, ७१–७३) 5 'वर्णनीयमित्यपरम्'–च.

हास्यादीनां क्रमेण उदाहरणानि—

(हास्यरसः—)

आकुञ्च्य पाणिं अशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वरं प्रथितथूत्कं अदात् प्रहारं
हा हा ! हतोऽहं इति रोदिति विष्णुशर्मा[1] ॥ ३८ ॥

---

## सङ्केतः

आकुञ्च्येति । अत्र अशुचिं अशुचिक्रियाकारणत्वात् वामं पाणिम् ॥

## मधुमती

क्रमप्राप्तेऽपि हास्याद्युदाहरणे, 'शृङ्गारवत् नामीषु अवान्तरभेदः वाच्यः' इति विभावयितुमाह—हास्यादीनामिति ॥

आकुञ्च्येति । विष्णुशर्मा आलम्बनम् । रोदनादि उद्दीपनम् । लज्जादयः व्यभिचारिणः । वैवर्ण्यादयः अनुभावाः ॥

---

1 कश्चन—विष्णुशर्मनामानं अल्पाजडं उपहसति । काचन वेश्या स्वकीयं नित्याशुचिं पाणिं आकुञ्चिताङ्गुलिचतुष्टयीघटिताङ्गुष्ठं कृत्वा थू थू इति उच्चैः शब्दमुच्चरन्ती, आपोहिष्ठादिमन्त्रपूतजलबिन्दुभिः प्रतिपदं प्रोक्षणैः परमपवित्रे मम शिरसि प्रहारं दत्तवती । हा हा हतोऽस्मि ! इति विष्णुशर्मा नाम कश्चन विप्रः रोदिति इत्यर्थः । अत्र हास्यम् ॥ विष्णुशर्मा आलम्बनम् । रोदनं उद्दीपनम् । वैवर्ण्यादिः अनुभावः । द्रष्टुः आवेगचापल्यादयः व्यभिचारिणः । हासः स्थायी ॥

(करुणरसः—)

हा ! मातः ! त्वरिताऽसि कुत्र ? किमिदं ? हा ! देवताः ! क्वाशिषः ?
 धिक् प्राणान् ! पतितोऽशनिः ! हुतवहः तेऽङ्गेषु, दग्धे [1]दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरः
 चित्रस्थानपि रोदयन्ति, शतधा कुर्वन्ति भित्तीरपि [2] ॥ ३९ ॥

---

## सङ्केतः

हा मातरिति । काश्मीरराजमातृमरणे भट्टनारायणवाक्यमिदम् ।[3] अशनिः हुतवहः वज्राग्निः । मध्यं रुद्धं याभिः[4] ताभिः तथा । ततो घर्घरादिभिः त्रिभिः पदैः[5] कर्मधारयः । घर्घराः अव्यक्ताः ॥

## मधुमती

हा मातरिति । अत्र मातृपदप्रतिपाद्या आलम्बनम् । अङ्गेषु हुतवहः इत्युद्दीपनम् । रोदनादयः अनुभावाः । तदनुमिताः निर्वेदग्लान्यादयः व्यभिचारिणः ॥

---

1 'तेऽङ्गे प्र(सु)दग्धे'–क. 2 प्रमीतां मातरं प्रति अनुशोचन्तीः अङ्गनाः प्रेक्ष्य शोचतः कस्यचिदुक्तिः । हा मातः ! अस्मान् परित्यज्य कुत्र गन्तव्ये त्वरिताऽसि ? किमिदमाकस्मिकं कृतम् ? । ब्राह्मणानामाशिषः क्व गताः ? मातरि गतायामपि ये तिष्ठन्ति तान् प्राणान् धिक् ! अकाण्डे एव वज्रायुधं पतितम् । अहो ! ते अङ्गेष्वेव हुतवहः ज्वलितुमारब्धः । हा ! दग्धे एव दृशौ ! इत्येवं गद्गदध्वनिना मध्ये विच्छिन्नविच्छिन्नाः शोकावहाः पौराङ्गनानां प्रलापाः चित्रगतानपि जनान् रोदयन्ति । किं बहुना ! चित्रभित्तीरपि शतधा कुर्वन्ति इत्यर्थः ॥ अत्र करुणो रसः ॥ मृता आलम्बनम् । दाहादि उद्दीपनम् । रोदनं अनुभावः । दैन्यादिः व्यभिचारी । शोकः स्थायी ॥ (नारायणभट्टः (?)). 3 'काव्यमिदं'–ग. 4 'यया'–घ. 5 'घर्घरादित्रिपद'–घ.

(रौद्ररसः—)

कृतं अनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिः निर्मर्यादैः भवद्भिः उदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनां
अयमहं असृङ्मेदोमांसैः करोमि दिशां बलिम्[1] ॥४०॥

(वीररसः)—

क्षुद्राः ! संत्रासमेनं विजहित[2] हरयः !, क्षुण्ण[3]शक्रेभकुम्भाः
युष्मद्देहेषु[4] लज्जां दधति परममी सायकाः[5] निष्पतन्तः ।

---

### सङ्केतः

कृतमिति । अत्र नरकरिपुः अच्युतः । किरीटी अर्जुनः ॥

क्षुद्रा इति । विजहित इति—जहातेः पञ्चमी[6]परस्मैपदमध्यम-

### मधुमती

कृतमनुमतमिति । अत्र गुरुपदहेतवः[7] भीमादयः आलम्बनम् । उदायुधत्वं उद्दीपनम् । वैवर्ण्यादयः अनुभावाः । उग्रतादयः व्यभिचारिणः ॥

क्षुद्राः इति । श्रीरामः आलम्बनम् । जलधिनियमनादि

---

1 द्रोणवधक्रुद्धस्य अश्वत्थाम्नो वचनम् । यैः पशुप्रायैः अतिक्रान्तधर्मसेतुभिः उद्यतास्त्रैरपि भवद्भिः इदं संन्यस्तशस्त्रद्रोणाचार्यवधरूपं महत् पातकं कृतं अनुज्ञातं अनिराकृतं वा, तेषां कृष्णभीमार्जुनसहितानां भवतां सर्वेषामपि रक्तवसामांसैः दिग्देवताभ्यः बलिं ददामि इत्यर्थः । अत्र रौद्रः रसः । धृष्टद्युम्नादयः आलम्बनम् । गुरुवधादयः उद्दीपनम् । साटोपालापः अनुभावः । उग्रतादयः व्यभिचारिणः । क्रोधः स्थायी ॥ (वेणीसंहारे ३-२४). 2 'मेते विजहति'–क. 'मेनं विजहत'–ख. 3 'यः भिन्न'–क. 4 'द्गात्रेषु'–क. 5 'शायकाः'–ख. 6 लोट्लकारस्य पञ्चमीति संज्ञा अत्र कृता । 7 'गुरुवधहेतवः'–ज.

सौमित्रे! तिष्ठ, पात्रं त्वमसि न हि रुषां, नन्वहं मेघनादः!

---

## सङ्केतः

बहुवचने 'हाकः'[1] इति आकारस्य इत्वम्। सौमित्रे! इति मातृतनयत्वेन अवीरत्वं ख्याप्यते। वीरत्वादिर्हि पितुर्धर्मः, कौलीन्यादिकं च मातुरिति। मेघनादः इति। अत्र मेघनादे वक्तरि मेघनादः इत्यनुपयुज्यमानत्वात् बाधितस्वार्थः[2] स्ववाच्यभूतार्थगामित्वरूपात् सम्बन्धात् इन्द्रजेतृत्वस्वर्गपुर्यवस्कन्ददातृत्वाद्यर्थान्तरं लक्षयत् अनन्यसामान्यविक्रमादिकं ध्वनयति। इयं शुद्धा सारोगा लक्षणा, सादृश्यव्यतिरिक्तसम्बन्धान्तरजत्वात्; अरोप्यस्य मेघनादशब्दस्य, आरोपविषयस्य अहंशब्दाभिधेयस्य च उक्तत्वात्। अत्र मेघनादरूपं वाच्यं स्वपरत्वेन अनुपात्तम्, व्यङ्ग्यार्थान्तरपरिणतत्वात्। तस्मात् अविवक्षितमेव वाच्यं, नात्यन्ततिरस्कृतम्। व्यङ्ग्यार्थाधारेण तस्याप्युपयुक्तत्वात्। यदि वा—शुद्धसाध्यवसानाऽपि लक्षणा स्यात्। तथाहि—अत्र आरोपविषयः शक्रजेतृत्वादिरर्थः आरोप्येण मेघनादार्थेन विषयिणा निगीर्णः इति। एतच्च व्याख्यानं युक्तमिव भाति। यतः—यत्र लक्ष्यलक्षणयोः विषयविषयिभावेन ताटस्थ्यं स्यात् तत्र सारोपत्वम्। पूर्वव्याख्याने तु—न हि मेघनादेन अहंभावो लक्ष्यते, किन्तु शक्रजेतृत्वादि इति। अर्थान्तरं च लक्ष्यं कार्यं, यत्र वाच्यं परिणम्यते, न पुनर्व्यङ्ग्यम्।

---

1 (हैम. श. ४-२-१००). 2 'स्वार्थं'-ग.

किञ्चिद्भ्रूभङ्ग[1]लीलानियमितजलधिं राममन्वेषयामि[2] ॥४१॥

(भयानकरसः)—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्त[3]दृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम् ।

---

### सङ्केतः

**किञ्चित्संरम्भया लीलया** क्रीडया बद्धाब्धिं, रमते—क्रीडति इति व्युत्पत्त्या अन्वितनामानं **रामं अन्वेषयामि** इति ॥

**अनुपतति** पृष्ठानुपातिनि **स्यन्दने** रथे ॥

### मधुमती

उद्दीपनम् । वानरादिपरित्यागेन **रामान्वेषणं** अनुभावः । हर्षादयः व्यभिचारिणः ॥

**ग्रीवाभङ्गेति** । अत्र **स्यन्दनं** आलम्बनम् । **शरपतनोन्मुखत्वं** उद्दीपनम् । **ग्रीवाभङ्गादयः** अनुभावाः । शङ्कात्रासादयः व्यभिचारिणः । **भयात्** इत्यत्र भयशब्दः त्रासवाची ॥ अत्र **विवृतमुखत्वं पूर्वकायप्रवेशश्च**

---

1 'किञ्चित्संरम्भ'–क. 2 'रावणपुत्रस्य इन्द्रजितो वचनमिदम् । पराक्रमगन्धानभिज्ञाः हे कपयः! एनं भयं मुञ्चत । यतः—भिन्नैरावतकुम्भाः मदीयाः शराः भवदङ्गेषु पतमानाश्चेत् लज्जां वहेयुः । अयि सुमित्रापुत्र! त्वं परं निर्भयमास्स्व । त्वं हि मम रुषां न पात्रमसि । यतः अहं मेघनादोऽस्मि । किन्तु अहं शूरमानी भ्रूभङ्गरूपलीलयैव वशीकृतसागरं रामं किञ्चिदन्वेषयामि ॥ अत्र वीरो रसः । रामः आलम्बनम् । जलधिनियमनं उद्दीपनम् । रामान्वेषणादिः अनुभावः । तदनुमितगर्वादिः व्यभिचारी । उत्साहः स्थायी ॥ (हनुमन्नाटके—११-२-)
3 'बद्ध'–क.

दर्भैः अर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा-
पश्योदग्रप्लुतत्वात्[1] वियति बहुतरं स्तोकं उर्व्यां प्रयाति[2]॥४२॥

(बीभत्सरसः)—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेध[3]भूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्या[4]द्यवयवसुलभान्युग्रपूतीनि[5] जग्ध्वा ।

---

## सङ्केतः

उत्कृत्येति । अथ इति सामस्त्ये चार्थे वा ।

## मधुमती

निमित्तान्तरतोऽपि भवतीति झटित्यप्रतीत्या चमत्कारानुपपत्त्यापत्तेः व्यभिचारिणोरपि त्रासश्रमयोः स्वशब्देनाभिधानम्—

"औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया" [6] इत्यादाविवेति ज्ञेयम् ॥

उत्कृत्येति । स्थपुटं विषमम् । अव्यग्रं केवलम् । 'पीडाद्यवयवे'ति क्वचित् पाठः । स तु युक्तः । अत्र शवशरीरं आलम्बनम् ।

---

1 'प्लुतित्वात्'–ख. 2 मृगहननाय धावितरथस्य दुष्यन्तस्य सूतं प्रति वचनमिदम् । पश्चादागच्छति रथे ग्रीवाविवलनेन अभिरामं यथा तथा मुहुः दत्तदृष्टिः, शरः पततीति भयात् पश्चाद्भागं सर्वं आधिक्येन पूर्वकायप्रविष्टं कुर्वन्, अर्धचर्वितैः श्रमविवृतात् मुखात् भ्रश्यद्भिः दर्भैः कीर्णसरणिः अयं मृगः समधिकप्लुतिमत्तया नभसि अधिकं प्रयाति, भूमौ तु अल्पमेव प्रयाति । इति ॥ अत्र स्यन्दनः आलम्बनम् । तदनुपतनं उद्दीपनम् । पूर्वकायप्रवेशादयः अनुभावाः । तदनुमितशङ्कात्रासादयः व्यभिचारिणः । भयं स्थायि । (अभिज्ञानशाकुन्तले १-७). 3 'पृथूच्छोफ'–क. 4 'पिण्डा'–क. 5 'न्युग्रगन्धीनि'–ख.
6 (का. प्र. उदा. ३२०).

आर्तः पर्यस्तनेत्रः प्रकटितदशनः[1] प्रेतरङ्कः करङ्कात्
अङ्कस्थात् अस्थिसंस्थं[2] स्थपुटगतमपि क्रव्यमव्यग्रमत्ति[3]॥४३॥

(अद्भुतरसः)—

चित्रं! महानेष बतावतारः[4]
क्व कान्तिरेषा ऽभिनवैव भङ्गिः।

---

## सङ्केतः

स्थपुटगतं विषमस्थान[5]स्थमपि॥

## मधुमती

कृन्तनादिः उद्दीपनम्। मांसविकर्तनादयः[6] अनुभावाः। ग्लान्यादयः व्यभिचारिणः॥

**चित्रमिति।** अत्र महान् अवतारः इत्यादिकं निर्दिश्य, पश्चात् चित्रं इति योज्यम्। अत्र पुरुषविशेषः आलम्बनम्। निर्विकारत्वादिः उद्दीपनम्। नेत्रविकासादयः[7] अनुभावाः। हर्षादयोऽनुभावाः॥

---

1 'आत्तस्फाटवक्त्रनेत्रः पृथुतरजठरः'—ख. 2 'अस्थिशेषं'—क. 3 श्मशानगतशवभोजिनं प्रेतविशेषं दृष्ट्वा माधवस्योक्तिरियम्। प्रथमं शवस्य चर्म उत्पाट्योत्पाट्य, ततः दुःसहदुर्गन्धानि अंसयोः ऊरुसन्धिप्रदेशयोः पृष्ठपीठाद्यवयवेषु च सुलभानि महान्ति उपचयभूयिष्ठानि मांसानि भक्षयित्वा, अथापि क्षुत्पीडितः, परितः क्षिप्तनेत्रः, प्रकटितदन्तः अयं हीनप्रेतः स्वोत्सङ्गस्थात् अस्थिमात्रावशेषात् शवशरीरात् अस्थिसंधिषु निम्नोन्नततया स्थितं मांसशेषमपि शनैश्शनैः भक्षयति। इति॥ अत्र बीभत्सरसः। प्रेतरङ्कः आलम्बनम्। मांसोत्कृन्तनादिकं उद्दीपनम्। तदवलोकयितुः माधवस्य मुखविकारादिः अनुभावः। तदनुमिताः त्रासादयः व्यभिचारिणः। जुगुप्सा स्थायिनी॥ (मालतीमाधवे ५-१६). 4 'तवावतारः'—क. 'बताविकारः'—ख. 5 'विषस्थान'—व. 6 'विकसनादयः'—च. 7 'विकारादयः'—ज.

लोकोत्तरं धैर्यं अहो प्रभावः !
काऽप्याकृतिः नूतन एष सर्गः[1] ॥ ४४ ॥

---

## सङ्केतः

तत्र—एते अष्टौ रसाः सुखप्रधानाः, स्वसंविच्चर्वणरूपस्य एकघनस्य प्रकाशस्य[2] प्रीतिसारत्वात् । तथाहि—एकघनशोकसंविच्चर्वणेऽपि लोकस्य[3] हृदयविश्रान्तिः । अन्तरायशून्यविश्रान्तिशरीरत्वात् । अविश्रान्तिरूपतैव च दुःखम् । अत एव कापिलाः रजोवृत्तितां वदन्तः दुःखस्य चाञ्चल्यमेव प्राणाः इत्याहुः । तस्मात् आनन्दरूपाः[4] सर्वे रसाः, किन्तु उपरञ्जक-विषयवशात् केषामपि कटुता[5]स्पर्शोऽपि, वीरस्येव । स हि क्लेशसहनादि-प्राण एवेति ॥ २९ ॥

## मधुमती

एषु रसचर्वणस्य अनुभवसिद्धत्वात् अनुपात्तानामपि आक्षेपादुपस्थितिः । सात्त्विकानामपि अनुभावविशेषतया अस्य मते[6] तत्त्वेनैवोपयोगः इति पृथक् न दर्शिताः[7] ॥

---

1 'एव सर्गः'-ख. वामनमुद्दिश्य बलेरियमुक्तिः । युद्धसंनद्धं कुशमवेक्ष्य रामस्य वचनमिदमिति केचित् । एष बालोऽपि महानिव भाति । आश्चर्यम्! अयं अवतारपुरुष एव वा स्यात् । अस्यैषा कान्तिः कुत आगता ? एषा भङ्गयवस्थितिस्तु अननुभूतपूर्वा । अस्य धैर्यं तु लोकोत्तरम् । आश्चर्यकरः प्रभावः । अत्याश्चर्यंकरः वाङ्मनसातीतः अवयवसंस्थानविशेषः । तस्मात् अस्य एतादृशी सृष्टिः लोकसृष्टि-विलक्षणैवेति मन्ये इति ॥ अत्र कुशादिः आलम्बनम् । तदीयमहत्त्वादयः उद्दीपनम् । तदवलोकनजनितनेत्रविकासादयः अनुभावाः । तदनुमितहर्षादयः व्यभिचारिणः । विस्मयः स्थायी ॥ 2 'प्रकाशस्य' इति नास्ति-ग. 3 'लोके स्त्रीलोकस्य-घ. 4 'इत्यानन्दरूपाः'-ग. 5 'कटुकिन्ना'-घ. 6 'स्वमते'=ज. 7 'निदर्शिताः'-च.

एषां स्थायिभावानाह—

**रतिः हासश्च शोकश्च**
**क्रोधोत्साहौ भयं तथा ।**
**जुगुप्सा विस्मयश्चेति[1]**
**स्थायिभावाः प्रकीर्तिताः[2] ॥ ३० ॥**

स्पष्टम् ॥ ३० ॥

---

## सङ्केतः

रतीत्यादि । अन्योन्यास्थाबन्धात्मिका **रतिः** । चित्तस्य विकासः **हासः** । वैधुर्यं **शोकः** । तैक्ष्ण्यप्रबोधः **क्रोधः** । स्थेयान् संरम्भः **उत्साहः** । वैक्लव्यं **भयम्** । सङ्कोचः **जुगुप्सा** । विस्तारः[3] **विस्मयः** ॥

## मधुमती

एषामिति—

'चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः ।
रसत्वं प्रतिपद्यन्ते प्रवृद्धाः स्थायिनस्तु ये ॥'[4] इति,
'विरुद्धैरविरुद्धैर्वा भावैः[5] विच्छिद्यते[6] न यः ।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥'

इति वा स्थायिसामान्यलक्षणम् ॥ विरुद्धैः=विजातीयैः व्यभिचार्यादिभिः ।

---

1 'श्चाष्टौ'–क. 2 (भरतनाट्यशास्त्रे–६). 3 'विस्तरः'–ग. 4 ये चित्ते चिरं वासनात्मतया अवतिष्ठन्ते, अनुबन्धिभिः विभावादिभिः सम्बध्यन्ते, ततः प्रवृद्धाः सन्तः रसत्वं प्रतिपद्यन्ते, ते स्थायिनः इत्युच्यन्ते इत्यर्थः । 5 वर्णनीयमयीभवनयोग्यव्यापारविषयत्वं भावत्वम् । 6 'भावैर्वा भिद्यते'–च.

## सङ्केतः

तत्र—एषां विभावानुभावव्यभिचारिणः कथ्यन्ते—

(१) मिथः स्त्रीपुंसालम्बन[1]रूप—तदुपयोगिपवना[2]रामचन्द्रार्कोदयास्तजलक्रीडाद्युद्दीपनरूपविभावा, सम्भोगे—सुखमय[3]हर्षादिव्यभिचारिणी, रोमाञ्चस्वेदाश्रुकम्पश्लथितकेशबन्धांशुकसंयमनभूषामाल्यादिसम्यङ्निवेशनचाटु—प्रभृत्यनुभावा, विप्रलम्भे तु—दुःखप्रायशङ्कौत्सुक्यमदग्लानिनिद्रानिर्वेदमरणादिव्यभिचारिणी, सन्तापजागरकृशताविलापदीनवचनलेखनवाचनवार्ताप्रश्नमरणोद्यमसन्देशाद्यनुभावा रतिः जुगुप्साऽलस्यौग्र्यवर्जिता शृङ्गारः ॥

स्थायी चर्वणतां गतः रसः स्यात्—इति तु सर्वत्र विज्ञेयम् ॥

यद्यपि रतिश्रमकृतं निद्रादि सम्भोगेऽप्यस्ति। तथापि तत् रतौ चित्रतां आधत्ते। विप्रलम्भे तु तत रतिभावनापरम्परोदितमेवेति युक्तमेवात्र सुखमयत्वम्। विप्रलम्भे च मरणं अचिरकालप्रत्यापत्तिमयं इष्टम्, येन न शोकावेशः[4]। अथवा—चैतन्यावस्थितैव[5] प्राणत्यागकर्तृताऽऽत्मिका पूर्वक्रियैव पाशबन्धाद्यवसरगता मन्तव्या, न तु प्राणत्यागः। तथा—विप्रलम्भे उन्मादापस्मारव्याधीनां या नात्यन्तं कुत्सिता दशा, सा काव्ये नाट्ये च

## मधुमती

अविरुद्धैः=सजातीयैः स्थाय्यन्तरैः[6] ॥ अत एव (मालतीमाधवे श्मशानाङ्के) कन्यारत्नार्थितया महामांसविक्रयप्रसङ्गेन श्मशानवाटं गतस्य माधवस्य प्रेतरङ्कादिदर्शनेन समुद्भूता जुगुप्साऽपि रतिमेव पुष्णाति। अन्यान्—विभावादीन्। आत्मभावं—आत्मना सह आस्वादविषयताम् ॥

---

1 'पुंसावलम्बन'–ग. 2 'ग्युपवनपवना'–घ. 3 'सुखप्राय'–ग
4 'शोकावकाशः'–ग. 5 'वस्थैव'–घ. 6 'विरुद्धैः स्थाय्यन्तरैः, अविरुद्धैः व्यभिचारिभिर्वा'–ज.

## सङ्केतः

दर्शनीया । यदि वा—तादृश्यां दशायां स्वजीवितनिन्दात्मिकायां तद्देहोपभोगसाररत्यात्मकावस्थः[1] बन्धादिः विच्छिद्यते एवेति कुत्सितदशायाः असम्भव एव ॥

(२) विकृतकेशबन्धवेषनर्तनगत्यनुकरणभूषणन्यासोद्घट्टनादि **विभावः**, नासौष्ठकपोलस्पन्दननेत्रविकास[2]मुखरागपार्श्वग्रहणाद्य**नुभावः**, त्रपाऽवहित्थनिद्राऽऽलस्यादि[3]**व्यभिचारी हासः हास्यः** ॥

सः उत्तममध्यमाधमेषु स्मितविहसितापहसितैः त्रेधा[4]। तत्र[5]—कपोलोल्लासमात्रं अदृश्यदन्तं **स्मितम्**। मधुरस्वनं[6] सास्यरागं कालागतं **विहसितम्**। निर्हेतुकं साश्रुनेत्रं कम्पितांसशिरस्कं **अपहसितम्**। एतेषां स्मितादीनां क्रमेण सङ्क्रमजैः[7] हसितोपहसितातिहसितैः परस्थमपि त्रेधा । उपहसितातिहसितयोः उपसर्गभेदेन अर्थभेदः । तत्र—उत्फुल्लास्यनेत्रं विकासिगण्डं किञ्चिद्दृश्यदन्तं **हसितम्**। उत्फुल्लनासं विजिह्मदृष्टि[8]निरीक्षणं

## मधुमती

विशेषलक्षणानि तु—मनोऽनुकूलार्थविषयकसुखात्मकसंवेदनं **रतिः**। विकृतवाग्वेषादिविषयकं ज्ञानं **हासः**। अनौचित्येन इष्टवियोगे सति पुनः तत्प्राप्त्यशक्यतानिश्चयः **शोकः**। अपकारित्वेन प्रतिकूलज्ञानं **क्रोधः**।

---

1 'रत्यात्मकस्था'–घ. 2 'विकाश'–घ. 3 'निद्रादि'–ग. 4 'त्रिधा'–ग.
5 अत्र—'ईषद्विकसितैः गण्डैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥ आकुञ्चिताक्षिगण्डं यत् सस्वनं मधुरं तथा । कालागतं सास्यरागं तद्वै विहसितं भवेत् ॥ अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च । उत्कम्पितांसकशिरःतच्चापहसितं भवेत् ॥' इत्यादिभरतमुनिवाक्यानि अनुसन्धेयानि । 6 'मधुरं सस्वनं'–ग. 7 'सङ्क्रमणजैः'–घ. 8 'दृष्टि' इति नास्ति–ग.

## सङ्केतः

निकुञ्चितांसशिरस्कं **उपहसितम्** । ससंरम्भाश्रुनेत्रं[1] उद्धतं सशब्दं सकराघातं **अतिहसितम्** ॥

**अयं भावः**—परं हसन्तं दृष्ट्वा स्वयं विभावान् अपश्यन्नपि हसन् लोके दृष्टः । तथा विभावदर्शनेऽपि गाम्भीर्यात् कोऽपि न हसति, परहासेक्षणे च तत्क्षणं हसति । यथा अम्लदाडिमादिरसास्वादः अन्यत्रापि दन्तोदकविकारानुरूपदर्शनात् सङ्क्रमणस्वभावः तथा हासोऽपि सङ्क्रामति । न त्वन्ये रसाः । यस्तु स्वामिशोकात् भृत्यस्य शोकः सः अन्य एव शोकवत्स्वामिविभावकः, विभावभेदात् । इह च तद्विभावक एव हासः सङ्क्रामतीत्यर्थः ॥

(३) इष्टानिष्टवियोगसंयोगविभावः, निश्वासमुखशोषाश्रुपातभूलुठ[2]नाक्रन्दाद्यनुभावः, निर्वेददैन्यविषादमरणादिव्यभिचारी **शोकः करुणः** ॥

(४) दारापहारदेशजातिविद्यानिन्दाऽऽक्रोशादिविभावः, नेत्ररागभ्रुकुटीकरणदन्तौष्ठग्रहणाद्यनुभावः, औग्र्यावेगामर्षादिव्यभिचारी **क्रोधः रौद्रः** ॥

## मधुमती

'मयेदं कार्यम्' इत्यध्यवसायः **उत्साहः** । भयहेतूपनिपाते तत्परिहारानर्हणज्ञानं **भयम्** । सदोषपदार्थगोचरं निन्द्यत्वप्रकारं ज्ञानं **जुगुप्सा** । लोकसीमाऽतिक्रान्तत्वेन ज्ञानं **विस्मयः** इति ॥

**यदि तु** एक एव स्थायी इति पक्षः, तदा—तत्तद्[3]ज्ञानोपनीताः तद्विषयाः यदा तत्तद्[4]ज्ञानाभिव्यक्ते स्थायिनि भासन्ते, तदा रत्यादिसंज्ञां स्थायी तत्तदाकारेण परिणतः लभते इति लभ्यत इति नानुपपत्तिः ॥ **न च** विषयभानात् पूर्वं स्थायिनः ज्ञानस्य निर्विषयत्वापत्तिः, स्वविषयत्वाङ्गीकारात् । विषयानुप-

---

1 'म्भसाश्रुनेत्र–घ. 2 'भूलुण्ठ'–ग. 3 'तत्र'–च. 4 'तत्त्व'–ज.

## सङ्केतः

(५) विपक्षगत[1]नयासंमोहाध्यवसायप्रतापविक्रमाधिक्षेपादिविभावः, स्थैर्यधैर्यगाम्भीर्यत्यागाद्यनुभावः, धृतिस्मृतिगर्वामर्षादिव्यभिचारी, उत्साहः वीरः ॥

स च त्रेधा—धर्मदानयुद्धभेदात्[2]। धर्मादित्रयं तु विपक्षगतं सत् विभावरूपं स्यात्, स्वपक्षगतं तु अनुभावरूपम्। इह च विपत्पङ्कनिमग्नता-स्वल्पसन्तोषमिथ्याज्ञानानि अपास्य, यः तत्त्वनिर्णयरूपः असंमोहाध्यवसायः स एव उत्साहहेतुः प्राधान्येन। रौद्रे तु ममताप्राधान्यात् अशास्त्रितानुचित-युद्धाद्यपीति मोहविस्मयप्राधान्यं इति विवेकः ॥

(६) पिशाचादिविकृतस्वरश्रुतितद्दृष्टिशून्यगृहारण्यगमनादिविभावं, करहृत्पादकम्पमुखशोष[3]मालिन्याद्यनुभावं, शङ्कादैन्यादिव्यभिचारि स्त्रीनीचादीनां सहजं उत्तमानां कृतकं च भयं भयानकः। उत्तमाः हि भयाभावेऽपि गुरुराजादिभ्यः भयं दर्शयन्तः सुतरां उत्तमाः स्युः। प्रभुभक्तिश्च सचिवादीनाम्। यथा—स्वेच्छाचारी भीत एवास्मीति ॥

ननु—राजादयः किमिति गुर्वादिभ्यः कृतकं भयं दर्शयन्तः मृदून् करकम्पादीन् दर्शयन्ति? किमिति च भय एव कृतकत्वम्? सर्वस्य हि कृतकत्वं सम्भवति, यथा—वेश्या अर्थिनां[4] कृतकां रतिं स्पष्टयति।

## मधुमती

रक्तत्वेन सूक्ष्मः परं न प्रकाशते इत्यन्यदेतत्। न च स्थायिनः एकत्वे[5] रसभेदानुपपत्तिः। तदापि[6] रस्यमानत्वात्। न हि स्थायिमात्रं रसः। अपि तु व्यक्तः। व्यक्तिश्च तत्तद्विभावादिज्ञानजनिततया नाना। तेन

---

1 'विपक्षागत'–घ. 2 दानवीरं धर्मवीरं युद्धवीरं तथैव च। रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि॥ इति भरतः। 3 'शोष' इति नास्ति–ग. 4 'विकल्पे'–च. 5 'तथापि'–ज. 6 'अर्थिनीं'–घ.

## सङ्केतः

उच्यते—भये[1] हि दर्शिते गुरुः विनीतं मन्यते । मृदुचेष्टया च नाधमप्रकृतिं एनं गणयति । कृतकरत्यादेश्च उपदिष्टात् न किञ्चित् फलम् । यत्र तु राजा परानुग्रहाय क्रोधविस्मयादीन् दर्शयति, तत्र व्यभिचारितैव तेषाम्, न तु स्थायितेति ॥

(७) वमनव्रणपूतिविष्ठाकृमिकीटादिदर्शनश्रवणादिविभावा, गात्रसङ्कोचहल्लासनासाविकूणनपिधानथूत्काराद्यनुभावा, मोहापस्मारौग्र्यादिव्यभिचारिणी जुगुप्सा बीभत्सः ॥

(८) दिव्यविमानमायेन्द्रजालावदातकर्मेप्सितावाप्तिप्रभृतिविभावः, निर्निमेषाक्षिविकासरोमाञ्चप्रीत्यश्रुसाधुवादप्रसाददानाद्यनुभावः हर्षावेगजाड्यादिव्यभिचारी विस्मयः अद्भुतः ॥

यद्वा— लोकोत्तरवाचिकाद्यभिनयैः चित्तवृत्तय एव भावयन्ति—लोकदशायामनास्वाद्यमपि आस्वाद्यं स्वी[2]कुर्वन्ति इति भावाः स्थायिनः व्यभिचारिणश्च । जात एव हि जन्तुः अष्टाभिः[3] संविद्भिः युज्यते । तथाहि— दुःखद्वेषी सुखलुब्धः सर्वोऽपि रिरंसते, हसति, शङ्कया शोचति, परस्मै कुप्यति, हिताय उत्सहते, बिभेति, परं जुगुप्सते, तत्तत्स्व[4]परकर्तव्यवैचित्र्यदर्शनात् विस्मयते च । केवलं कस्यचित् काचिदधिका चित्तवृत्तिः, काचिदूना । कस्यचित् उचितविषयनियन्त्रिता, कस्याप्यन्यथा । तत् काचि-

## मधुमती

रसोऽपि नाना भवत्येव ॥ तथा हि—यथा सुवर्णत्वाविशेषेऽपि कटकमुकुटयोः तद्विकारयोः भेदः, तथा स्थायित्वाविशेषेऽपि व्यक्तीनां तद्विकाराणां भेद एव । तस्मात् रसानां एकजातीयत्वं, न तु एकत्वम् । अत एव—रसभेदायत्त-

1 'नये'–ग. 2 'मथास्वाद्यं स्वं'–घ. 3 'जन्तुरष्याभिः'–ग. 4 'ततश्च स्व'–घ.

## सङ्केतः

देव उपयोगिनी इति उपदेश्या । तद्विभागकृतश्च उत्तमादिव्यवहारः ॥

ये त्वमी व्यभिचारिणः—ते रसायनं उपयुक्तवतः ग्लान्यालस्यश्रमप्रभृतयः जन्ममध्ये न भवन्त्येव । यस्यापि वा विभावबलात् भवन्ति, तस्यापि हि हेतुक्षये क्षीयमाणाः संस्कारशेषतां नावश्यं अनुबध्नन्ति । रत्यादयस्तु कृतस्वकर्तव्यतया प्रलीनकल्पाः अपि[1] संस्कारशेषतां नातिवर्तन्ते । वस्त्वन्तरविषयस्य रत्यादेः अनुच्छेदात् ॥

तस्मात्—स्थायिभावरूपचित्तवृत्ति[2]सूत्रस्यूताः एव अमी स्वं उदयास्तमयवैचित्र्यशतसहस्रधर्माणं लभमानाः, स्थायिनं विचित्रयन्तः भान्तीति व्यभिचारिणः । तथाहि[3]—ग्लानोऽयं इत्युक्ते, 'कुतः ?' इति हेतुप्रश्नेन अस्थायिता अस्य सूच्यते । न तु 'रामः उत्साहशक्तिमान्' इत्यत्र हेतुप्रश्नमाहुः । अत एव—विभावाः तत्र उद्बोधकाः सन्तः, स्वरूपोपरञ्जकत्वं कुर्वाणाः रत्युत्साहादेः उचितानुचितत्वं आवहन्ति, न तु ते । तदभावे स्थायिनः सर्वथैव निरुपाख्याः ; वासनात्मतया तेषां स्थितत्वात् । व्यभिचारिणां स्वविभावाभावे नामापि न स्यात् । तथा एषां विभावबहुत्वे स्थायित्वम्, तदल्पे तु व्यभिचारित्वम् । यथा—रावणादौ मिथः प्रतीत्यभावात् रतिः व्यभिचारिणी, तथा गुर्वादिषु च वीरशृङ्गारादौ रोषो व्यभिचार्येव ॥ एवं भावान्तरेष्वपि वाच्यम् ॥ ३० ॥

## मधुमती

वृत्तिभेदनायकभेदप्रतिनियतकष्टत्वादिदोषादयोऽपि तत्र तत्र उपपद्यन्ते इति । एतेन—'वीरादिषु रसप्रसिद्धिः घटपक्षप्रसिद्धिवत् अप्रामाणिकी' इति शृङ्गारप्रकाशे महाराजाभिधानं अपास्तम् ॥ ३० ॥

---

1 'प्रलीनकल्पा अपि' इति नास्ति–घ. 2 'चित्तवृत्ति' इति नास्ति–ग. 3 'तथाहि' इति नास्ति–ग.

अथ व्यभिचारिणो ब्रूते—

**निर्वेदग्लानिशङ्काख्या-**
**स्तथाऽसूयामदश्रमाः ।**

---

सङ्केतः

**निर्वेदः** स्वावज्ञा । **ग्लानिः** बलापचयः । **शङ्का** अनिष्टोत्प्रेक्षा । **असूया** अक्षमा । **मदः** प्रीतिसंमोहसंभेदः । **खेदः श्रमः** ।

मधुमती

**निर्वेदेत्यादि** ॥

विशेषेणाभितः काये स्थायिनं बालयन्ति[1] ये ।
अनुभावादिहेतूंस्तान् वदन्ति **व्यभिचारिणः** ॥

इति व्यभिचारिसामान्यलक्षणम् । बालयन्ति—सम्यगभिव्यञ्जयन्ति ।

विशेषलक्षणानि तु—

तत्त्वज्ञानापदीर्ष्यादेः[2] **निर्वेदः** स्वावमाननम्[3] ।
बलस्यापचयः **ग्लानिः** आधिव्याधिसमुद्भवः ॥

अनिष्टाभ्यागमोत्प्रेक्षां **शङ्कां** आचक्षते बुधाः ।
परोत्कर्षाक्षमाऽसूया गर्व[4]दौर्जन्यमन्युना ॥

संमोहानन्दसंभेदः मदिरादिकृतो **मदः** ।
मनश्शरीरयोः खेदः क्रियाऽतिशयजः **श्रमः** ॥

---

1 'चारयन्ति' च 'ज्ञापयन्ति'–ज. 2 'नवदीर्ष्यादेः'–ज. 3 'सावमाननम्'–ज. 4 'गर्वो'–ज.

**आलस्यं चैव दैन्यं च**
**चिन्ता मोहः स्मृतिः धृतिः[1] ॥ ३१ ॥**
**व्रीडा चपलता हर्षः**
**आवेगो जडता तथा ।**

---

### सङ्केतः

**कार्येष्वनादरः आलस्यम् । दैन्यं** अनौजस्यम् । **चिन्ता** ध्यानम् । **मोहः** मूढता । **स्मृतिः** स्मरणम् । **धृतिः** सन्तोषः ॥ ३१ ॥ **व्रीडा** मनस्सङ्कोचः । **चपलता** चेतोऽनवस्था । **हर्षः** चित्तप्रसत्तिः । **आवेगः** सम्भ्रमः । **जडता**

### मधुमती

क्रियाविद्वेष **आलस्यं** सुखसंविन्मदादिभिः ।
सत्त्वत्यागादनुत्कर्षः वाक्यादेः **दैन्य**मुच्यते ॥
प्रयत्नपूर्विकाऽर्थेषु स्मृतिः **चिन्ते**ति कथ्यते ।
सुखदुःखादिजनितः **मोहः** चित्तस्य मूढता ॥
**स्मृतिः** पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ।
अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्याप्तता **धृतिः** ॥
चेतोनिमीलनं **व्रीडा** स्तुत्यकार्यक्रियादिभिः ।
आत्मप्रकाशनपरा चेष्टा **चपलतो**च्यते ॥
मनःप्रमोदो **हर्षः** स्यात् इष्टावाप्तिस्तवादिभिः ।
आदरातिशयाच्चेतस्या[2]**वेगः** सम्भ्रमो मतः ॥
क्रियास्वपाटवं **जाड्यं** चिन्तोत्कण्ठाभयादिभिः ।

---

1 'धृतिः स्मृतिः'–क. 2 'च्चित्तस्या'–च.

गर्वो विषादः औत्सुक्यं
निद्राऽपस्मारः एव च[1] ॥ ३२ ॥
सुप्तं[2] प्रबोधो[3]ऽमर्षश्चा-
प्यवहित्थमथोग्रता ।

---

सङ्केतः

अर्थप्रतिपत्तिः । गर्वः परावज्ञा । विषादः चित्तपीडा । औत्सुक्यं विलम्बाक्षमत्वम् । निद्रा मनस्संमीलनम् । अपस्मारः आवेशः ॥ ३२ ॥ सुप्तं निद्रागाढावस्था । प्रबोधः[4] विनिद्रता । अमर्षः प्रतिकर्तुमिच्छा । अवहित्थं आकारगोपनम् । उग्रता चण्डत्वम् ।

मधुमती

गर्वोऽन्येषां अवज्ञानं आत्मसम्भावनादिभिः ॥
विषादः चेतसो ग्लानिः उपायाभावनाशयोः ।
इष्टानवाप्तावौत्सुक्यं अभिलाषस्तदाप्तये ॥
निद्रा व्यापारवैमुख्यं इन्द्रियाणां श्रमादिभिः ।
आवेश[5]ग्रहदुःखाद्यैः अपस्मारः तथाविधः ॥
निद्रादिजनितं सुप्तं इन्द्रियाणां निमीलनम् ।
निद्रापगमहेतुभ्यः प्रबोधः चेतनागमः ॥
क्रोधः कृतापकारेषु स्थिरोऽमर्षत्वमश्नुते ।
अवहित्थं[6] तु लज्जादेः हर्षाद्याकारगोपनम् ॥
विदुः वाग्दण्डपारुष्यं उग्रतामपकारिषु ।

---

1 'निन्दा विस्मृतिरेव च'–ख. 2 'स्वप्नं'–ख. 3 'विबोधो'–क.
4 'विबोधः'–ग. 5 'आवेशः'–च. 6 'आवहित्थं'–ज.

मतिर्व्याधिः तथोन्मादः
तथा मरणमेव च[1] ॥३३॥
त्रासश्चैव वितर्कश्च
विज्ञेयाः व्यभिचारिणः ।

---

### सङ्केतः

**मतिः** अर्थनिर्णयः । **व्याधिः** मनस्तापः । **उन्मादः** मनोविप्लवः । **मरणं** म्रियमाणता ॥ ३३ ॥ **त्रासः** चित्तचमत्कारः । **वितर्कः** सम्भावनम् । **त्रयस्त्रिंशत्** इति नियमार्थम् । तेन अन्येऽप्यत्रैवान्तर्भवन्ति । तथाहि—**दम्भः** अवहित्थे । **उद्वेगः** निर्वेदे । **क्षुत्तृष्णादि** ग्लानौ इति ॥ **अन्ये तु**—एवमाहुः ।

### मधुमती

शास्त्रोक्तार्थानुसन्धानात् अर्थनिर्धारणं **मतिः** ॥
विरहादेः मनस्तापः शरीरातङ्कदो **गदः** ।
उत्कण्ठाहर्षशोकादेः **उन्मादः** चित्तविभ्रमः[2] ॥
**मरणं** मरणोद्योगः विरहादिभवो मतः ।
**त्रासः** चित्तचमत्कारः आकस्मिकभयादिभिः ॥
**ऊहो** वितर्क इत्युक्तः पदार्थेषु यथामति ॥

विभावलक्षणं तु—

बहवोऽर्थाः विभाव्यन्ते वागङ्गाभिनयात्मकाः ।
अनेन यस्मात् तेनायं **विभावः** इति कीर्तितः ॥ इति ॥

---

1 'करुण एव च'—ख. 2 'विप्लवः'—च.

त्रयस्त्रिंशदमी भावाः
समाख्यातास्तु नामतः[1] ॥३४॥

---

सङ्केतः

त्रयस्त्रिंशतैव स्थायी चर्वणयोग्यः स्यात् इति त्रयस्त्रिंशत् इत्युक्ताः[2] इति ॥ एषां विभावानुभावाः स्वयमूह्याः, न तु व्यभिचारिणः। एवं हि तदास्वादे रसान्तरमपि स्यात् ॥ यत्रापि व्यभिचारिणि व्यभिचार्यन्तरं स्यात्, यथा—पुरूरवसः उन्मादे वितर्कचिन्तादि, तत्रापि रतिस्थायिभावस्यैव[3] व्यभिचार्यन्तरयोगः। स वितर्कादिः केवलं उन्मादेन कृतोपरागः इति। एते च मिथः क्वापि विभावानुभावा भवन्ति। तथाहि—गर्वः अध्यात्मशास्त्रावेक्षणाद्यनुभावः आवेगजः[4] असूयाकृत् इत्यादि ॥

मधुमती

विभाव्यन्ते—ये हि लोके रामादिगतरतिभावानां अनुमापकाः सीतादयः, तैरेव काव्यनाट्य[5]निवेशितैः साधारण्येनोपस्थितैः सामाजिकरत्यादिभावाः आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते—इत्यर्थः ॥

अनुभावलक्षणं तु—

**अनुभावो** विकारस्तु भावसं[6]सूचनात्मकः।

इति। स्थायिव्यभिचारिसंसूचनात्मकः इत्यर्थः ॥

वृत्तिकृता तु—'अलौकिकविभावनादिव्यापारवत्त्वात्' इति वदता—विभावनानुभावनसञ्चारण[7]व्यापारवत्त्वं विभावानुभावव्यभिचारिलक्षणं कटाक्षितमेव। अतः कण्ठतो नोक्तमिति भाव्यम् ॥

---

1 (भरतनाट्यशास्त्रे ६-१८-२१). 2 'शदुक्ताः'-ग. 3 'रतिभावस्यैव'-घ. 4 'गर्वं आवेगजः'-ग. 5 'नाटक'-च. 6 'भावनं'-च. 7 'संचरण'-च.

निर्वेदस्य अमङ्गलप्रायस्य[1] प्रथमं अनुपादेयत्वेऽपि उपादानं, व्यभिचारित्वेऽपि स्थायित्वाऽभिधानार्थम्[2] ॥ ३४ ॥

तेन—

**निर्वेदस्थायिभावोऽस्ति[3]**
**शान्तोऽपि नवमो रसः[4] ॥**

---

## सङ्केतः

**निर्वेदस्येति ।** आदौ अस्य न्यासः, स्थायिनां अन्ते नैकट्येन सामीप्यार्थमित्यर्थः ॥ ३४ ॥

**तेनेति ।** तथा च—(९) वैराग्यतत्त्वज्ञानसर्वज्ञानुग्रहादिविभावः, यमनियमाध्यात्मशास्त्रेक्षणाद्यनुभावः, धृतिस्मृत्यादिव्यभिचारी निर्वेद-स्थायिभावः शान्तो रसः ॥ न च—अयं विषयजुगुप्सारूपत्वात् बीभत्से

## मधुमती

काव्ये शान्ताभावभ्रमं निवारयन्नाह—**निर्वेदस्येति ।** अलौकिकं सुखमयं रसमधिकृत्य प्रकृतशास्त्रप्रवृत्तेः, निर्विण्णस्य च तत्र अनधिकारः[5] इति, निर्वेदस्य अमङ्गलप्रायत्वं उक्तम् । **स्थायित्वाभिधानार्थमिति ।**

---

1 लोकतन्त्रात्मतन्त्ररूपव्यवहारद्वयमध्ये या दौर्गत्याऽऽपद्वियोगेर्ष्यादिनिमित्ता मनःक्लेश-शून्यचित्ततादिसंवलिता लोकतन्त्रानुगुणव्यवहारसामर्थ्यसम्पद्विघटनी स्वा-त्मावमानपर्यवसिता जीवने निष्फलतामतिः सैव अमङ्गलरूपो निर्वेदः । यस्तु नित्या-नित्यवस्तुविवेकादिसाधनचतुष्टयसम्पत्तिनिमित्तः तत्त्वज्ञानादिमूलः आत्मतन्त्रानुगुण-व्यवहारनिर्वाहानुगुणः विषयविरक्तिरूपो निर्वेदः शान्तरसस्थायिभावात्मा सः मङ्गल-मय एवेति भाव्यम् । अत एव अत्र प्रायशब्दो निर्दिष्टः । 2 तथाच अनेकरससाधारणं व्यभिचारित्वम्, शान्तरसासाधारणं स्थायित्वं च निर्वेदे समाविष्टमिति भावः । 3 'भावाख्यः'–क. 4 अत्रेदं भरतवाक्यमनुसन्धेयम्—"न यत्र दुःखं न सुखं न द्वेषो नापि मत्सरः । समः सर्वेषु भावेषु स शान्तः कथितो रसः ॥ भावा: विकाराः रत्याद्याः शान्तस्तु प्रकृतिर्मतः । विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते ॥ स्वं स्वं निमित्त-मासाद्य शान्तात् भावः प्रवर्तते । पुनर्निमित्तापाये तु शान्त एवोपलीयते । एवं नव रसाः दृष्टा तत्त्वज्ञैः लक्षणान्विताः ॥" इति ॥ 5 'अधिकारः'–ज.

यथा—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।

---

## सङ्केतः

अन्तर्भावयितुं युक्तः । विषयजुगुप्सा[1] ह्यस्य व्यभिचारिणी, न तु स्थायिता-मेति । तस्या निर्वाहे मूलोच्छेदात् । न च धर्मवीरे[2] । 'अहं एवंविधः' इत्येवं प्राणोत्साहरूपतया तस्य गर्वमयत्वेन व्यवस्थानात्, अस्य च गर्व-प्रशमैकरूपत्वात् । ईहामयत्वनिरीहत्वाभ्यां विरुद्धयोरपि तयोः ऐक्ये, क्रमेण[3] कामार्थधर्मार्जनोपयोगेन तुल्यरूपत्वात्, अविरुद्धयोरपि रौद्रवीरयोः ऐक्य-प्रसङ्गः । धर्मवीरादीनां चित्तवृत्तीनां सर्वथा निरहङ्कारत्वे शान्तरसः,[4] इतरथा तु वीररसः,[5] इति व्यवस्थायां तु न कश्चिद्दोषः ॥

तस्मात्— यथा[6] धर्मार्थकामेषु योग्याः रत्यादिचित्तवृत्तयः कवि-नटव्यापारेण आस्वाद्यतां नीताः तादृशहृदयसंवादवतः सभ्यान् प्रति रसत्वं यान्ति, तथा मोक्षाख्यपरमार्थोचिताऽपि निर्वेदरूपा चित्तवृत्तिः रसतां याति

## मधुमती

स्थायिप्रकरणानुद्दिष्टस्येति शेषः । **तेन**—क्रोधरूपामर्षस्य स्थायित्वेऽपि न कथं प्रथमाभिधानम्? इति निरस्तम् । तस्य स्थायिप्रकरणे एव उद्देशात् ॥

**इदमुपलक्षणम्**—अन्येऽपि स्थायिनः रसान्तरेषु उपादीयमानाः व्यभि-चारितां भजन्ते इति । इयान् विशेषः—यत्—निर्वेदस्य व्यभिचारितया

---

1 'बीभत्सः जुगुप्सा'–ग. 2 'धर्मवीरः'–ग. 3 'ऐक्यक्रमेण'–ग.
4 'रसभेदत्वं'–ग. 5 'रसभेदत्वं–ग. 6 'तथा यथा'–घ.

तृणे वा स्त्रैणे वा मम समदृशो यान्ति[1] दिवसाः
क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः[2] ॥ ४५ ॥

---

## सङ्केतः

इति । तथाच—अस्य निर्वेदस्थायिनः लौकिकरत्यादिलोकोत्तरशृङ्गाररूपा चित्तवृत्तिः सर्वाऽपि व्यभिचारिणी, तदनुभावा एव च यमनियमाद्युपकृताः अनुभावाः विभावा अपि सर्वज्ञाद्यनुग्राह्याः । प्रक्षयोन्मुखाश्च[3] रत्यादयः अत्र आस्वाद्यन्ते[4] । परं—यथा विप्रलम्भे औत्सुक्यं, सम्भोगेऽपि वा प्रेम असमाप्तोत्सवमिति, यथा च रौद्रवीरभयानकाद्भुतेषु क्रमेण औग्र्यधृतित्रासहर्षाः व्यभिचारिणोऽपि प्राधान्येन भान्ति, तथा शान्ते जुगुप्साद्याः[5] । सर्वथा रागविपक्षत्वात् । स्वात्मनि कृतकृत्यस्य परार्थ एवोद्यमः इति, उत्साहः अस्य परोपचिकीर्षाप्रयत्नरूपः दयाऽपरपर्यायः अभ्यधिकः अन्तरङ्गः । अत एव अन्ये दयाधर्मवीरत्वाभ्यां एनं ऊचुः ॥

## मधुमती

प्रसिद्धिः, अन्येषां[6] तु स्थायितया । स्थायिनश्च सर्वे एव व्यभिचारिणः, व्यभिचारिणश्च सर्वे न तथा, इत्यपरो विशेषः । तदिदं वक्ष्यति—'समाख्या-तास्तु नामतः' । इति ॥

---

1 'यान्तु'–ख. 2 कस्यचिदात्मनो जीवन्मुक्त्यवस्थावर्णनमिदम्—भुजङ्ग-हारयोः पुष्पास्तरणशिलातलयोः रत्न-मृत्खण्डयोः बलिष्ठरिपु-सुहृदोः तृण-स्त्रीसमूहयोश्च 'इदमुपादेयं इदमनुपादेयम्' इति विषमभावरहितस्य मम सर्वेऽपि दिवसाः परमप्रशान्ते क्वचित् तपोवने निरन्तरं शिवशिवेति भगवन्नामसङ्कीर्तनेनैव व्यतीताः भवन्तीत्यर्थः ॥ (उत्पलराजस्य पद्यमिदम्) । 3 'प्रत्यङ्मुखाश्च'–ग. 4 'अत्र स्वाद्यन्ते'–घ. 5 'जुगुप्साः'–ग. 6 'अमीषां'–च.

## सङ्केतः

**ननु**—उत्साहः गर्वप्राणः, शान्तस्तु शैथिल्यात्मा? ननु किमतः? व्यभिचारित्वं हि विरुद्धस्यापि नायोग्यम्, रताविव निर्वेदादेः। परोपकार-क्रियायां उत्साहस्यैव प्रकर्षः। न च उत्साहशून्या काऽप्यवस्था। इच्छा-प्रयत्नव्यतिरेकेण पाषाणतापत्तेः। यत एव शान्तात्मा तत्त्वज्ञतया स्वात्मो-द्देशेन कार्यविमुखः, अत एव परोपकाराय शरीरादि त्यजति, चिन्तयति चैवम्—'यथाकथञ्चित् त्याज्यं शरीरं यदि परार्थं त्यज्यते, तत्, किमिव नार्जितं स्यात्?' इति ॥ तदिदं तत्त्वज्ञतया[1] शान्तात्मा परार्थे निराकाङ्क्ष-तया शरीरादि त्यजति ॥ अत एव युद्धवीरः स्वदेहत्यागं पराजयोद्देशेन[2] कुर्वाणः न शान्तात्मा। भृग्वादिपात्यपि शुभान्यदेहसाकाङ्क्षः[3] पूर्वदेह-त्यागेऽपि न तथा। तदत्र दयारूपः अभ्युत्साहः प्रधानम्। अन्येऽपि व्यभिचारिणः यथायोग्यं स्युः ॥

ननु नायं सर्वस्य श्लाघास्पदम्। तत् कथं रसः? तर्हि मुनीनां शृङ्गारोऽपि न श्लाघ्यः इति सोऽपि रसत्वात् च्यवताम्। यैरपि तृष्णाक्षय-रूपस्थायी असौ उक्तः, तन्मते तृष्णाक्षयः भावः[4] इत्यायातम्। तद-भावेऽपि तु[5] रत्यादिचित्तवृत्तीनामप्यभावः, तृष्णाविकारत्वात् तासाम्।

## मधुमती

**नन्वेवं** इतररसवत् शान्तरसस्याप्यभिनेयत्वे 'अष्टौ नाट्ये रसाः[6] स्मृताः' इति विरुद्ध्येत इति चेन्न। शान्तस्य निवृत्तिप्रायतया, रसान्तरस्य प्रवृत्तिबहुलतया, अभिनयस्य प्रवृत्तिनियतत्वेन, शान्तः अनभिनेयः, इतरे

---

1 'इति तदिदं तत्त्वम्। तत्त्वज्ञानितया'–व. 2 'परविजयोद्देशेन'–ग. 3 'देहमाकांक्षुः'–व. 4 'तृष्णायाः क्षयः अभावः'–ग. 5 'ऽपि च'–ग. 6 'नाट्यरसाः'–च.

## सङ्केतः

एतच्चित्तवृत्त्यभाव एव यदि शमः, तदा शमस्य चित्तवृत्तित्वाभावः। अभावस्य अवस्तुत्वात् ॥ अथ यथा 'अधर्मः' इत्यत्र धर्मविरोधि पापं लभ्यते, न तु धर्माभावः, तथा अत्र तृष्णा[1]रत्याद्यभावः रत्यादिचित्तवृत्तिविरोधी चित्तवृत्तिविशेषः इत्युच्यते, तदा अस्मन्मते तस्यैव **निर्वेदः** इति नाम, त्वन्मते तु **शमः** इति। अधिकत्वेन[2] तु शान्तो रसः न निबध्यते इति **चन्द्रिका** ॥

तदेवं **नवैव रसाः**। पुमर्थोपयोगेन रञ्जनाधिक्येन च उपदेश्यत्वात्। तेन—आर्द्रतास्थायी **स्नेहः** रसः, गर्धस्थायि **लौल्यं** रसः इत्यसत्। तयोः क्रमेण रत्यादौ हास्यादौ च[3] अन्तर्भावात्। तथाहि—तरुणस्य मित्रे स्नेहः रतौ, लक्ष्मणादेः भ्रातरि स्नेहः धर्मवीरे, बालस्य मात्रादिषु, वृद्धस्य पुत्रादिषु च स्नेहः भये च विश्रान्तः ॥ तदिदमत्र तात्पर्यम्—**स्नेहः, भक्तिः, वात्सल्यं, मैत्री, आबन्धः** इत्येते रतेरेव विशेषाः। तुल्ययोः या मिथो रतिः सः स्नेहः। प्रेमेति यावत्। तयोरेव निष्कामतया या मिथो रतिः सा मैत्री। अवरस्य वरे रतिः भक्तिः। सैव विपरीता वात्सल्यम्। सचेतनानां अचेतने रतिस्तु आबन्धः इति। एवमादि स्वयमूह्यम्। विस्तरविचारस्तु **कोहललोचनादिग्रन्थात्**[4] ज्ञेयः ॥

## मधुमती

त्वभिनेयाः इत्यभिप्रायात्। अत एव सकामशान्तस्य जीमूतवाहनस्य प्रवृत्तिसत्त्वात् प्रबन्धनायकत्वं उपपद्यते ॥ **यद्यपि**—अनेन शान्तरसानुभावरूपं वनगमनादि अभिनेयमित्येव सिद्ध्यति। तथापि—तत् सकामशान्तानु-

---

1 'तृष्णात्म'–घ. 2 'अनधिकारकत्वेन'–ङ. 3 'हासरत्यादौ च'–ग. 4 'ग्रन्थादिषु'–घ.

**रतिः देवादिविषया**
**व्यभिचारी तथाऽञ्जितः ॥ ३५ ॥**
**भावः प्रोक्तः[1] ॥**

---

### सङ्केतः

एवं 'सीदत्यस्मिन् मनः' इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात् साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वम्। अथवा अनुपहतं मनः सत्त्वम्। तत्र भवाः सात्त्विकाः भावाः—स्तम्भस्वेदरोमाञ्चस्वरभेदवेपथुवैवर्ण्याश्रुप्रलयाः अष्टौ। तत्र स्तम्भः निश्चेष्टता। स्वरभङ्गः गद्गदादिना स्वरान्यथात्वम्। प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः। एते च आन्तरालिकभावशंसनात्मकविकाररूपत्वात् शरीरधर्माः बाह्याः अनुभावाः। अत्र च—

'पृथक् भावाः भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः'।

इति ज्ञेयम्[2] ॥

कान्तादिविषया रतिः शृङ्गारः, **देवादिविषया** तु व्यक्ता सती, व्यक्तः **व्यभिचारी** च **भावः** इत्याह[3]—**रतिरिति** ॥

### मधुमती

कृतावेव[4] अभिनेयम्, न तु निष्कामशान्तस्य इति भाव्यम्, तथा सति बुद्धादेरपि अनुकरणीयत्वापातात्। एवं च काचित्कनवरसत्व[5]प्रसिद्धिः एतन्मूलैवेति सिद्धम् ॥

**देवादीति**। मन्मथाननुगता[6] **रतिः** इत्यर्थः। तेन नाननुगमः, न वा[7] परमेश्वरस्य पार्वतीविषया रतिः शृङ्गारत्वाभावं अवगाहते इति

---

1 देवादिविषयकः मन्मथानुद्दीपनीयप्रीतिविशेषः, तथा विभावादिभिः प्राधान्येन व्यञ्जिताः व्यभिचारिणोऽपि भावपदवाच्याः भवन्ति इत्यर्थः। 2 एवमित्यारभ्य एतत्पर्यन्तं घ पुस्तकेनास्ति। 3 'सती भावः व्यभिचारी चेत्याह'–ग. 4 'शान्तावेव'–ज. 5 'काचित्कीनसत्त्व'–च. 6 कामविकारानुद्दीपनीयप्रीतिविशेषः इत्यर्थः। 7 'गमेन'–च.

आदिशब्दात् मुनिगुरुनृपपुत्रादिविषया। कान्ताविषया तु व्यक्ता शृङ्गारः। उदाहरणम्—

(देवविषयरतेः—)

कण्ठकोणविनिविष्टमीश! ते
कालकूटमपि मे महाऽमृतम्।
अप्युपात्तममृतं[1] भवद्वपु-
र्भेदवृत्ति यदि मे न रोचते[2] ॥ ४६ ॥

---

## मधुमती

द्रष्टव्यम् ॥ उपलक्षणमिदम्—रसताप्राप्तेः प्राक् कान्तादि[3]विषया रतिरपि भाव एव न रसः इति। तदिदमुक्तम्—व्यक्तेति। कान्ताविषयेति[4] वदता स्थाय्यन्तरस्य न भावतया व्यक्तिरिति सूचितम्। एतेन—ज्ञानसुखस्वरूपस्थायी एकः भिन्नभिन्नविषयोपरागात् तत्तत्पदवाच्यतां भजन्नपि शृङ्गारात्मतयैव आविर्भवति, न तु रसान्तरात्मतया। तच्च[5]भावतयैव। तत्रैव च हास्यादिव्यपदेशः—इत्यादि निरस्तम्। आविर्भावहेतुसत्त्वात्। अन्यथा शृङ्गारात्मतयाऽपि नाविर्भवेत्। विनिगमकाभावाच्च ॥

---

1 'अप्युदात्तममृतं'–क. 2 हे ईश्वर! भवतः कण्ठैकदेशे नितरां संलग्नं अत एव भवन्मूर्त्या एकीभूतं कालकूटाख्यं महाविषमपि मे उत्तमममृतमिव परमप्रेमास्पदं भवति। वस्तुतः अमृतमेवानायासलब्धमपि यदि तत् भवन्मूर्तेः भिन्नतया वर्तेत—त्वदङ्गसङ्गितया न वर्तेत, तदा तत् मह्यं नैव रोचते इत्यर्थः। भवन्मूर्तिध्यानमेव मम परमानन्दप्रदमिति भावः। (उत्पलः)। 3 'काक्का'–ज. 4 'काचिदिति'–च. 5 'किन्तु'–ज.

(मुनिविषयरतेः—)

हरत्यघं सम्प्रति, हेतुरेष्यतः
शुभस्य, पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् [1] ॥ ४७ ॥

(पुत्रविषयरतेः—)

एह्येहि वत्स! रघुनन्दन! पूर्णचन्द्र!
चुम्बामि मूर्धनि, चिराय परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि,
वन्देऽथ वा चरणपुष्करकद्वयं ते [2] ॥

एवमन्यदप्युदाहार्यम् [3] ॥

---

## मधुमती

**हरत्यघमिति** । योगं अर्हति **योग्यः** । दण्डादित्वात् यत् [4] । योगश्च अलब्धलाभः । तथा च **योग्यतां** अलब्धलाभार्हतां इत्यर्थः ॥

**एह्येहीति** । यद्यपि वीरचरिते जनकस्येयमुक्तिः । तथापि दशरथोक्तित्वमारोप्य एतदुक्तम् [5] । अत एव क्वचित् पुस्तके श्लोकोऽयं नास्त्येव ॥

---

1 नारदं प्रति कृष्णस्योक्तिरियम् । हे नारद! भवतो भवदीयानां वा दर्शनं, शरीरिणां साम्प्रतिकं सर्वमपि पापजातं अपहरति, भविष्यतः श्रेयसश्च हेतुः, एतच्च अकृतपुण्यैः न लभ्यम्, किन्तु पूर्वजन्मार्जितैः सुकृतैरेव सम्पादितं भवेत् । एवं च तव दर्शनं जीविनां सर्वाभीष्टार्थसम्पत्त्यर्हतां सूचयति इत्यर्थः । (शिशुपालवधे १-२६).
2 श्रीरामं प्रति जनकस्योक्तिः । स्पष्टार्था । वन्देऽथवेत्यादि भावोन्मादात् जामातृविषयकत्वात् । यद्वा—पूर्ववाक्यानुगुण्येन सहजसत्यभगवद्भावादितिभाष्यम् पुष्करकं—कमलम् । (महावीरचरिते १-४६) अयंश्लोकःनास्ति—ख. 3 अन्यत्—गुरुनृपादिविषयम् । 4 (पा. सू. ५-१-६६). 5 इदं चिन्त्यम् । जामातुरपि पुत्रप्रायत्वात्, पुत्रवात्सल्येन जनकेनैव एवमुक्तत्वेऽपि दोषाभावात् ।

अञ्जितव्यभिचारी यथा—[1]

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां[2] संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।
नो यावत् परिरभ्य चाटुशतकैः आश्वासयामि प्रियां
भ्रातः! तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥[3]

अत्र विधिं प्रत्यसूया[4] ॥ ३५ ॥

---

## सङ्केतः

जाने इति । अत्र गन्तुं प्रवृत्तेत्यौचित्यात् आश्वासयामि इत्यत्र आशु इति भिन्नं व्याख्येयम् । गच्छन्त्या हि प्राक् आसनं, पश्चाच्च आश्वासनं युक्तमिति । शठेनेत्यर्थसाहाय्यात् अन्यपदार्थानां व्यञ्जकत्वम् ॥ ३५ ॥

## मधुमती

जाने इति । न च—अस्य 'त्वामालिख्य'[5] इत्यनेन[6] सह अविशेषात् उभयत्रापि असूया[7]व्यञ्जकत्वं विप्रलम्भव्यञ्जकत्वं वा स्यात्, न त्वत्र[8] विशेषः इति वाच्यम् । रसध्वन्यसूयाख्यभावध्वन्योः एकव्यञ्जकानु-

---

1 विभावादिभिः प्राधान्येन व्यञ्जितः भावरूपः व्यभिचारी यथेत्यर्थः । 'अञ्जित' इति नास्ति-क. 2 'मा मा'-ख. 3 'दरिद्रः कृतः'-क. इदं कस्यचित् विरहातुरस्य वयस्यं प्रति वचनम् । अयि भ्रातः! शृणु । अद्य स्वप्ने मदीया प्रियतमा कोपेन पराङ्मुखी सती मया दृष्टा । तदनु च मयि स्प्रष्टुं उद्युक्ते सति, 'मां पाणिना मा स्पृश' इति हस्तेन सूचयन्ती केवलं रुदती अग्रे गन्तुं प्रवृत्ता दृष्टा । तथा गच्छन्तीं तां प्रियां परिरभ्य प्रियवाक्यशतैः यावत् नानुनयं करोमि, तावदेव वञ्चकेन दैवहतकेन अहं निर्निद्रः कृतः, इति सत्यं स्मरामि इत्यर्थः । (शार्ङ्गधरपद्धतौ ।) 4 व्यज्यते इति शेषः । 5 (का. उदा. ३७). 6 'न च रामादिरित्यनेन'-च. 7 'अपि दया'-ज. 8 'न तूक्त'-च.

## तदाभासाः अनौचित्यप्रवर्तिताः ॥[1]

तदाभासाः—रसाभासाः भावाभासाश्च ॥

तत्र रसाभासो यथा—

स्तुमः कं ? वामाक्षि ! क्षणमपि विना यं न रमसे,
विलेभे कः प्राणान् ? रणमखमुखे यं मृगयसे ।

---

### सङ्केतः

स्तुम इति । विलेभे व्ययितवान् । अत्र अनेकेति । स्तुमः

### मधुमती

प्रवेशलक्षणसङ्करसम्भवात् उभयसामञ्जस्यात् । वैपरीत्येन उदाहरणानुयोगस्य अशोकवनिकानिदेशकल्पत्वात्[2] ॥ ३५ ॥

अनौचित्यप्रवर्तिताः इति । अत्र अनेककामुकविषयं अभिलापं

---

1 तथाच रत्यादेः अनौचित्येन प्रवर्तने रसाभासः । भावनामनौचित्येन प्रवर्तने तु भावाभासः इत्यर्थः । तत्र च—शृङ्गारस्य बहुविषयत्वे, उपनायकादिविषयत्वे, अन्यतरविषयत्वे, गुरुजनगतत्वे, तिर्यग्विषयत्वे, अगम्यादिविषयत्वे वा अनौचित्यम् । एवं हासस्य गुर्वाद्यालम्बनत्वे, करुणस्य वीतरागाद्याश्रयत्वे, रौद्रवीरयोः पित्राद्या-लम्बनत्वे, भयानकस्य वीरगतत्वे, बीभत्सस्य यज्ञीयपशुवसाद्यालम्बनत्वे, अद्भुतस्य ऐन्द्रजालिकाद्यालम्बनत्वे, शान्तस्य असंस्कृतजनविषयत्वे च अनौचित्यं ध्येयम् । शास्त्रलोकमर्यादाऽतिक्रम एव अनौचित्यमिति । 2 यथेष्टच्छायासौरभाकांक्षी यथा अशोकवनिकां गतः नान्यद्वनं गन्तुकामो भवेत्, तथा प्राप्ते एव देशे इष्टलाभे सति अन्यत्र गन्तुं नेच्छेत्—इत्यर्थं उद्घाटयितुमयं न्यायः प्रवर्तते । केचित्तु—अत्रत्य-विप्रलम्भशृङ्गारस्य स्वप्नवृत्तान्तात्मकस्य प्रबोधेन बाधितत्वात् व्यभिचारिभावस्यैव साम्राज्यमित्याहुः ।

सुलभे को जातः? शशिमुखि! यं आलिङ्गसि बलात्,
तपश्श्रीः कस्यैषा? मदननगरि![1] ध्यायसि तु यम्[2]॥४९॥
अत्र—अनेककामुकविषयं अभिलापं, तस्याः 'स्तुमः'
इत्याद्यनुगतं[3] बहुव्यापारोपादानं व्यनक्ति॥[4]

---

## सङ्केतः

कं इत्याद्यनुगतं एक[5]स्त्रीविषयं रमण-मृगण-आलिङ्गन-ध्यानरूपं बहुव्यापारग्रहणं कर्तृ बहुकामिविषयं प्रेम व्यनक्ति। तच्च प्रेम अनुचितम्।

## मधुमती

अनुचितं स्तुमः इत्यादिबहुव्यापारोपादानं तस्याः व्यनक्ति इत्यन्वयः। स्तुम इत्यादीति अतद्गुणसंविज्ञानो बहुव्रीहिः। तेन अन्वेषणादि लभ्यते। तस्य[6] नायिका व्यापारत्वाभावादिति ध्येयम्॥ ननु—एकस्मिन्नेव यूनि बहुव्यापारोपादानं नानुचितमिति कथं आभासता?[7] इति चेन्न। बहुपु व्यापारोपादानं इत्यर्थात्। प्रकृते च यं यं इत्यनेन बहूनां आलम्बनत्वेन उपादानात्। अन्यथा यं इत्युपादाय—न रमसे, मृगयसे, तं कं स्तुमः—इत्येतावन्मात्रमुच्येत। मदननगरि! इति आमन्त्रणपदमपि

---

1 'नगरीं'—क. 2 परकीयां प्रति कस्यचन कामुकस्योक्तिरियम्। अयि अतिसुन्दरनयने! त्वं यं विना क्षणमपि न रमसे तं कं स्तुमः? यं वा मृगयसे तथाविधः को वा रणरूपयज्ञमुखे प्राणान् विमुक्तवान्? अयि चन्द्रवदने! यं त्वमेव बलात् आलिङ्गसि तादृशः को वा सुलभे जातः? अयि मदननगरि! यं त्वमेव ध्यायसि तादृशस्य कस्य वा एषा तपस्सम्पत्तिः? ब्रूहि इत्यर्थः। 3 'द्यनुचितं'—ख. 4 तथाच—तस्याः कामुक्याः 'स्तुमः विलेभे जातः' इत्यादिषु बहुषु अनुगतः—संबद्धः यः रमणान्वेषणादिरूपानेकव्यापारनिर्देशः, सः तस्याः अनेककामुकविषयकं अभिलाषं व्यञ्जयतीत्यर्थः। अभिलाषेण च रतिः व्यज्यते : तस्याश्च युगपदनेकविषयकत्वात् अनौचित्यम्। 5 'गतमेव'—ग. 6 स्तोत्रस्येत्यर्थः। 7 'भासते'—च.

भावाभासो यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेर[1]यौवनतरङ्गितविभ्रमाङ्गी । [2]
तत् किं करोमि ? विदधे कथमत्र मैत्रीं ? [3]
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ? [4] ॥ ५० ॥

अत्र चिन्ता अनौचित्यप्रवर्तिता ।

---

## सङ्केतः

अन्योन्यास्थाबन्धात्मिकायाः एव रतेः शृङ्गारत्वप्रतिपादनात् ।

राकेति । स्मेरयौवनेन तरङ्गितविभ्रमा आस्था अवस्थानं यस्याः सा तथा । न तु तरङ्गितविभ्रमं आस्यं, पौनरुक्त्यात् । त्यदो वा स्या इति रूपम् । अत्र चिन्तेति । अत्र नार्याः परपत्नीत्वात् चिन्तेयं[5] अनौचित्यप्रवृत्ता । ननु—एकपाक्षिक्याः रतेः सद्भावात् रसाभासत्वं वक्तुं

## मधुमती

सर्वसंवरणीयत्वं[6] व्यञ्जयत् बहु[7]विषयोपादानमेव व्यनक्ति ॥

अत्र चिन्तेति । परस्त्रीविषयतयेति शेषः । अत्र रसाभासत्वेऽपि व्यभिचार्याद्यसंवलनदशायां भावत्वात् भूतपूर्वगत्या भावाभासता ज्ञेया ॥

---

1 'सस्मेर'–ख. 2 'मास्था(त्)'–ख. 3 'करोमि कथमत्र तनोमि मैत्रीं'–क. 4 शैशवात् प्रभृति सखीत्वेन व्यवहृतायां कस्याञ्चित् तदवस्थायामेव अनुरक्तस्येयमुक्तिः । पूर्णचन्द्रमुखी अतिचञ्चलसुदीर्घनयना इयं नवनवयौवनेन उत्तरोत्तरारम्भशीलविलासपरिपूर्णैः अङ्गैः मनोहारिणी यदि स्यात्, तदा तल्लाभाय किं वा करोमि ? केनोपायेन वा अस्यां तादृशीं मैत्रीं करोमि ? तस्याः स्वीकरणपूर्वकं तया सह सङ्गमे कर्तव्ये को वा अभ्युपायः स्यात् ? इत्यर्थः । अत्र यौवनं सम्भाव्य तत्सङ्गमे चिन्ताप्रवृत्तेः अनौचित्यमिति भावः ॥ 5 'पत्नीत्वचिन्तेह'–ग. 6 'संतरणीयं'–ज. 7 'अबहु'–ज.

## सङ्केतः

युक्तम्, न तु भावाभासत्वम्। न[1]। चिन्ताविभावानां प्राधान्येन तस्या एव चमत्कारकारित्वात्[2]। 'प्रधानेन च व्यपदेशो भवति'[3] इति चात्र भावाभासत्वम्॥

अयं भावः—यद्यपि रसेनैव काव्यं जीवति। तथापि तस्य रस्य[4] नानाद्रव्यजपानकस्येव एकघनास्वादात्मनोऽपि, यदा कुतश्चिदंशात् भावादिरूपात् उद्रिक्तावस्थामापन्नात् चमत्कारातिशयो भवति, तदा भावादिध्वनिरेव। यदा तु विभावाभासात् रत्याद्याभासः, तदा विभावानुभावा-

## मधुमती

साम्प्रदायिकास्तु—

"हीनपात्रेषु तिर्यक्षु नायकप्रतियोगिषु।
गौणेषु च पदार्थेषु तमाभासं विजानते"[5]॥

इतिकण्ठाभरणसंवादात् तेषां अस्यापि आभासत्वेन[6] गणनं कुर्वन्ति। **वस्तुतस्तु**—अनौचित्यमात्रमेव अमीषां मते आभासताप्रयोजकम्। तिर्यगादौ तु अनौचित्याभावात् रस एव, न तु रसाभासः। अत एव **वृत्तिकारः** 'ग्रीवाभङ्ग'[7]त्यादौ तिर्यग्विषयतया भयानकम्, 'मित्रे क्वापि गते'[8] इत्यादौ विप्रलम्भं च उदाजहार। अत एव च अन्यत्र अनेककामुकविषयरतेः आभासत्वेऽपि, पाण्डवेषु द्रौपद्याः न तथा। स्वस्त्रियामपि शोकाद्याविष्टायां शृङ्गारवर्णनं आभासं औचित्यानौचित्याभ्यां अवसेयम्॥ **साम्प्रदायिकैस्तु**—आविदग्धाश्रयत्वमपि अनौचित्यपक्षे निक्षिप्य तथा

1 'युक्तं न'–घ. 2 'चमत्कारित्वात्'–ग. 3 'प्राधान्येन च व्यपदेशा भवन्ति'–घ. यथा अस्मदादिशरीरस्य पार्थिवत्वेन व्यपदेशः तथा। 4 'रसस्य'–घ. 5 (सरस्वतीकण्ठाभरणे . ५-३०) 6 'तेषामन्याभासत्वेन'–च. 7 (का. उदा. ४१). 8 (का. उदा. ३४४)

एवं अन्येऽपि [1] उदाहार्याः ॥

---

## सङ्केतः

भासात् चर्वणाभासः इति रसाभासः । एवं भावाभासोऽपि । रसध्वनेरेव अमी रसभावाभासध्वनि[2]प्रभृतयः निष्यन्दाः[3] आस्वाद[4]प्रधानं प्रयोजकमंशं विभज्य पृथक् व्यवस्थाप्यन्ते, यथा—पानकयुक्तिज्ञैः एकसंमूर्छितरसोपभोगेऽपि 'सुपरिशुद्धद्राक्षायां[5] प्रयुक्तोऽयं रसः' इति । तथा निरिन्द्रियलतातरुनदीशैलादेः सेन्द्रियपश्वादेश्च यत्र काव्ये कामादिव्यवहारः[6] तत्र रसभावाभासतैवेति[7] ॥ **एवमन्येऽपीति** । रसाभासाः भावाभासाश्चेत्यर्थः ॥

## मधुमती

गणितम् । रसानौचित्यस्य रसावगमोत्तरमेव अवगमात्[8] तदाभासताप्रयोजकत्वमेव, न चेत्[9] वाच्यवाचकानौचित्यं रसभङ्गहेतुः इति विभावनीयम् ॥

**यद्यपि**—काव्यनाट्यश्रवणदशायां विभावादीनां साधारण्येन विज्ञाने सति सामाजिकानां स्वीयस्थाय्यभिव्यक्तिरिति, अलौकिको रसः स्वतो नाभासः । तथापि साधारण्यप्रतीति-प्रयोजके काव्ये[10] वर्णिते, यत्र अनौचित्यप्रतिसन्धानं, तत्रैव तद्व्यङ्ग्ये रसेऽपि आभासताव्यवहारः इति ध्येयम् । **यदपि**—पितृचरणैः आभासपदस्य भ्रमार्थकत्वं उक्तम्, तदपि

---

1 रसान्तराभासाः भावान्तराभासाश्च इत्यर्थः । 2 'भावाभासध्वनि'–ग. 3 'निष्पन्दाः'–घ. 4 'आस्वादे'–ग. 5 'द्राक्षादि'–घ. 6 यथा—"पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालौष्ठमनोहराभ्यः । लतावधूभ्यः तरवोऽप्यवापुः विनम्रशाखाभुजबन्धनानि ॥" "ददौ रजः पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः । अर्धोपयुक्तेन बिसेन जायां सम्भावयामास रथाङ्गनाम ॥" "मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वां अनुवर्तमानः ॥" इत्यादाविति भाव्यम् । 7 केचित्तु इदं न सहन्ते । तेष्वपि विभावादिसम्भवादित्याहुः । विभावादिसद्भावस्यैव रसप्रयोजकत्वम्, न तु तद्ज्ञानस्येति ॥ 8 'त्यस्य रसानवगमात्'–ज. 9 'न तु'–ज. 10 'साधारण्यप्रयोजककार्ये'–च.

**भावस्य शान्तिरुदयः**
**सन्धिः शबलता तथा[1] ॥३६॥**

क्रमेण उदाहरणानि—(भावशान्तेः—)

तस्याः सान्द्रविलेपनस्तनतट[2]प्रश्लेषमुद्राङ्कितं
किं वक्षः चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते, क्व तत्? इत्युदीर्य सहसा तत् संप्रमार्ष्टुं मया
संश्लिष्टा रभसेन तत्सुखवशात् तन्व्या च[3] तद्विस्मृतम्[4] ॥५१॥

---

## सङ्केतः

तस्याः इति । स्तनतटस्य प्रश्लेषेण या मुद्रा प्रतिबिम्बं तया अङ्कितम् । अन्यदपि यद्वस्तु मुद्राङ्कितं तत् केनापि व्याजेन रक्ष्यते इति

## मधुमती

व्यञ्जकीभूतकाव्यानुचिते एव औचित्यज्ञानात्मक[5]भ्रममूलतया[6] प्रकृत-पर्यवसन्नमेव ॥

भावस्य शान्तिरिति । विरुद्धभावोदयाविनाभूता शान्तिः, शान्त्य-

---

1 'भावशान्त्यादिरक्रमः' इत्युक्तरीत्या क्रमप्राप्तमाह—भावेत्यादि । यत्र निर्वेदादीनां व्यभिचारिभावानां प्रशमः उत्पत्तिः समकालास्वादः पूर्वपूर्वोपमर्दकतया उत्तरोत्तरोदयो वा व्यज्यते तत्र क्रमेण शान्त्यादिः इत्यर्थः । 2 'स्तनयुग'–क. 3 'तस्याश्च'–क. 4 नायिकायाः मानः भवता कथमपनीतः? इति पृष्टवन्तं वयस्यं प्रति नायकस्योक्तिः । अयं भावः—कदाचित् नायिकान्तरसंश्लेषेण मदीयं वक्षस्स्थलं तदीयसान्द्रविलेपितचन्दनालङ्कृतस्तनपर्यन्तप्रदेशमुद्राङ्कितमभवत् । इतश्च प्रियायाः कोपापनोदनाय तस्याः चरणयोः निपत्य अनमम् । तदा प्रिया मामपृच्छत्—किं एवं प्रणामव्याजेन सपत्नीपरिरम्भजन्यस्तनमुद्राङ्कनं निगूहितुं प्रयत्यते? इति । तदा अहं तदङ्कनं कथमपि विलोपयितुं 'क्व तत्?' इति उदीर्य रभसेन अस्या अप्यालिङ्गनं अकरवम् । एषा च प्रिया तादृशमदीयालिङ्गनजन्यसुखपारवश्यात् मत्कृतं गोपनमेव विस्मृतवती इति ॥ (अमरशतके–२६) । 5 'काव्यस्यानौचित्यज्ञानात्मक'–ज. 6 'मूलकतया'–ज.

अत्र कोपस्य [1] ।

(भावोदयस्य—)

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपराङ्मुख[2]ग्लपितया चाटूनि कुर्वन्नपि ।
आवेगात् अवधीरितः प्रियतमः तूष्णीं स्थितः तत्क्षणं[3]
'मा भूत् सुप्त इवे'त्यमन्दवलितग्रीवं पुनर्वीक्षितः[4] ॥५२॥

अत्र औत्सुक्यस्य [5] ।

---

## सङ्केतः

उक्तिलेशः । अत्र स्त्रीकोपस्य शान्तिः ॥

एकस्मिन् इति । मानेन कोपेन पराङ्मुखी चासौ ग्लपिता च सुप्त इव प्रार्थनाविमुखः । अत्र स्त्रीगतौत्सुक्यस्य उदयः ॥

## मधुमती

विनाभूतः विरुद्धभावोदयः भावशान्त्युदयौ, द्वयोः तुल्यविषयत्वेन सन्धिः । शान्त्युदययोः करम्बितत्वे[6] शबलता । तच्च उदाहरणे एव स्फुटम् ॥

---

1 शान्तिरिति शेषः । 2 'मानपरिग्रह'–क. कोपपराङ्मुख(खं)–ख. 3 'तत्क्षणात्'–ख. 4 कश्चन नायकः प्रियया सह एकस्यामेव शय्यायां विश्रान्तः प्रमादात् प्रियाशत्रुभूतायाः सपत्न्याः नाम अगृह्णात् । एवं च मुग्धा तावतैव क्रुद्धा पराङ्मुखी च भूत्वा खिन्ना 'अयि! सत्यं न मे तस्यामभिलाषः' इत्यादिप्रियवाग्भिः सान्त्व्यमानाऽपि नायकमेनं कोपसंभ्रमात् अवधीरयामास । प्रियतमस्तु उपेक्षया तूष्णीं किञ्चित् स्थितः । सा च तदप्यसहमाना 'अयं प्रार्थनापराङ्मुखः सुप्त इवापि मा भूत्' इति चिन्तयन्ती ग्रीवां अतिशयेन वक्रीकृत्य वारंवारं एनं अपश्यत् इति भावः । (अमरुशतके–२३) । 5 उदयः इति शेषः । 6 'करम्भितत्वे'–च.

(भावसन्धेः—)

उत्सिक्तस्य तपःपराक्रमनिधेः अभ्यागमादेकतः [1]
सत्सङ्गप्रियता च वीररभसोल्लासश्च [2] मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुः [3] चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो[4] रुणद्ध्यन्यतः[5] ॥५३॥

अत्र—आवेगहर्षयोः [6] ।

---

## सङ्केतः

उत्सिक्तस्येति । गर्वात् तपोविक्रमयोः उत्कर्षसम्भावना । सत्सङ्गप्रियता तपोनिधित्वात् । वीररभसोल्लासश्च पौरुषनिधित्वात् । पूर्वस्मिन् अर्धे आवेगः, अपरस्मिन् हर्षः । तयोः सन्धिः । द्वयोः विरुद्धयोः स्पर्धिभावेन उपनिबन्धः[7] । तुल्यतया मिथो न बाध्यतयाऽवस्थितिः[8] । अत एव च प्रियता च उल्लासश्च इति चकारद्वयम् ॥

## मधुमती

उत्सिक्तस्येति । लब्धप्रतिष्ठतया आत्मन्यहङ्कारः उत्सेकः । तद्वतः[9] इत्यर्थः ॥

---

1 'अभ्युद्गमादेकतः'–क. 2 'सोत्फालश्च'–क. 'सोन्माथश्च'–ख. 3 'एष बहुशः'–क. 4 'स्पर्शो'–ग. 5 भार्गवाऽऽगमनं श्रुतवतः अन्तःपुरगतस्य रामस्येदं वचनम् । आगतोऽयं भार्गवः तपोनिधिः इति सत्सङ्गप्रियता, अहङ्कृतोऽयं पराक्रमनिधिश्चेति वीरोचितोत्साहोद्रेकश्चेति द्वयमप्येकतः मां आकर्षति । अन्यतश्च—वारंवारं मदीयं चैतन्यमेव विषयान्तराद्व्यावर्तयन् हरिचन्दनवत् इन्दुवच्च शीतलः परमप्रेमसंवलितः आनन्दमयश्चासौ सीतापरिरम्भः मां मुनिपार्श्वगमनान्निवारयति इत्यर्थः । (महावीरचरिते २-१६) । 6 सन्धिरिति शेषः । 7 द्वयोरित्यादिवाक्यं नास्ति–ग. 8 'मिथोऽनाबाधतया च स्थितिः'–घ. 9 'ततः'–ज.

(भावशबलताया:—)

काकार्यं ?[1] शशलक्ष्मणः क च[2] कुलं ? भूयोऽपि दृश्येत सा ?
दोषाणां प्रशमाय नः[3] श्रुतं, अहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः ? स्वप्नेऽपि सा दुर्लभा,
चेतः ! स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति ?[4]॥

अत्र—वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्ता-

---

## सङ्केतः

काकार्यमिति । अत्र किंशब्दः कुत्सार्थः प्रश्नार्थश्च आवृत्त्या व्याख्येयः । तथा अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने च मिथो बाध्यबाधकतया तिष्ठन्ती, चिन्तायामेव पर्यवस्यन्ती परमास्वादस्थानम् । वितर्कादीनां शबलतेति योगः ॥

## मधुमती

ननु भावोदयादिवत् भावस्थितिः किमिति नोच्यते ? - इत्यत आह—

---

1 'काकृत्यं'—क. 2 'क नु'—क. 3 'दोषाणां उपशान्तये'—ख. 4 'पास्यति'—क. शकुन्तलादर्शनोत्कण्ठितस्य दुष्यन्तस्य, ऊर्वशीदर्शनोत्कण्ठितस्य पुरूरवसः, देवयानीं दृष्टवतो ययातेर्वा वचनमिदम् । मुनिकन्यायामासक्तिरूपं इदं अकार्यं क ? निरपवादः सः चन्द्रवंशः क ? (वितर्कः)। लोकोत्तरसौन्दर्या सा भूयोऽपि कथं वा दृग्गोचरा स्यात् ? (औत्सुक्यम्)। दोषाणां प्रशमाय खलु अस्माकं शास्त्राभ्यासः ! (मतिः)। अहो ! कोपेऽपि तस्याः मुखं मनोहरमेव। (स्मृतिः)। कृतात्मानः कल्मषविहीनाश्च सत्पुरुषाः एतादृशं मां किं वक्ष्यन्ति ? (शङ्का)। अदृष्टश्रुतदर्शके स्वप्नेऽपि सा पुनः दुर्लभा ! (दैन्यम्)। हे चेतः ! धैर्यमुपगच्छ। (धृतिः)। धन्यः को वाऽन्यो युवा तस्याः अधरामृतं पास्यति ? (चिन्ता)। —इत्यर्थः। (विक्रमोर्वशीये पाठान्तरे ४-४)।

नाम्[1] ॥ भावस्थितिस्तु उक्ता । उदाहृता च—'जाने कोपपराङ्मुखी'[2] इत्यादिना ॥ ३६ ॥

**मुख्ये रसेऽपि तेऽङ्गित्वं**
**प्राप्नुवन्ति कदाचन[3] ॥ ३६ ॥**

ते भावशान्त्यादयः । अङ्गित्वं च[4] राजानुगत-विवाहप्रवृत्तभृत्यवत् ॥ ३६ ॥

---

## सङ्केतः

भावस्थितिरिति । 'रतिर्देवादि' इत्यत्र भावस्य स्थितिरेव केवलोक्ता । न शान्त्यादिविशेषण[5]विशिष्टा ॥ ३६ ॥

ननु मुख्यस्य रसस्यैव अङ्गित्वं वक्तुं युक्तम् । तत् कथं भाव-प्रशान्त्यादीनां तदुक्तं इत्याह—**मुख्ये रसेऽपीति** ॥ ३६ ॥

## मधुमती

**भावेति** । तथाच भावोदाहरणमेव तदुदाहरणमिति, न पृथगुक्तमिति भावः ॥ ३६ ॥

ननु उक्तोदाहरणेषु रसस्य सम्भवात् कथं भावोदाहरणत्वं? अत आह—**मुख्ये इति** । **राजेति**—विवहनक्रियायां[6]प्रधानस्यापि राज्ञः अप्राधान्यं, अप्रधानस्यापि भृत्यादेः प्राधान्यं च यथेत्यर्थः ॥ ३६ ॥

---

1 शबलतेति शेषः । क्वचित्तथैव पाठः । 2 (का. प्र. उ. ४७) । 3 तादृश-चमत्कारे लब्धे एव, न तु सर्वदा । 4 एकतरप्राधान्यस्य अन्यतरगुणीभावव्याप्तत्वात् आह—अङ्गित्वं चेति । 5 'विशेषेण'–घ. 6 'क्रियया'–च.

**अनुस्वानाभसंलक्ष्य-**
**क्रमव्यङ्ग्यस्थितिस्तु यः[1] ।**
**शब्दार्थोभयशक्त्युत्थः**
**त्रिधा स कथितो ध्वनिः ॥ ३७ ॥**

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः, अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः, उभयशक्तिमूलानुरणनरूपश्चेति त्रिविधः[2] ॥ ३७ ॥

---

### सङ्केतः

एवं अलक्ष्यक्रमं उक्त्वा, लक्ष्यक्रमं[3] त्रिधा ध्वनिमाह—**अनुस्वानाभेति** । वाच्योऽर्थः घण्टास्वानायते,[4] व्यङ्ग्यार्थस्तु अनुरणनायते इति स्थित्या व्यङ्ग्यं **अनुरणनरूपं** इत्युक्तम् ॥ ३७ ॥

### मधुमती

**अनुस्वानेति** । **अनुस्वानं** अनुरणनम्, तदाभः तत्सदृशः । तेन अविवक्षितवाच्यात् भेदः । तत्र बाधेन विच्छेदात् अनुरणनसादृश्याभावात् । **शक्तिपदं** शब्दादौ प्रत्येकं अन्वितम् । द्वन्द्वपरश्रुतत्वात् । अतः **त्रैविध्य**मित्यर्थः । **यद्यपि**—शब्दार्थयोः एकव्यञ्जकत्वे अपरव्यञ्जकत्वं ध्रुवमिति नायं विभागः उपपन्नः । तथापि प्राधान्याभिप्रायेण विभागोपपत्तिः इति द्रष्टव्यम् । तत्रापि—शब्दपरिवृत्त्यसहत्वे शब्दप्राधान्यम्, परिवृत्तिसहत्वे अर्थप्राधान्यम्, उभयसंवलने तु उभयप्राधान्यम् ॥ अविवक्षितवाच्ये तु

---

1 वाच्यार्थप्रतीत्यव्यवहितप्रतीतिविषयव्यङ्ग्यकः इति यावत् । 2 'त्रिधा'–क. तथा च शब्दपरिवृत्त्यसहत्वे, तत्सहत्वे, अंशभेदेन तदसहत्वसहत्वाभ्यां च त्रिधेत्यर्थः । 3 'संलक्ष्यक्रमं'–ग. 4 'घण्टाघातायते'–घ.

तत्र—

**अलङ्कारोऽथ वस्त्वेव**
**शब्दात् यत्रावभासते ।**
**प्रधानत्वेन सः ज्ञेयः**
**शब्दशक्त्युद्भवो द्विधा ॥ ३८ ॥**

वस्त्वेवेति अनलङ्कारं[1] वस्तुमात्रम्[2] ॥

---

### सङ्केतः

तत्र तेषु मध्ये । शब्दमूलमाह—**अलङ्कार इति** । **प्रधानत्वेनेति** । शब्दस्य मुख्यतया व्यञ्जकत्वं, अर्थस्य तु सहकारितयेति भावः । **वस्त्वेवेतीति** । रसस्य अलक्ष्यक्रमत्वेन पूर्वमुक्तत्वात्, वस्तुनश्च लक्ष्यक्रमत्वेन अत्र अभिधीयमानत्वात्, अलङ्कार एव व्यवच्छेद्यतया अवशिष्यते । अतः **अनलङ्कारं** इत्युक्तम् ॥

### मधुमती

एषां प्रसङ्ग एव नास्ति । बाधेन शब्दशक्तेः अभिधायाः विच्छेदात् । **यद्यपि च**—वक्ष्यमाणलक्ष्यक्रमध्वन्युदाहरणेषु यत्र क्वचित् लाक्षणिकपदमप्यस्ति । तथापि 'भूम्ना व्यपदेशः' इति लक्ष्यक्रमत्वमुक्तम् ॥ २७ ॥

शब्दशक्तिमूलं विभजते—**तत्रेति** । **प्रधानत्वेन**—उपसर्जनीकृतशब्दार्थत्वेन । अन्यथा यथाश्रुते–वस्त्वलङ्कारयोः यत्र अभिधया प्रतिपादनं, तत्र अतिव्याप्तेः[3] ॥ ननु अलङ्कारोऽपि वस्त्वेव, वस्तुत्वस्य केवलान्वयित्वात्, अत आह—**अनलङ्कृतमिति** । तथाच—चित्राचित्ररूपवस्तुभेदात् भेदः इत्यर्थः ॥

---

1 'अलङ्कारभिन्नं'–क. 2 अन्यत्तु सालङ्कृतं वस्तु, वस्तुत्वस्य केवलान्वयित्वात् । 3 'तत्रापि व्याप्तेः'–ज.

**तत्राद्यो यथा**—(शब्दशक्तिमूलोपमालङ्कारध्वनिः—)

**उल्लास्य कालकरवालमहाऽम्बुवाहं**
**देवेन येन जरठोर्जितगर्जितेन ।**
**निर्वापितः सकल एव रणे रिपूणां**

---

**सङ्केतः**

**उल्लास्येति** । शत्रुविषये सन्तापकृत् प्रसिद्धः[1] प्रतापः । अत्र-यदा राजवर्णनप्रस्तावात् नियमिताभिधाः कालादिशब्दाः एकमेवार्थं उक्त्वा सार्थकाः, अनन्तरं तु अर्थान्तरप्रतीतिः शब्दोत्थध्वननादेवेति, तदा[2] मेघवृत्तान्तरूपवस्तुध्वनित्वम् । यदा तु ध्वन्यर्थवाच्यार्थयोः वाक्यस्य[3]

**मधुमती**

**उल्लास्येति** । **कालकरवाले महदम्बुधारारूपं जलं, तस्य वाहं** प्रवाहं **उल्लास्य, देवेन** राज्ञा **जरठोर्जितगर्जितेन** तेजोयुक्तसिंहनादेन **सकले एव रणे** सर्वस्मिन्नेव सङ्ग्रामे **रिपूणां ज्वलितः प्रतापः** शमितः इत्येकः । **कालकरः** श्यामरुचिः **वालः**[4] नवोदितः **महाम्बुवाहः** महामेघः, तं **उल्लास्य देवेन** इन्द्रेण **ऊर्जितगर्जितेन रिपूणां**—जलस्य शीततया उष्णः आतप एव तस्य रिपुः, तेषाम् । **रणे**—शब्दे—'महानयं आतपः' इति जनकोलाहले सति । **सः प्रतापः** प्रकृष्टतापः शमितः इति द्वितीयोऽर्थः ॥ **कालसमः** वैरिसंहर्ता यः **करवालरूपः महाम्बुवाहः**, तं **उल्लास्य** इत्यादि तु नार्थः । तथासति पृथक् अर्थद्वयाप्रतीत्या, रूपकेणैव

---

1 'प्रसिद्धिः'-ग. 2 तथा इति नास्ति-ग. 3 'वाक्यार्थस्य'-ग.
4 वबयोरभेदात् बालः इति यावत् ।

धाराजलैः त्रिजगति ज्वलितः प्रतापः[1] ॥ ५५ ॥

अत्र—वाक्यस्य असंबद्धार्थाभिधायकत्वं[2] मा

---

## सङ्केतः

असम्बद्धार्थाभिधायकत्वं इत्यादिनयेन मिथः सङ्गतिः स्यात्, तदा अलङ्कारध्वनित्वमपि ॥

## मधुमती

प्रकृतार्थसिद्धेः, उपमोदाहरणं न स्यात्। **असम्बद्धेति**। अविवक्षितार्थ-परत्वमित्यर्थः ॥

**इदमत्राकूतम्**—राजरूपार्थे तात्पर्यात् अभिधानियमनेन, महेन्द्र-रूपार्थस्य व्यञ्जनया प्रतीतिः, नृपस्य तु अभिधयेति, अनयोः स्वातन्त्र्येण प्रतीतौ वाक्यभेदापत्तिभयेन अङ्गाङ्गिभावे कल्पनीये, रूपकपक्षे 'राजैव महेन्द्रः' इत्यर्थप्राप्तौ, अविवक्षितमहेन्द्रप्राधान्यात् तद्रतेरेव व्यङ्ग्यतापत्तौ **असम्बद्धार्थाभिधायकत्वप्रसङ्गः**। उपमाकल्पने तु 'महेन्द्र इव राजा' इत्यर्थप्राप्तौ विवक्षितराजगोचरा रतिः प्रतीयते इति ॥

---

1 अत्र अभिधया प्राकरणिकोऽर्थः, व्यञ्जनया अप्राकरणिकोऽर्थश्च प्रतीयेते। तत्र—प्राकरणिकं राजवर्णनम्। यथा—अतिकठोरबलिष्ठसिंहनादकर्त्रा येन राज्ञा स्वकीयश्यामलमहाखड्गधारां प्रसार्य तदीयधाराकान्तिभिः त्रिजगत्यपि प्रसिद्धः सकलोऽपि रिपूणां प्रतापः रणरङ्गे प्रशमितः तादृशो राजाऽयम् इति। अप्राकरणिकं तु इन्द्रवर्णनम्—धगद्धगितवह्निना जीवन्मरणयोः युद्धसमये इव प्रसक्ते श्रवणपरुष-विकटस्तनितेनोपलक्षितं श्यामलं नवं जलधरं सर्वतः प्रसार्य येन धाराजलैः स्ववैरिणां खाण्डववनदाहकानामिव भयङ्कराणां वह्नीनां त्रिजगति ज्वलितः सकल एव उष्णभावः संलग्नश्च सद्यः प्रशमितः, तादृशोऽयं इन्द्रो देवः इति। 'उल्लास्य कृष्णकरवालन-वाम्बुवाहं'—ग. 2 'धायित्वं'—क.

**प्रसाङ्क्षीत् इति प्राकरणिकाप्राकरणिकयोः[1] उपमानोप-मेयभावः कल्पनीयः इति, अत्र उपमाऽलङ्कारो व्यङ्ग्यः॥**

---

## सङ्केतः

**अयं भावः**—सादृश्यरूपेण अर्थसामर्थ्येन द्वितीया अभिधैव प्रतिप्रसूयते। ततश्च द्वितीयोऽर्थः उच्यते एव, न तु ध्वन्यते। तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्रकृतेन साकं या रूपणा सा तावत् विभात्येव[2]। न चान्यतः सा शब्दात् इति, तत्र च ध्वननव्यापारात् अभिधानशक्तेः[3] कस्याश्चिदनाशङ्क्यत्वाच्चेति च, तत्र प्रकृताप्रकृतवाक्यार्थयोः साम्यं, देवो देव इवेति[4] रूपं ध्वन्यते इति॥ अत्र पक्षे—पदैः प्रस्ताव-नियतैः[5] मेघवृत्तान्तोचिताः पदार्थाः उच्यन्ते। ततः प्रस्तावस्य शब्दशक्त्या वाक्योपपत्तिसहायया न्यक्कृतिः जायते। ततः मेघवृत्तान्तोचितवाक्यार्थ-प्रतिपत्तिः। ततश्च[6] वाक्यार्थद्वयस्य साम्यं व्यञ्जनव्यापारात्। यदा तु—पदसमूह एव शब्दशक्त्या मेघवृत्तान्तं व्यनक्तीति वाक्यार्थः तदा वस्तु-ध्वनिरेव। अलङ्कारध्वनिपक्षे—श्लेषः अर्थाक्षिप्तः,[7] न तु शब्दोपारूढः इति साम्यध्वनिरेवेति न श्लेषविषयता। यदा तु—प्रस्तावादिनियमो न स्यात्, तदा द्वयोरप्यर्थयोः वाच्यत्वे श्लेषालङ्कार एव, न तु शब्दोत्थ-वस्त्वलङ्कारध्वनित्वं इति॥

## मधुमती

नन्वत्र श्लेषसत्त्वात् नोपमाकल्पनम्, अत आह—**प्राकरणिकेति**। उभयतात्पर्यग्रह एव श्लेषसम्भवात्, अत्र च तदभावात् न श्लेषः इति भावः॥

---

1 'अप्राकरणिकप्राकरणिकयोः'–क. 2 'भवत्येव'–घ. 3 'धाशक्तेः'–ग. 4 'एवेति'–ग. 5 'नियमितैः'–ग. 6 'न्तोचित'–घ. 7 'श्लेषार्थाक्षिप्तः'–ग.

(सभङ्गे पदे शब्दशक्तिमूलविरोधाभासध्वनिः—)

तिग्मरुचिरप्रतापो
विधुरनिशाकृद्विभो! मधुरलीलः।

---

### सङ्केतः

**देवेनेति**। एकत्र प्रस्तावात् त्वयेति, अन्यत्र तु इन्द्रेणेति। 'इन्द्रो वै वर्षति' इत्युक्तेः[1]। एवं 'भद्रात्मनः' इत्यादिष्वपि ऊह्यम्॥

**तिग्मेति**। अत्र समासे सति ऐकपद्यं विरोधत्यागश्च, असमासे तु द्विपदत्वं विरोधश्च। तथाहि—यः **तिग्मरुचिः** सूर्यः, सः कथं **अप्रतापः**?। यो **विधुः** चन्द्रः, स कथं **अनिशाकृत्**?। यश्च **मधुः**

### मधुमती

न केवलं श्लिष्टपदैरेव उपमैव व्यज्यते इति नियमः। अपि तु अश्लिष्टपदैरपि अलङ्कारान्तरमपि व्यज्यते इति दर्शयितुमाह—**तिग्मेति**। नन्वत्र विरोधाभासः वाच्य एव न कथम्? अत आह—**अत्रेति**। तथा च—प्रथमं **ऐकपद्येन** प्राकरणिकार्थप्रतीतौ सत्यां, ततः **द्विपदताऽऽभासेन विरोधाभासव्यञ्जनमिति**। अत एव पदपरिवृत्त्यसहत्वेन शब्दशक्तिमूलकताऽपि। न हि **तिग्मरुचिरप्रतापः** इत्यत्रेव 'तीक्ष्णशोभनप्रतापः' इत्यत्रापि द्विपदताप्रतिसन्धानं विरोधाभासो वा स्फुरति इति तात्पर्यम्॥

---

1 उक्तिः—लोकोक्तिः। 'तुराषाण्मेघवाहनः' इति श्रुतकम्।

मतिमानतत्त्ववृत्तिः

प्रतिपदपक्षाग्रणीः विभाति भवान् [1]॥ ५६ ॥

अत्र—एकैकस्य पदस्य द्विपदत्वे [2] विरोधाभासः ॥

(अभङ्गे पदे शब्दशक्तिमूलविरोधाभासध्वनिः—)

अमितः समितः प्राप्तैः उत्कर्षैः हर्षद [3] प्रभो!

अहितः सहितः साधुयशोभिरसतामसि [4] ॥ ५७ ॥

अत्रापि विरोधाभासः ।

---

सङ्केतः

चैत्रः, सः कथं अलीलः? । यश्च मतिमान्, सः कथं अतत्त्ववृत्तिः? । या च[5] प्रतिपत्, सा कथं अपक्षाग्रणीः—पक्षस्यानादिः?—इति विरोधः । तत्र—जनं विधुरयन्तीति विधुराः रिपवः, तेषां निशाकृत्—मृत्युकृत् । मतौ माने तत्त्वे च वा, मतिमानतत्त्वानि वा, मतिमाने तत्त्विकी वा[6] वृत्तिः यस्य सः तथा । प्रतिपदं प्रतिप्रयोजनम् । पक्षस्य निजस्य । अन्यत् स्पष्टम्—इति विरोधत्यागः ॥

अमित इति । समितः—सङ्ग्रामात्, प्राप्तैः उत्कर्षैः अहितानां हर्षदः—प्रीतिच्छेदी । अत्र दृष्टान्तद्वयेऽपि द्योतकस्य 'अपि' शब्दादेः

## मधुमती

अमित इति । अत्र अमित-समितयोः अहित-सहितयोश्च विरोधाभासः॥

---

1 'हे राजन्! त्वं शत्रुषु तीक्ष्णं सुहृत्सु मनोहरं च प्रतापं सम्पाद्य, नीतिविधुराणां मरणरूपां निशामेवोत्पाद्य मनोज्ञव्यापारवान् सन्मतौ सन्माने च तात्त्विकवर्तनयुक्तः पदेपदे स्वपक्षाग्रनायकत्वं वहंश्च राजसे इत्येकोऽर्थः । अन्यश्च—चण्डभानुरप्यातपशून्यः, विधुरपि अनिशाकृत्, वसन्तोऽपि अलीलः, मतिमानपि अपरमार्थप्रवृत्तिः, प्रतिपत्तिथिरपि पक्षाऽऽदितिथित्वाभाववान् इति । 2 ज्ञाते इति शेषः । 3 'हर्षदः'—क. 4 हे आनन्ददायक प्रभो! सङ्गरात् प्राप्तैः जयकीर्तिभिः अपरिच्छिन्नतया सर्वतो व्याप्तः त्वं खलानां हितनाशकः साधुभिः यशोभिर्युक्तश्च असि इत्यर्थः । 5 'यश्च'—घ. 6 'मानं तात्त्विका वा'—ग.

(शब्दशक्तिमूलव्यतिरेकध्वनिः—)

निरुपादानसम्भारं अभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने[1] ॥ ५८ ॥

---

### सङ्केतः

अभावात्[2] विरोधः व्यङ्ग्यः । अत्र पदयोः भिन्नयोरेव तदर्थयोः[3] विरोधः इति पूर्वोदाहरणात् भेदः ॥

**निरुपादानेति । उपादानं** वर्णकादि । **अभित्तौ**[4] निराश्रयत्वात् **चित्रं** विचित्रं आलेख्यं च[5] । **कला** शिल्पं चान्द्री च । अत्र 'तु'

### मधुमती

**व्यतिरेक इति ।** व्यङ्ग्यः इति शेषः । उपमानात् कारोः उपमेयस्य **शूलिनः** वैलक्षण्यप्रतीतेः । **शूलि-कला-भित्ति**शब्दानां च श्लिष्टत्वात् परिवृत्त्यसहत्वम् । तत्र **शूलं**—विक्रय्यवस्तु,[6] शस्त्रविशेषश्च । **कला**—चतुष्षष्टिकलाः, चन्द्रकला च । **भित्तिः**—कुड्यं, चित्रपटश्च ॥

---

1 लौकिकः चित्रकारो हि वर्णरेखाद्युपादानभूतवस्तूनि संभृत्य भित्तौ चित्रं तनोति । योऽयं सहकारिकारणसमवधाननिरपेक्षमेव अभित्तौ शून्ये विविधविचित्रं इदं जगत् तनोति तस्मै, आलेख्यक्रियाकौशल्येन चन्द्रकलया च श्लाघ्याय, महादेवाय नमः इत्यर्थः । (स्तवचिन्तामणिः) । अत्र चित्रकारापेक्षया शूलिनः उत्कर्षो व्यज्यते इति व्यतिरेकालङ्कारः व्यङ्ग्यः । 2 'अभावात्'–ग. 3 'अत्र भिन्नयोरेव पदार्थयोः'–घ. 4 'अभितः'–ग. 5 'च' इति नास्ति–ग. 6 अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः' इति भारते । तत्र–अट्टमन्नं शिवो वेदः इति भाव्यम् ।

**अत्र—व्यतिरेकः । अलङ्कार्यस्यापि ब्राह्मणश्रमण-न्यायेन अलङ्कारता[1] ॥**

---

## सङ्केतः

शब्दादेः द्योतकस्य अभावात् व्यतिरेकः व्यङ्ग्यः ॥

**अलमिति** । अन्यत्र **अलङ्कारतया** दृष्टत्वात्, व्यङ्ग्यत्वे **अलङ्कार्याणा**मपि अलङ्काराणां अलङ्कारव्यपदेशः पूर्वप्रत्यभिज्ञाबलात् ॥

## मधुमती

ननु—अलङ्कारो व्यज्यते इत्यनुपपन्नम्, तस्यैव अलङ्कार्यत्वात्[2] अत आह—**अलङ्कार्यस्यापीति** । यथा हि उत्पाददशायां श्रमणत्वं ब्राह्मणत्वं च नैकत्र विरुद्धं, तथा अत्रापि अनुप्रासाद्यलङ्कारापेक्षया **अलङ्कार्यत्वं**, प्रतीयमान-राजादिविषयरत्यपेक्षया **अलङ्कारत्व**मपि न विरुद्धम् । न त्वत्र भूतपूर्वगतिः । **ब्राह्मणश्रमण(क)न्यायेन** इत्याकरविरोधात् । श्रमणत्वदशायामपि ब्राह्मणत्वा-परित्यागात् । भूतपूर्वगतेस्तु साम्प्रतिकासत्त्वमादाय प्रवृत्तेः । **प्राञ्चस्तु**—अत्रापि भूतपूर्वगतिमेव वदन्ति । तच्च प्रतीत्यनुरोधेन । उपमाव्यञ्जनदशायां तदलङ्कारत्वाननुभवात्, किन्तु तदनन्तरमेव, राजादिरतिव्यञ्जनदशायामनुभवा-दिति तात्पर्यात् ॥

---

1 तथाच—कश्चित् ब्राह्मणः कालान्तरे श्रमणो बौद्धसंन्यासी भवेदपि, पूर्वप्रत्यभि-ज्ञया तस्मिन् यथा ब्राह्मणत्वव्यपदेशः, तद्वत् अत्रापि इदानीं अलङ्कार्यस्यापि अलङ्कारत्वावस्थाप्रत्यभिज्ञाबलात् अलङ्कारत्वव्यपदेशः इति भावः । 2 व्यङ्ग्यत्वे प्राधान्यादवश्यम्भावादिति भावः ।

वस्तुमात्रं यथा—

(प्राकृते—शब्दशक्तिमूलकवस्तुध्वनिः—)

पंथिअ! ण एत्थ सत्थरं [1]
अत्थि मणं [2] पत्तरत्थले गामे ।
उण्णअपओहरं पेक्खिऊण
जइ वससि ता वससु ॥ ५९ ॥

[पथिक! नात्र स्रस्तरं [3]
अस्ति [4] मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य [5]
यदि वससि तदा वस [6] ॥ ५९ ॥

---

## सङ्केतः

पन्थिअ इति । तृणादिशय्या—स्रस्तरम् [7] । मणं—मनागपि । उन्नतं पयोधरं मेघं प्रेक्ष्य स्रस्तराद्यभावेऽपि यदि वससि तत् वस । अत्र स्रस्तरनिषेध—प्रस्तरोन्नतपयोधरादिशब्द[8]शक्तिजं — 'प्रहरचतुष्टयोपभोगात् नात्र निद्रातुं लभ्यते' इति, 'सर्वे ह्यत्र अविदग्धाः' इति, 'तत् उन्नत-

## मधुमती

ननु वाक्यव्यञ्जकतोदाहरणप्रकरणे श्लिष्टपयोधरपदमात्रव्यञ्जकत्वोदा-

---

1 'सत्थरअं'—घ. 2 'मणा'—क. 3 'स्रस्तरः'—ख. 'संस्तरं'—ग. 4 'अत्र'—क. 5 'दृष्ट्वा'—क. 6 वर्षर्तौ रात्रौ निद्रार्थं शयनीयार्थिनं कंचन युवानं प्रति स्वैरिण्याः वचनमिदम् । पाषाणमयप्रदेशेऽस्मिन् ग्रामे अल्पमपि कटाद्यास्तरणं नास्ति । तृणस्यैव दुर्लभत्वात् । वार्पुकं मेघं दृष्ट्वा यदि वासेच्छा, तदा वसेत्यर्थः । अरसिकजनबहुलेऽस्मिन् ग्रामे कोऽपि संभोगयोग्य एव न लभ्यते, मदीयमुन्नतं कुचं दृष्ट्वा यदि संभोगेच्छा तत्रापि वा स्यात् तदा वस इति तु व्यज्यते । (गाथासप्तशती)। पदद्वयश्लेषमहिम्ना व्यङ्ग्यार्थलाभोऽत्र । 7 'स्रस्तरः'—ग. 8 'शब्द' इति नास्ति—घ.

अत्र 'यद्युपभोगक्षमोऽसि तदा आस्स्व' इति व्यज्यते ।

(संस्कृते—शब्दशक्तिमूलकवस्तुध्वनिः—)

शनिरशनिश्च तमुच्चैः
निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् ।
यत्र[1] प्रसीदसि पुनः
स भात्युदारोऽनुदारश्च[2] ॥ ६० ॥

---

सङ्केतः

पयोधरां मां आलोक्य उपभोक्तुं यदि वससि तदा आस्स्व' इति च वाक्य[3]-व्यङ्ग्यं उपभोगक्षमोऽसि इत्यनेन क्रोडीकृत्य दर्शयति—अत्र यद्युप-भोगेति । वाच्यबाधेन च व्यङ्ग्यस्य स्थितत्वात्, तयोः मिथः असङ्गत्या नोपमानोपमेयभावः इति नालङ्कारो व्यङ्ग्यः, किन्तु वस्त्वेव ॥

'पंथिअ ! ण एत्थ[4] सत्थरअं ।'

[पथिक ! नात्र शास्त्ररतम् (शस्त्ररतम्) ।]

इति पाठे तु सत्थरअं=शस्त्ररतम् । यदि वा—शास्त्रोक्तं च तत् रतं च शास्त्ररतम् । तच्च नास्ति, ग्राम्याणां अविदग्धत्वात् इति । अस्मिन् पाठे च अयं गुणः—श्लिष्टशब्दानां बहुत्वात् वाक्यत्वेन[5] वाक्यप्रकाश्यत्वमिति । पत्थरत्थले इत्युक्त्या एकान्ततासूचनाऽपि[6] ॥

व्यत्ययेनेति । शनिरशनिः इत्यादिरूपेण शब्दद्वारकेणैव 'कार्यं निहनन-भानात्मकं त्वदनुवर्तनार्थमेव' इति उत्प्रेक्षानुगृहीतं वस्तुस्वभावं कुरुते इति व्यज्यते । अशनिः वज्रम् । अनुदारः अनुगतदारोऽपि ।

---

1 'यस्मै'–क. 2 हे नरेन्द्र ! यस्मै त्वं कुप्यसि, तं वराकं शनैश्चरः वज्रं च निहन्ति । यस्मिन् पुनः प्रसीदसि, सः औदार्यवान् अनुकूलदारसहितश्च भाति इत्यर्थः । 3 'वाच्य'–ग. 4 'इत्थ'–ग. 5 'वाक्यत्वे'–ग. 6 'सूचापि'–घ.

अत्र 'विरुद्धावपि त्वदनुवर्तनार्थं एकं कार्यं कुरुतः' इति व्यत्ययेन व्यज्यते[1]॥ ३८ ॥

**अर्थशक्त्युद्भवोऽप्यर्थः[2]**
**व्यञ्जकः सम्भवी स्वतः ।**
**प्रौढोक्तिमात्रात् सिद्धो वा**
**कवेः, तेनोम्भितस्य वा ॥३९॥**

---

## सङ्केतः

चकारश्चात्र विरोधवाचीति विरोधो वाच्य एव, न तु व्यङ्ग्यः इत्याहुः । तेन नेदं[3] वस्तुध्वनौ द्वितीयार्धमुदाहरणम्[4] ॥ ३८ ॥

तेनोम्भितस्यवेति । तेन कविना उम्भितस्य निबद्धस्य वक्तुः[5] ॥

## मधुमती

हरणं अयुक्तं इति अस्वरसादाह—शनिरिति । अत्रेति । विरुद्धावपि विरुद्धतया प्रतीतावपि ॥ ३८ ॥

---

1 'इति ध्वन्यते'–क. 2 'वेप्यर्थे'–क. 3 'इत्याकूते नेदं'–ग. 4 इत्याहुः 'तेन इदं वस्तुध्वनौ द्वितीयमुदाहरणम्'–घ. 5 'वक्तुः' इति नास्ति–ग.

**वस्तु वाऽलङ्कृतिर्वेति**
**षड्भेदोऽसौ; व्यनक्ति यत् ।**
**वस्त्वलङ्कारमथवा**
**तेनायं द्वादशात्मकः ॥४०॥**[1]

अर्थो द्विविधः—इदंप्रथमकल्पितः स्वतस्सम्भवी चेति । तत्र—[2]स्वतस्सम्भवी—न केवलं भणिति-

---

### सङ्केतः

**इदंप्रथमकल्पित इति** । अयं प्रथमः, स चासौ कल्पितः इति—इदंप्रथम-कल्पितः । कविब्रह्मसृष्टः इत्यर्थः । **तत्र स्वतः इति** । प्रागनुक्तोऽपि स्वतस्सम्भवी व्यापकत्वात्[3] पूर्वं व्याख्यातः । सूत्रक्रमापेक्षया वा प्रथमं व्याख्यातः । अपरः—**इदंप्रथमकल्पितः** । अत्र प्रौढोक्तिनिमित्तत्व[4]-

### मधुमती

इदानीं अर्थशक्तिमूलं विभजते—**अर्थेति** । तथा च त्रिप्रकारके अर्थे प्रत्येकं **वस्त्वलङ्कारयोः** व्यञ्जकतया **षट् व्यञ्जकानि** । तेषां च

---

1 यत्–यतः व्यञ्जकः अर्थोऽपि–स्वतः बहिःप्रसिद्धः, कविप्रतिभामात्रकल्पितः, कविकल्पितस्य नायकादेः प्रौढोक्त्या कल्पितः इति त्रिविधः ; सोऽपि प्रत्येकं वस्तुरूपः अलंकाररूपो वा इत्येवं असौ षड्विधोऽपि वस्तु व्यनक्ति अथवा अलंकारं व्यनक्ति ; तेन हेतुना अयं अर्थशक्तिमूलः द्वादशात्मकः इत्यन्वयः । प्रौढः—प्रकर्षेण ऊढः—सम्पादयितव्येन वस्तुना प्राप्तः कुशलः । एवं समर्पयितव्यवस्तुचित्रणोचिता उक्तिरपि प्रौढेत्युच्यते ॥ उम्भितः–वर्णितः ॥ 2 अर्थः इत्यारभ्य एतत्पर्यन्तं नास्ति–क. 3 'ज्ञापकत्वात्'–घ. 4 'निर्मितत्व'–ग.

मात्रनिष्पन्नः, यावत्[1] बहिरप्यौचित्येन संभाव्यमानः; कविना प्रतिभामात्रेण बहिः असन्नपि निर्मितः,[2] कविनिबद्धेन वा वक्त्रा—इति द्विविधोऽपरः; इति—त्रिविधः। वस्तु वा अलङ्कारोऽसौ इति—षोढा व्यञ्जकः। तस्य[3] वस्तु वा अलङ्कारो वा व्यङ्ग्यः इति—द्वादशभेदः अर्थशक्त्युद्भवो ध्वनिः ॥

---

## सङ्केतः

मात्रेणैव साध्यसिद्धेः अन्यभेदद्वयकथनं प्रपञ्चार्थम्। यतः स्वतस्सम्भव्यप्यर्थः कविप्रौढोक्त्यैव जीवति, कविप्रौढोक्तिरेव च तन्निबद्धप्रौढोक्तिः इति ॥

## मधुमती

प्रत्येकं सजातीयविजातीयव्यङ्ग्यभेदात् द्वादशविधत्वमित्यर्थः। ननु स्वतस्सम्भवी तदन्यश्चेति द्विविध एवार्थः, तत् कुतः त्रैविध्यम्? अत आह—**द्विविधोऽपरः इति**। तथाच स्वतस्सम्भव्यन्यत्वेन[4] एकोऽपि, विवक्षावशात् उक्तरूपद्वयवत्तया द्विविधः **इति, त्रिविधः** इत्यर्थः ॥

**ननु**—कविनिबद्धभणितिनिष्पन्नोऽपि कविभणितिनिष्पन्न एव-इति चेत्—सत्यम्। प्राधान्याप्राधान्याभ्यां कविभणितेः भेदं विवक्षित्वा त्रित्वाभिधानात्। स्वतन्त्रेच्छायाः अपर्यनुयोज्यत्वात्। **एतेन**—कविनिबद्धवक्तृभणितिनिष्पन्नवत् कविनिबद्धनिबद्धवक्तृभणितिनिष्पन्नस्यापि—

---

1 'यत्'—ख. 2 प्रौढोक्तीत्यस्यैव विवरणं प्रतिभेति। 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।' अर्थस्यासत्त्वेऽपि शब्दः भावविशेषं जनयितुं क्वचित् समर्थ एव भवति। 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति कुमारिलः ॥ 'प्रतिभानमात्रेण निर्मितः'—क. 'प्रौढोक्तिमात्रेण निर्मितः'—ख. 3 षड्विधस्यापि इत्यर्थः। 4 'व्यनेकत्वेन'—च.

## मधुमती

"हृदये वससीति मत्प्रियं
यदवोचः तदवैमि कैतवम् ।
उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ॥"[1]

इत्यादौ चमत्कारित्वात्, तदपि कुतो नोक्तम्? इत्यनुयोगः निरवकाशो द्रष्टव्यः । कविनिबद्धफणितिनिष्पन्नत्वेन अस्वतन्त्रकविफणितिनिष्पन्नत्वस्य उक्तत्वात्, तस्य च तत्रापि भावात् । एवं—अर्थस्य अयोनित्वं अन्यच्छाया-योनित्वं च कविप्रौढोक्तिनिष्पन्नत्व—स्वतस्सम्भवित्वाभ्यां[2] नातिरिच्येते । यतः प्रमाणान्तरानवगतं कविप्रतिभासिद्धमेव अयोनीत्युच्यते, प्रमाणान्तरावगतं स्वतस्सम्भव्येव च अन्यच्छायायोनीति । अतः न तदादाय आधिक्यं शङ्क्यम् ॥

कचित्तु—'तेनायं द्वादशात्मकः' इत्यनन्तरं 'अर्थो द्विविधः—इदंप्रथमकलितः स्वतस्सम्भवी चेति' इति वृत्तौ अधिकः पाठः दृश्यते ॥

यद्यपि काव्यस्य सालङ्कारत्वात् वस्त्वलङ्कारयोः एकसत्वे[3] अपरस्यापि तथात्वं आवश्यकम् । तथापि प्राधान्यमाश्रित्य अयं विभागः इति बोद्धव्यम् ॥

इदं पुनरत्रावधातव्यम्—कविसमयसिद्धं असत्यमपि कविप्रौढोक्ति-सिद्धमित्यादरणीयम्, कीर्तौ शौक्ल्यवितरणवत्, अकीर्तौ श्यामत्ववत्, नृप[4]प्रयाणे रजसा दिशो व्याप्तिवत्,[5] भूकम्पे भयादिवच्च । व्यवहारस्तु

---

1 अयि प्राणकान्त! पूर्वं मत्प्रीतये यदुक्तं भवता 'कान्ते! त्वं सदा मम हृदये एव वससि' इति तत् मिथ्येति मन्ये। इदं केवलं रञ्जनार्थं उक्तं स्यात्। अन्यथा—त्वयि नष्टशरीरेऽपि त्वदन्तर्गता रतिरहं कथं अक्षतशरीरा वस्तुं शक्नोमि? इति रतिः विलपति। (कुमारसम्भवे ४-१)। 2 'त्वं च स्वतस्संभवित्वकविप्रौढोक्ति-निष्पन्नत्वानिष्पन्नत्वाभ्याम्'—च. 3 'एकत्वे'—ज. 4 'आधुनिकनृप'—च. 5 'व्याप्तिवत्' इति नास्ति—ज.

क्रमेण उदाहरणानि—(स्वतस्सम्भविना वस्तुना वस्तुनः व्यक्तौ—)

अलस[1]सिरोमणि धुत्ताणं
अग्गिमो पुत्ति ! धणसमिद्धिमओ ।
इअ भणिएण णअंगी
पप्फुल्लविलोअणा जाआ ॥ ६१ ॥

[अलसशिरोमणिः धूर्तानां अग्रिमः पुत्रि ! धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥ ६१ ॥][2]

---

## सङ्केतः

अलसेति[3] । समिद्धिमओ समृद्धिमयः समिद्धमदो वा । अन्यासां अप्रौढस्त्रीणां नीरसोऽपि, मम चातुर्यात् वशीभूतः इत्यभिप्रायः । अत्र गाथावस्तुना 'ममैव भोग्यः' इति वस्तु व्यज्यते ॥

## मधुमती

समुचित एव वर्णनीयः । अन्यथा असत्यताप्रतिभासेन 'नायकवत् वर्तितव्यम्' इत्याद्युपदेशो काव्यं न पर्यवस्येत् । अत एव व्यवहारे कविसमयोऽपि नास्त्येव । तत्र च स्वरूपायोग्यता[4]निबन्धनः असत्यताप्रतिभास एव उपदेशविरोधी । तेन—वीरचरिते अन्यथा वर्णनेऽपि, वालिवधे असत्यताप्रतिभासेऽपि न दोषः । प्रत्यक्षतो युध्यमानस्य वालिनो वधेऽपि दाशरथेः स्वरूपयोग्यतासत्त्वात्[5] इति ॥

---

1 'अरस'–क. अरसाः—अरोचकिनः । 2 काचन वेश्यापुत्री 'स्वाभिलाषानुगुणं कामुको लब्धः' इति हृष्टा वर्तते इति तन्मातरं उद्दिश्य कथयति कुट्टनी—अलसेति । अलसेत्यनेन—मुहुर्मुहुः परित्यज्य ग्रामान्तरं न गच्छतीति, धूर्तेत्यनेन—रतिकलासु अतीव विदग्धः इति, धनेत्यनेन—बहु प्रददातीति च ध्वनिना अभिज्ञाय यौवनसम्पदा पयोधरभारेण नताङ्गी हर्षविकसितनयना संवृत्ता इत्यर्थः । (गाधासप्त-९७०) । 3 'अरसेति'–ग. 4 'पयोग्यता'–च. 5 'योग्यत्वात्'–ज.

अत्र—'ममैव उपभोग्यः'[1] इति वस्तुना वस्तु व्यज्यते ॥

(स्वतःसम्भविना वस्तुना अलङ्कारस्य—)

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि[2] रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः ! शपामि यदि किञ्चिदपि स्मरामि[3] ॥ ६२ ॥

---

सङ्केतः

धन्यासीति । हे सख्यः ! शपामि शपेऽहम् । अत्र शपामि–शपेवा[4]चरामि इति व्युत्पत्तिः । यद्वा—'त्वं' इत्यध्याहारेण आक्रोशामि इत्यर्थः[5] । अन्यथा परस्मैपदं चिन्त्यम्[6] । रतान्तराणि रतविशेषाः । धन्याऽसि, सख्यः इत्यनयोः अर्थासङ्गत्यालोचने 'सख्याः शपामि' इत्येव युक्तः पाठः स्यात् । अत्र च—'सख्याः' इति च षष्ठ्यन्तम् । यदि वा 'सखि ! आः !' इति भिन्नं व्याख्येयम् ॥

---

1 'ममैव भोग्यः'–क. प्रफुल्लविलोचनत्वरूपवस्तुना अतिविदग्धायाः ममैव उपभोग्यः इति वस्तु व्यज्यते इत्यन्वयः । 2 'चाटुवचनानि'–क. 3 रात्रिकृत-प्रियसङ्गमवृत्तान्तं कथयन्तीं सखीं प्रति काचिदेवं वदति । सखि ! या त्वं भर्तुरन्यस्य अतिदुर्लभस्य प्रियस्य सङ्गमे, तथा मनः प्रविलापयत्सु रतिप्रभेदेषु च विश्वासपूर्णानि बहूनि चाटुवाक्यान्यपि कथयसि, सा त्वमेव धन्या । हे सख्यः ! अहं तु प्रियेण नीवीं प्रति करे व्यापारिते न किञ्चिदपि स्मरामि, यदि स्मरामि, तदा शपामि इति । (शार्ङ्गधरपद्धतिः) । 4 'शप इवा'–घ. 5 'मि इत्यपि'–ग. 6 शप उपालम्भे (पा. सू. १-३-२१) इत्यनेन आत्मनेपदं विहितम् । तत्र उपालम्भो नाम शरीरस्पर्शपूर्वकं शपथकरणम् । प्रकृते स्पर्शस्य अविवक्षितत्वात् शप उपलम्भने इति परस्मैपदमेव इत्याहुः श्रीधरार्याः ।

अत्र—'त्वं अधन्या, अहं तु धन्या'[1] इति व्यतिरेकालङ्कारः ॥

(स्वतस्सम्भविना अलङ्कारेण वस्तुनः—)

दर्पान्धगन्धगजकुम्भकपाटकूट-
सङ्क्रान्तिनिघ्न[2]घनशोणितशोणशोचिः ।[3]
वीरैः व्यलोकि युधि कोप[4]कषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः[5] ॥ ६३ ॥

अत्र—उपमाऽलङ्कारेण 'सकलरिपुबलक्षयः[6] क्षणात् करिष्यते' इति वस्तु ॥

---

सङ्केतः

दर्पान्धेति । कुम्भाः एव कपाटानां कूटः समूहः कूटा इव उन्नतप्रदेशाः वा । तस्मिन् तेषु वा सङ्क्रान्तेन सङ्क्रमणेन यत् निघ्नं खड्गस्य परवशं घनशोणितं तेन शोणशोचिः । उपमाऽलङ्कारेणेति । विशेषण-बलसमुत्थेनेति शेषः । तेन वाक्यवाच्यत्वं लभ्यते ॥

---

1 त्वं हि नैव रसपरवशा, अहं तु रसाब्धिमग्नेति भावः । 2 'कवाटकोटि-सङ्क्रान्तनिघ्न'–क. 3 'रोचिः'–ख. 4 'रोष'–क. 5 राज्ञो वर्णनमिदम् । यस्य राज्ञः करे वर्तमानः खड्गः युद्धे मदोद्रिक्त-गन्धाख्यहस्तिविशेषकुम्भस्थल-मध्यभागसमूहेषु निपतनेन तदधीनतया लिप्तनिबिडरुधिररक्तकान्तिः सन्, कोपाति-शयारुणद्युतिः दुर्गाकटाक्ष इव वीरभटैः दृष्टः तादृशोऽयं वीरो राजेति । (कप्फि-नाभ्युदये १-३७) । 6 'रिपुक्षयः'–क.

(स्वतस्सम्भविना अलङ्कारेण अलङ्कारस्य—)

गाढकान्तदशनक्षतव्यथा-
सङ्कटात् अरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयत्
निर्दशन् युधि रुषा निजाधरम् [1] ॥ ६४ ॥

अत्र—विरोधालङ्कारेण[2] 'अधरनिर्दशनसमकालमेव शत्रवः व्यापादिताः' इति तुल्ययोगिता,[3] 'मम क्षत्याऽपि

---

सङ्केतः

गाढेति । अत्र यो हि निजमपि अधरं दशति स कथं परेषां अधरान्मोचयति ? इति विरोधः । परं तु विरोधद्योतकाभावात् अस्य वाच्यता चिन्त्या । केचित्तु—निजाधरं इत्यत्र अपिशब्दगर्भितं विग्रहं कुर्वाणाः विरोधस्य वाच्यतामाहुः । परं अयं समासः स्यान्न वा ? इति स्वयमूह्यम् । व्याख्यान्तरमप्यस्ति ॥

अत्र अधरमोचनोक्तिभङ्ग्या 'शत्रवो व्यापादिताः' इति पर्यायोक्त्यलङ्कारो वाच्यः । विरोधस्तु व्यङ्ग्यः । मम क्षत्याऽपीति । अत्र

मधुमती

अत्रेति । विरोधालङ्कारेण । वास्तविकविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः । स्वाधरनिर्दशनवैरिवनितोष्ठमोचनयोः कार्यकारणयोः वैयधिकरण्येन निर्देशात्, विरोधस्य स्फुटत्वात् ॥

तुल्ययोगितेति । अत्र तुल्ययोगितापदेन समुच्चयालङ्कारः अभि-

---

1 इदमपि कस्यचित् राज्ञो वर्णनम् । यो राजा युद्धे क्रोधेन स्वकीयं अधरं दन्तैः खण्डयन् (शत्रून् मारयित्वा) शत्रुरमणीनां अधरप्रवालदलानि तदीयभर्तृकरिष्यमाणदन्तव्रणपीडाजन्यात् असह्यात् सङ्कटात् मोचितवान् तादृशोऽयं राजेति । (?)
2 अधरनिर्दशनोन्मोचनयोः विरुद्धयोः क्रिययोः एकविषयकत्वेनैककर्तृकत्वात् विरोधालङ्कारः । 3 अधरदशनशत्रुव्यापादनयोः वीरानुभावत्वेन प्रकृतयोः एककालोपाधिसंबन्धेन तुल्ययोगिता ।

अन्यस्य क्षतिः निवर्तताम्[1] इति तद्बुद्धिः[2] उत्प्रेक्ष्यते इति—इत्युत्प्रेक्षा च। एषु[3] उदाहरणेषु स्वतस्सम्भवी[4] व्यञ्जकः ॥

(कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुनः—)

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्[5]।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्काः
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति[6] ॥ ६५ ॥

---

## सङ्केतः

अपिशब्दः प्रश्नार्थे, युक्तमेतदित्यर्थे, लेशार्थे वा व्याख्येयः। **निवर्ततां इति** इत्यादौ—एकः इतिशब्दः स्वरूपे, द्वितीयः समाप्तौ, तृतीयः प्रकारे[7] इति ध्येयम् ॥

**कैलासस्येति। प्रथमे प्रधाने। स्रस्तापाङ्गाः वक्रीकृतनेत्रो-**

## मधुमती

मतः। अधरनिर्दशन-वैरिव्यापादनक्रिययोः यौगपद्यप्रतीतेः ॥

---

1 'निवर्त्यताम्'–क. 2 नृपबुद्धिरित्यर्थः। 3 चतुर्षु उदाहरणेषु। 4 'एषु चतुर्धा स्वतस्सम्भवी'–क. 5 'त्वदीयां'–ख. 6 कैलासपर्वतस्य महोन्नते शृङ्गे विहरन्तीभिः अप्सरोभिः गीयमानां तत्रत्यवेणुजालप्रतिध्वनितां शुभ्रां यदीयां कीर्तिं श्रुत्वा, दिग्गजाः सरसकमलिनीमृणालशङ्कया चलितनेत्रप्रान्ताः, कर्णयोः प्रान्तभागेषु शुण्डां मुहुर्मुहुः व्यापारयन्ति, तादृशनिर्मलकीर्तिमान् अयं राजेति राजवर्णनमिदम्। (?) 'हस्तमावर्जयन्ति'–ख. 7 'द्वितीयः प्रकारे, तृतीयः समाप्तौ'–ग.

अत्र—वस्तुना[1] 'येषामप्यर्थाधिगमो नास्ति तेषामपि[2] एवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिः' इति वस्तु ध्वन्यते ॥

(कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारस्य—)

केसेसु बलामोडिअ तेण[3]
समरम्मि[4] जअसिरी गहिआ ।
जह कंदराहिं विहुरा तस्स
दिढं[5] कंठअम्मि संठविआ ॥ ९६ ॥

[केशेषु बलात्कारेण तेन समरे[6] जयश्रीः गृहीता ।
यथा कन्दराभिः विधुराः तस्य दृढं कण्ठे स्थापिताः[7] ॥]

---

## सङ्केतः

पान्ताः । एवमादिबुद्धीति । न हि गजाः कीर्तिं बिसिनीत्वेन शङ्कन्ते, पशुत्वात् । परं[8] कविना प्रौढोक्त्या 'त्वत्कीर्तिं तथा शङ्कन्ते इत्युक्तम् । त्वत्कीर्तिः इत्यत्र त्वच्छब्दो न युक्तः । पश्चात् आमन्त्रणपूर्वं राज्ञः अस्तूयमानत्वात् । अयं चार्थः यदीयां इति पदेन प्रतिष्ठितः । 'तत्कीर्तिः' इति तु युक्तः पाठः ॥

केसेसु इति । बलामोडी बलात्कारः । विधुराः रिपवः ।

---

1 धवलतमकीर्तिसंदर्शनजनितहस्त्यावर्जनरूपेण वस्तुना । 2 तिरश्चामपीत्यर्थः । 3 'क्ष तह तेण'–ख. 4 'रणम्मि'–क. 5 'दृढं'–क. 6 'तथा तेन रणे'–ख. 7 तेन च राज्ञा रणे जयश्रीः बलात्कृत्य केशेषु गृहीता । शत्रवः केचन गृहीताः इति यावत् । राजकृतमिदं जयश्रीरूपनायिकाकेशग्रहणं विलोक्य गुहा अपि मदनोद्दीपितमनसः शत्रूणां कण्ठालिङ्गनं कुर्वन्तीव, शत्रवः प्रपलाय्य गुहाः समभिगम्य कण्ठे संस्थापितप्राणाः जाताः इत्यर्थः । तस्य विधुराः । (गाथासप्त ९७१) । 8 'तथापि'–ग.

अत्र—'केशग्रहणावलोकनोद्दीपितमदनाः इव कन्दराः तद्विधुरान् कण्ठे गृह्णन्ति'[1] इत्युत्प्रेक्षा, 'एकत्र सङ्ग्रामे विजयदर्शनात् तस्य अरयः प्रपलाय्य[2] गुहासु तिष्ठन्ति' इति काव्यहेतुः अलङ्कारः, 'न पलाय्य गताः तद्वैरिणः, अपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्ति' इति अपह्नुतिश्च ॥

---

## सङ्केतः

काव्यहेतुरिति। काव्यलिङ्गं नाम अलङ्कारः। अत्र हि—एकत्र रणे विजयदर्शनं रिपूणां गुहावस्थानवाक्यार्थतया हेतुः। ततः राज्ञः सकाशात्। कन्दराः इति। गुहाभिः ते[3] अङ्गीकृताः, न तु नष्टाः इति भावः। अत्र वस्तुना उत्प्रेक्षाकाव्यहेत्वपह्नुतिरूपालङ्कारत्रयं ध्वन्यते इति योगः॥

## मधुमती

पितुचरणास्तु—तुल्ययोगितापदेन[4] कार्यकारणयोः तुल्यकालताप्रतीतेः, 'कार्यकारणयोर्यश्च' इत्यनेन लक्षिता अतिशयोक्तिः अत्र अभिमता। न च कार्यस्य पूर्वकालाभिधानेन भाव्यमिति वाच्यम्। समान[5]कालाभिधानेऽपि अविरोधात्, कारणगतकार्यशीघ्रकारित्वबोधलक्षणप्रयोजनस्य अविशेषात् इति वदन्ति॥

---

1 'अगृह्णन्'–क. 2 इदं पदं नास्ति–ख. 3 'तु'–ग. 4 'तावलेन'–च. 5 'भिधाने भासमान'–ज.

(कविप्रौढोक्तिसिद्धेन अलङ्कारेण वस्तुनः—)

गाढालिंगणरहसुज्जअम्मि[1]
दइए लहु[2] समोसरइ।
माणंसिणीण[3] माणो
पीलणभीअव्व[4] हिअआहि[5] ॥ ६७ ॥

[गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।
मनस्विनीनां[6] मानः पीडन[7]भीत इव हृदयात्[8] ॥]

अत्र—उत्प्रेक्षया 'प्रत्यालिङ्गनादि तत्र विजृम्भते'[9] इति वस्तु ॥

---

## सङ्केतः

अत्र उत्प्रेक्षयेति। हृदयात् पीडनभीतः इवेतिरूपया इत्यर्थः। अयं भावः—यदि कामिनी प्रत्यालिङ्गनादि न कुरुते, तदा कथं पीडनम्? तदभावे च न भीतत्वोत्प्रेक्षणम्। प्रत्यालिङ्गनादेश्च तस्याः मानः अपसृतः—तत्र तावत् एतौ मत्तत्वात् मिथः स्वं पीडयतः, ततः अहं किमिति अन्तराक्रियः?[10] इति मानापसरणकार्यत्वात् तस्य—इति भावः[11]॥

## मधुमती

प्रत्यालिङ्गनेति। एककर्तृकालिङ्गने पीडायाः अभावात् इति भावः॥

---

1 'सुज्जु अम्मि'–क. 2 'दइअम्मिलहुं'–ख. 3 'णीइ' 'णीए' 'णीणं'–ख. 4 'पेल्लणभीओव्व'–क. 5 'हिअआदे'–ख. 6 'मनस्विन्याः'–क. 7 'प्रेरण'–ख. 8 मानवतीं प्रति मानभङ्गाय बोधयति काचित्—प्रिये अन्यासङ्गिनि सति स्त्रीणां ईर्ष्याकृतः कोपः मान इत्युच्यते। अयि! सखि! कान्ते परिरम्भणोन्मुखे हृदयस्थितस्य स्वस्य पीडनशङ्कयेव मनस्विनीहृदयात् मानः झटिति निःशेषमपसरति, इति। (गा. सा. ९३४)। 9 'दिकं जृम्भते'–क- 10 'अन्तरायः'–ग. 11 'भावः इति नास्ति'–घ.

(कविप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्कारस्य—)

जा ठेरं[1] व हसन्ती
कइवअणंबुरुहबद्धविणिवेसा ।
दावेइ[2] भुअणमंडलमण्णं
विअ[3] जअइ सा वाणी ॥ ९८ ॥

[या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलं अन्यदिव[4] जयति सा वाणी[5] ॥]

अत्र—उत्प्रेक्षया 'चमत्कारैककारणम्' 'नवं नवं जगत्' 'अजडासनस्था'[6] निर्मिमीते इति व्यतिरेकः[7] । एष कविप्रौढोक्तिमात्रनिष्पन्नः व्यञ्जकः[8] ॥

---

## सङ्केतः

व्यतिरेकः इति । ब्रह्मा हि जडे जलजे स्थितः सन् अचमत्कारि पुराणं जगत् निर्मिमीते । वाणी तु सचेतनकविवक्त्राब्जस्थिता पूर्वोक्तविपरीतं तत् दर्शयति इति भावः ॥

## मधुमती

कविवदनेति । कविवदने अम्बुरुहे बद्धः विनिवेशः यया सा तथा इति विग्रहः ॥

---

1 'थेरं'–क. 2 'दंसेइ'–ख. 3 'च्चिअ'–ख. 4 'अन्यदेव'–क.
5 या वाणी वृद्धं स्वभर्तारं ब्रह्माणं हसन्तीव, स्वीकृतकविमुखारविन्दवासा इदं भुवनमण्डलमेव नवनवचमत्कारैककारणं अन्यदिव दर्शयति, सा जयति। (गा. सा. ९८२)।
6 'अजरठाब्जासनस्था'–ख. 'अनम्बुजासना'–क. 7 उपमानापेक्षया उपमेयोत्कर्षरूपः व्यतिरेकालङ्कारः इत्यर्थः। 8 'निष्पन्नशरीरः व्यञ्जकः'–क. व्यञ्जकः इति नास्ति–ख.

(कविनिबद्धप्रौढोक्तिसिद्धेन वस्तुना वस्तुनः—)

जे लंकागिरिमेहलासु [1] खलिआ [2] संभोअखिण्णोरई-
फारुप्फुल्लफणावलीकवलणे [3] पत्ता दरिद्दत्तणं ।
ते एण्हिं मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणेवि बहुला [4] तारुण्णपुण्णा विअ ॥६९॥

[ये लङ्कागिरिमेखलासु स्खलिताः [5] सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने [6] प्राप्ताः दरिद्रत्वम् ।
त इदानीं मलयानिलाः विरहिणीनिःश्वाससम्पर्किणः
जाता झटिति शिशुत्वेऽपि बहुलाः [7] तारुण्यपूर्णाः इव [8] ॥]

अत्र—'निःश्वासैः प्राप्तैश्वर्याः वायवः किं किं न कुर्वन्ति ?' इति [9] वस्तुना वस्तु व्यज्यते ॥

---

## सङ्केतः

'किं किं न कुर्वन्ति' इति वस्तु वस्तुना वृत्तोक्तेन व्यज्यते इत्यर्थः ॥

## मधुमती

**निःश्वासैरिति ।** प्रकृताभिप्रायमिदम्, न तु व्यङ्ग्यप्रविष्टम् । क्वचित्तु 'निःस्वाः' इति पाठः । स तु [10] युक्तः ॥

---

1 मेहलाहि'–क. 2 'चलिआ'–ख. 3 'वलिणा'–क. 4 'बहला'–क. 5 'लातश्चलिताः' 'लासु चकिताः'–क. 6 'नात्'–ख. 7 'बहलाः'–क. 8 कर्पूरमञ्जर्यां विचक्षणावाक्यमिदं वसन्तवर्णनरूपम् । ये मलयानिलाः हेमकूटनितम्बात् प्रसृताः, मध्ये सुरतश्रान्तभुजगीविस्तृतोर्ध्वप्रसृतफणावलीपानेनाल्पीभूताः, ते पुनरिदानीं विरहिणीनिःश्वाससंवलिताः सन्तः, शैशवेऽपि संपूर्णयौवना इव परिपुष्टावयवाः जाताः । (कर्पूरमञ्जरी १-१९) । 9 इति वस्तु इत्यन्वयः । 'निस्स्वाः प्राप्तैश्वर्याः किं किं न कुर्वते इति'–क. 10 'न तु'–च.

(कविनिबद्धप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारस्य—)

सहि! विरइऊण माणस्स
　मज्झ धीरत्तणेण आसासं[1]।
पिअदंसणविहलंखलखणम्मि
　सहसत्ति[2] तेण ओसरिअं ॥ ७० ॥

[सखि! विरचय्य मानस्य मम धीरत्वेनाश्वासम्[3]।
प्रियदर्शनविशृङ्खलक्षणे[4] सहसेति[5] तेनापसृतम्[6] ॥]

अत्र—वस्तुना 'अकृतेऽपि[7] प्रार्थने प्रसन्ना' इति विभावना, 'प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते' इति उत्प्रेक्षा वा[8] ॥

---

## सङ्केतः

सहीति। धैर्येण कर्त्रा मानविषयं आश्वासनं मे कृत्वा कम्पादिना विशृङ्खलयतीति विशृङ्खले प्रियदर्शनक्षणे तेन विश्वासघातिना अपसृतम्। अकृतेऽपीति। प्रसन्नत्वस्य हेतौ प्रार्थने अकृतेऽपि तदुत्पत्तिः इति विभावना ॥

---

1 'ओआसं'—क.　2 'दंसणमहंवीहलखणम्मि सहसत्ति'—क. 'दंसण-वीहल्लं खणिखणीझत्ति'—ख.　3 'नावकाशम्'—क.　4 'विह्वलं क्षणे'—क. 'नमहविह्वलक्षणे'—ख.　5 'क्षणे क्षणे झटिति'—ख.　6 हे सखि! कथंचित् त्वद्दत्तेन धैर्येण मानस्य आश्वासनं कारयित्वा स्थितायाः मम प्रियदर्शनोत्सवविवशाक्षणे सः मानः 'सहसेति' लोकोक्तिवत् पलायाम्बभूव। (गा. स. ९३६)।　7 अपि इति नास्ति—ख.　8 'च'—क.

(कविनिबद्धप्रौढोक्तिसिद्धेन अलङ्कारेण वस्तुनः—)

ओल्लोल्लकरअरअणक्खएहिं [1]
तुह लोअणेसु मह दिण्णं [2] ।
रत्तंसुअं पसाओ [3] कोवेण
पुणो इमे ण अक्कमिआ ॥ ७१ ॥

[आर्द्रार्द्रकरज-रदन-क्षतैः [4] तव लोचनयोः मम दत्तम् [5] ।
रक्तांशुकं प्रसादः [6] कोपेन पुनरिमे नाक्रान्ते [7] ॥]

अत्र—'किमिति लोचने कुपिते वहसि?' [8] इत्युत्तरलङ्कारेण 'न केवलं आर्द्रनखक्षतानि गोपायसि, यावत् तेषां अहं प्रसादपात्रं जाता' इति वस्तु ॥

---

## सङ्केतः

ओल्लोल्लेति । आर्द्रार्द्रैः करजादिक्षतैः । अक्कमिआ इति प्राकृतत्वात् पुंस्त्वम् । वहसि इत्येवंरूपस्य प्रश्नस्य स्वयंगम्यस्य यत् गाथोक्तं वस्तु तदुत्तरतयोक्तं इति उत्तरालङ्कारः ॥

---

1 'अक्खएहिं'—क. 2 'दिण्णो'—ख. 3 'सुअप्पसादो'—क. 4 'दक्षतैः'—ख. 5 'दत्तः'—क. 6 'कप्पसादः'—क. 7 सपत्न्या कृतं अभिनवनखक्षतादिचिह्नं भर्तरि दृष्ट्वा कोपरक्तनयना काचित् विदग्धा भर्तुः प्रश्नं उत्तरयति—अयि प्रिय! तवाङ्गे सपत्नीकृतानि अभिनवनखदन्तक्षतानि यानि दृश्यन्ते तैरेव मम लोचनयोः इदं आरुण्यं प्रसादरूपेण दत्तम्, तावदेव, न पुनरिमे लोचने कोपेन आक्रान्ते इति । (गा. स. ९७१) । 8 इति प्रश्नस्योन्नयनात् इति भावः ।

(कविनिबद्धप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्कारस्य—)

महिलासहस्सभरिए तुह हिअए
सुहअ ! सा अमाअंती ।
अनुदिणं [1] अणण्णकम्मा
अंगं तणुअं वि तणुएइ ॥ ७२ ॥

[महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती ।
अनुदिनं[2] अनन्यकर्मा अङ्गं तनुकमपि[3] तनयति[4] ॥]

अत्र—हेत्वलङ्कारेण 'तनोः तनूकरणेऽपि तव हृदये न वर्तते' इति विशेषोक्तिः । एषु कविनिबद्ध-प्रौढोक्तिमात्रनिष्पन्नशरीरः व्यञ्जकः ॥

एवं द्वादशभेदाः ॥ ४० ॥

---

## सङ्केतः

**विशेषोक्तिरिति** । अत्र मानहेतुभूते तनोः तनूकरणेऽपि सा यत् तव हृदये न वर्तते न माति, तत्कारणे सत्यपि कार्यानुत्पत्तिः इति **विशेषोक्तिः** व्यङ्ग्या ॥ ४० ॥

---

1 'दि अहं'–क.  2 'दिवसं'–क.  3 'तन्वपि'–ख.  4 विरहकृशां नायिकां नायकाय सखी इत्थमावेदयति—अयि सौभाग्यपरिपूर्ण ! सा साध्वी नायिका धूर्तस्त्रीसहस्रपरिपूरिते तव हृदये अवकाशमलभमाना सती, अनुदिनं त्यक्तान्यकार्या स्वतः कृशमपि स्वकीयं शरीरं कृशतरं करोति, कथमपि वा कदापि वा तव हृदये प्रवेशः स्यादिति । (गा. स. २-८२) ।

## शब्दार्थोभयभूः एकः ।

**यथा**—(उभयशक्तिमूलध्वनेः—)

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ?[1] ॥ ७३ ॥

अत्र—उपमा व्यङ्ग्या ॥

---

### सङ्केतः

अतन्द्रेति । चन्द्रौ स्वर्णकर्पूरावपि । समुत् सहर्षा । तारका कनीनिकाऽपि । श्यामे रात्रिस्त्रियौ । सानन्दं समुदम् । कं पुरुषम् । **सा श्यामा कं अनिर्वचनीयं आनन्दम्** । अत्र यदि स्त्री प्रस्तुता रात्रिर्वा, तदा द्वितीयार्थः वस्तुरूपः व्यङ्ग्यः । ध्वन्यवाच्ययोः मिथः सङ्गत्या उपमानोपमेयभावे तु **उपमा**ऽपि । द्वयोः वाच्यत्वे तु श्लेष एव वाच्यः, न किञ्चित् व्यङ्ग्यम् । अत्र च **अतन्द्रचन्द्रा**दिशब्दानां एकानेकार्थानां परावृत्तिसहासहत्वेन क्रमेण अर्थशब्दशक्ति[2]प्राधान्यम् । तेन च उभयमूलत्वम् ।

### मधुमती

**अतन्द्रेति** । अत्र—**चन्द्र-तारका-श्यामा**दिपदानां श्लिष्टत्वात् परिवृत्त्यसहत्वम् । **मन्मथानन्दा**दिपदानां च परिवृत्तिसहत्वमिति उभयमूलत्वम् । **यद्यपि**—उभयशक्तिमूलेऽपि प्रागुक्तभेदाः संभवन्ति, तथापि शब्दार्थोभयशक्त्युत्थत्वेन ऐक्यमुक्तम् ॥

---

1 उज्ज्वलचन्द्रभूषणा मन्मथोद्दीपनी तरलतारकागणपरिपूरिता इयं रात्रिः कं वा जनं नानन्दयति इत्यर्थः । एवं चन्द्राख्यशिरोभूषणसमलङ्कृता चञ्चलाक्षिकनीनिकायुता अतिदीर्घसुरतादावपि आलस्यवर्जिता अत एव समभिवृद्धकामभावा इयं षोडशवार्षिकी यौवनमध्यस्था युवतिः कं वा युवानं नानन्दयतीत्यपि । (?)

9 'शक्ति' इति नास्ति—घ.

**भेदाः अष्टादशास्य तत् ॥४१॥**

अस्य—ध्वनेः ॥ ४१ ॥

ननु रसादीनां बहुभेदत्वेन[1] कथं अष्टादशता ?

इत्यत आह—

**रसादीनां अनन्तत्वात्**
**भेदः एको हि गण्यते ॥**

अनन्तत्वादिति। तथाहि—नव रसाः। तत्र शृङ्गारस्य द्वौ भेदौ–सम्भोगः विप्रलम्भश्च। सम्भोगस्यापि–परस्परालोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्यास्तमयचन्द्रोदयषड्तुवर्णनादयः बहवो बहवः भेदाः। विप्रलम्भस्यापि अभिलाषादयः उक्ताः। तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम्, तत्रापि नायकयोः उत्तमाधममध्यमप्रकृतिकत्वम्, तत्रापि देशकालावस्थादिभेदाः, इति एकस्यैव रसस्य आनन्त्यम्। का गणना तु अन्येषाम्[2]?। असंलक्ष्यक्रमत्वं तु

---

सङ्केतः

तथाच अत्र—यद्यप्यर्थोऽपि व्यञ्जकः, तथापि श्लिष्टशब्दशक्तिरेव व्यङ्ग्यं उन्मीलयति, न तु अर्थशक्तिः इति, शब्दोत्थध्वनिरेव, न द्व्युत्थः इति तत्त्वम् ॥

**भेदाः इति।** अविवक्षितवाच्यस्य—अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यौ द्वौ भेदौ। विवक्षितवाच्यस्य अलक्ष्यक्रमः एकः। तथा अस्यैव विवक्षितवाच्यस्य शब्दोत्थौ लक्ष्यक्रमौ द्वौ, अर्थोत्थाः द्वादश, द्व्युत्थः एकः। एवं आहत्य अष्टादशेति भावः ॥ ४१ ॥

**नायकयोः**—नायकश्च नायिका च तयोः। अन्येषां हास्यादीनाम् ॥

---

1 'भेदत्वे'–क. 2 अन्येषामपि सङ्कलने इति यावत्।

सामान्यमाश्रित्य[1] रसादिध्वनिः एकभेदः[2] एव गण्यते ॥

वाक्ये[3] द्व्युत्थः,

द्व्युत्थः—शब्दार्थोभयशक्तिमूलः ।

पदेऽप्यन्ये[4] ।

अपिशब्दात् वाक्येऽपि । एकावयवस्थितेन भूषणेन कामिनीव, पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्याऽपि भारती भासते ॥[5]

---

## सङ्केतः

द्व्युत्थः इति । द्वाभ्यां उत्था—उत्थानं यस्य सः तथा ॥

'बाधकेऽसति सर्वं हि वाक्यं स्यात् सावधारणम् ।'

इति न्यायेन वाक्ये एव द्व्युत्थः इत्यवधार्यम् ॥

अन्ये इति । अन्ये सप्तदश । ननु—भारती काव्यरूपा, सा च 'वाक्यात् व्यङ्ग्यं यस्याः' इति व्युत्पत्त्या वाक्यव्यङ्ग्या सती, क्रियासमाप्त्या वाक्यपूर्णत्वे एव भाति । यतः काव्यविशेषो नाम विशिष्टार्थप्रतीतिहेतुः सन्दर्भविशेषः । पदप्रकाश्यत्वे तु न काव्यविशेषता घटेत,[6] पदानां स्मृतिहेतुत्वेन अवाचकत्वात् । तथाच कथं पदद्योत्येन व्यङ्ग्येन भासते इत्युच्यते? इत्यत आह—एकावयवेति । अत्र—यथा दीपः

## मधुमती

पदद्योत्येनेति । यद्यपि—यत्र एकं पदं व्यञ्जकम्, तत्र पदान्त-

---

1 रसभावादिसाधारणं धर्ममाश्रित्येत्यर्थः । 2 'ध्वनिभेद एक'—क. 3 वाक्य एवेत्यर्थः । एकस्यैव पदस्य परिवृत्तिसहत्वतदसहत्वयोः वक्तुमयोग्यत्वात् । 4 अन्ये—सप्तदश भेदाः । 5 'एकावयवसंस्थेन भूषणेनेव कामिनी । पदव्यङ्ग्येन सुकवेः ध्वनिना भाति भारती ॥' इत्यानन्दवर्धनः ॥ 6 'घटते'—च.

तत्र पदप्रकाश्यत्वे क्रमेण उदाहरणानि—

(पदेन अविवक्षितवाच्ये अर्थान्तरसङ्क्रमितवाच्यस्य—)

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।

---

## सङ्केतः

एककोणस्थोऽपि सर्वं गृहं प्रकाशयति तथैवेदमित्यपि भाव्यम् । तथाच—यथा श्रुतिदुष्टपेलवादिपदानां असभ्यार्थं प्रति न वाचकत्वम्, किन्तु केवलं स्मारकत्वम्, तद्वशाच्च चारुरूपं काव्यमपि श्रुतिदुष्टमिति अन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते, तथा—प्रकृतेऽपि पदानां व्यञ्जकत्वमुखेन ध्वनित्वव्यवहारः । न च ध्वनित्वव्यवहारे वाचकत्वं[1] प्रयोजकम्, व्यञ्जकत्वेन व्यवस्थानात् इति भावः ॥

यस्येति । अत्र द्वितीयमित्रशब्दः अनुपयुज्यमानत्वात् बाधितस्वार्थः स्वाभिधेयभूतार्थगामित्वरूपसम्बन्धात् विश्वसनीयतां लक्षयन् सर्वस्वरहस्यार्पणाख्यानादि ध्वनयति[2] । इयं शुद्धा सारोपा साध्यवसाना वा लक्षणा । तद्युक्तिश्च पूर्वोक्तमेघनादशब्दवत्[3] । एवं द्वितीयशत्रुशब्दोऽपि

## मधुमती

राण्यपि तथा । तथापि प्राधान्याभिप्रायेण[4] इदं द्रष्टव्यम् । तदिदमुक्तं पूर्वम्—'प्राधान्येन अधमपदेन व्यज्यते' इति ॥

अत्रेति । सर्वत्र सामान्यविशेषभावः सम्बन्धः । सहृदयत्वनिर्जितत्वसम्पत्तिमत्त्वप्रतीतयश्च यथाक्रमं प्रयोजनानि । यद्यपि अत्र अनेकानि पदानि सन्ति । तथापि तेषां प्रत्येकमेव व्यञ्जकत्वात् पदव्यङ्ग्यत्वं उक्तम् ॥

---

1 'व्यञ्जकत्वं'–ज. 2 ध्वनति । 3 (262 तमे पुटे ।) 4 'प्राधान्याप्राधान्याभिप्रायेण'–ज.

अम्नुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति [1] ॥ ७४ ॥

अत्र—द्वितीयमित्रादिशब्दाः आश्वस्तत्वनियन्त्रणीयत्व[2]स्नेहपात्रत्वादिभिः अर्थान्तरसङ्क्रमित[3]वाच्याः ।[4]

(पदेन अविवक्षितवाच्ये अत्यन्ततिरस्कृतवाच्यस्य—)

खळव्ववहारा दीसन्ति दारुणा
जइवि [5] तहवि धीराणं ।
हिअअवअस्सबहुमआ
ण हु ववसाआ विमुज्झन्ति ॥ ७५ ॥

[खलव्यवहाराः दृश्यन्ते दारुणाः यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमताः न खलु व्यवसायाः विमुह्यन्ति [6] ॥]

अत्र विमुह्यन्तीति [7] ॥

---

सङ्केतः

नितरां यन्त्रणीयत्वं लक्षयन् निरुच्छ्वासतादि ध्वनयति । अनुकम्प्यशब्दोऽपि स्नेहपात्रत्वं लक्षयन् सम्पत्प्रसादसम्पादनादि ध्वनयति । अत्रापि लक्षणापूर्ववत् । एषः अर्थान्तरसङ्क्रमितभेदः ॥

हिअअ इति । हृदयमेव वयस्यः, तस्य बहुमताः । अत्र विमोहस्य चेतनधर्मत्वात् विमुह्यन्तीति पदं बाधितस्वार्थं, चेतनगतास्खलितत्वादिसादृश्यात् व्यवसायान् लक्षयत् आरब्धकार्यनिर्वहणादि ध्वनयति ।

---

1 यस्य मित्राणि विश्वासपात्राण्येव, यस्य शत्रवः निःशेषतो दमनीया एव, यस्य दयाविषयः स्नेहपात्रमेव, स एव शोभनजन्मा, स एव च श्लाघ्यजीवनो महापुरुषः इत्यर्थः । (?) 2 नियन्त्रणत्व '–ख. 3 ' त्वादिसङ्क्रमित '–क. 4 रूपभेदं विना समानाधिकरण्यायोगादिति भावः । 5 ' जइवि '–ख. 6 यद्यपि धीरेषु कस्मिंश्चित् कार्ये प्रवर्तमानेषु, तत्प्रवृत्तिदूषणपराः धूर्तानां व्यवहाराः दुःखदाः सम्भवन्ति । तथापि—स्वहृदयरूपेण परमसुहृदा सह सम्यगालोच्य निर्धारिताः तेषां प्रवृत्तयः नैव मध्ये प्रतिहता भवन्तीत्यर्थः । (गा. स. ९७८) । 7 पदं अत्यन्ततिरस्कृतवाच्यं सत् व्यञ्जकं इति शेषः ।

(पदे विप्रलम्भे अलक्ष्यक्रमस्य—)

लावण्यं तत्, असौ कान्तिः, तत् रूपं, सः वचःक्रमः ।
तदा सुधा[1]ऽऽस्पदमभूत्, अधुना तु ज्वरोपमम्[2] ॥ ७६ ॥

अत्र तदादिपदैः अनुभवैकगोचराः अर्थाः प्रकाश्यन्ते ॥

यथा वा[3]—

---

## सङ्केतः

इयं गौणी लक्षणा, अत्यन्ततिरस्कृतभेदश्च ॥

अलक्ष्यक्रमं भेदं वृत्तद्वयेनाह—**लावण्यमिति**। अत्र **अनुभवैकगोचराः तदादिसारिताः** विभ्रमरूपाः **अर्थाः** रसं व्यञ्जयन्ति। स्मरणोल्लिखितं तल्लावण्यादि सातिशयं रसस्य विभावतां याति इति भावः। **तदा** सम्भोगे। **अधुना** विरहे। **ज्वरोपमं** सन्तापहेतुत्वात्। 'ज्वरो महान्' इति वा पाठः ॥

## मधुमती

**अत्रेति**। आकुञ्चितप्रवृत्तिः लक्ष्यते। कार्यकारणभावः सम्बन्धः। तन्निषेधेन अभिमतकारित्वं व्यज्यते ॥

**अत्रेति**। **प्रकाश्यन्ते**। एवं च **तत्** इतिपदेन प्राधान्येन सम्भोगविप्रलम्भशृङ्गारः व्यज्यते ॥

---

1 'सुखा'—क. 2 कश्चित् वियोगी स्वावस्थाभेदेन भावभेदं परामृशति। तत्सांनिध्यदशायां अनुभवैकगोचरं यत् तदीयं लावण्यं औज्ज्वल्यं संस्थानसौष्ठवं मधुरतरा वचनपरिपाटीति सर्वं अमृतमिव सर्वाङ्गीणसौहित्यसम्पादकमभूत्, तदिदं सकलमपि इदानीं तद्विरहदशायां ज्वर इव सर्वाङ्गीणसन्तापहेतुरेव दृश्यते—इत्यर्थः। 'ज्वरो महान्'—ख. (खण्डप्रशस्तिः?)। 3 न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता, किं त्वन्येषामपीति हृदि निधायोदाहरणान्तरमाह—यथा वेत्यादि ॥

(पदे सम्भोगे अलक्ष्यक्रमस्य—)

**मुग्धे ! मुग्धतयैव नेतुं अखिलः कालः किमारभ्यते ?**
**मानं धत्स्व, धृतिं बधान, ऋजुतां दूरे कुरु,[1] प्रेयसि !**
**सख्यैवं प्रतिबोधिता प्रतिवचः तामाह भीतानना,**
**नीचैः शंस, हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति[2] ।।७७।।**

**अत्र भीताननेत्येतेन हि नीचैश्शंसनविधानस्य युक्तता गम्यते ।।**

---

## सङ्केतः

**मुग्धे !** इति । **धृतिः** धरणं, संवननमिति यावत् । **प्रतिबोधिता** प्रतिकूलं मानादिकारणं ज्ञापिता । **भीतानना** ससम्भ्रमं भ्रमितानना । भयकार्यस्य नेत्रभ्रमसङ्कोचशोषाधोभावसम्भ्रमवैवर्ण्यादेः मुखे दर्शनात् तदेवं भीतत्वमुक्तम् । **नीचैः शंस,** न तु मौनं कुरु । 'मौनं कुरु' इत्युक्ते—

## मधुमती

**मुग्धे ! इति । बधान ऋजुतां** इत्यत्र 'ऋत्यकः'[14] इति प्रकृतिभावः । **भीतानना** भीत्युन्नायकचेष्टाविशिष्टानना । **अत्रेति । यद्यपि— नीचैः शंसनविधानस्य युक्तता** वस्तुरूपा । न च तस्याः अलक्ष्यक्रमत्वं

---

1 'दूरीकुरु'–क. 2 "अयि स्वहितसाधनज्ञानशून्ये ! प्रेयसि ! यथोचिताचरणेनैवमेव सर्वमिदमायुर्नेतुं किमुद्युक्तासि ? इदं हि न युक्तम् । प्रथमं अचलितं धैर्यमाश्रय, सरलतां संत्यज, मानं बलात् धारय," इत्येवं सख्योपदिष्टा सती अतीव भीतानना 'किं वा कथयितव्यं मन्दं कथय, मम हृदये नित्यं संनिहितः प्राणकान्तः आकर्णयिष्यति' इति तां प्रत्यब्रवीत्—इत्यर्थः । (अमरुशतके ७०) । 14 पा. सू. ६-१-१२८.

भावादीनां पदप्रकाश्यत्वे अधिकं न वैचित्र्यमिति
न तत् उदाह्रियते[1] ॥

---

## सङ्केतः

सखी मनसि दूयते—अहं किमिति निषिद्धा ?' इति । तां प्रति तस्याः प्रीत्यभावः उक्तः स्यात् । प्रियश्च शङ्कते—'यदेषा निषिद्धा, तत् आभ्यां मन्ये किमपि विरुद्धं पर्यालोच्यते' इति । एतेन हीति । भयस्य अकृत्रिमत्वदर्शनेनेत्यर्थः । एतद्दृष्टान्तद्वये रसस्य पदप्रकाश्यत्वं उक्तम् । एकत्र तदादीति शब्दैक्ये पदत्वमुक्तम्, अन्यत्र तु भीताननेति शब्दद्वयैक्ये पदत्वम् । अत एव यथा वा इत्युक्तम् । भावादयस्तु वाक्यप्रकाश्यत्वे एव वैचित्र्यभाजः इत्याह—भावादीनामिति ॥

द्विधा शब्दोत्थध्वनौ पदप्रकाश्यत्वमाह—उपमानमिति । प्रकृताप्रकृतयोः भीमशब्दार्थयोः असम्बद्धत्वं मा प्रसाङ्क्षीत् इति न्यायेन तयोः उपमानोपमेयभावः इति उपमा व्यङ्ग्या ॥

## मधुमती

इति तत्प्रकरणे तद्व्यङ्ग्यत्वं उदाहर्तुं नोचितम् । तथापि तया विप्रलम्भशृङ्गारः अनुरणनन्यायेन व्यज्यते । तदानीं अन्यहेतुकभयस्य अभावात्—इति ॥

---

[1] यथा—'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥' अत्र अधोमुखीतिपदेन लज्जाख्यभावो व्यज्यते ।

(संल० पदे शब्द० वस्तुना अलङ्कारस्य—)

> रुधिरविसरप्रसाधित-
> करवालकराल[1]रुचिरभुजपरिघः ।
> झटिति [2] भ्रुकुटिविटङ्कित-
> ललाटपट्टो विभासि [3] नृप ! भीमः [4] ॥ ७८ ॥

अत्र—भीषणीयस्य राज्ञः[5] भीमसेनः उपमानम्[6] ॥

(संल० पदे शब्द० वस्तुना वस्तुनः—)

> भुक्तिमुक्तिकृत् एकान्तसमादेशनतत्परः ।

---

### सङ्केतः

**भुक्तीति** । **भुक्तिः** कान्तोपभोगोऽपि । **मुक्तिः** उद्वेगव्यापारादपि । [7] **एकान्तः** सङ्केतस्थानं निश्चयश्च । **सन्** शोभनः **आगमः** सिद्धान्तः, **सतः**

### मधुमती

**भुक्तिमुक्तिकृदिति** । **भुक्तिः** स्वर्गादिभोगः कान्तादिभोगश्च । **मुक्तिः** अपवर्गः, खेदाभावश्च । **एकान्तः** अद्वैतं, विविक्तदेशश्च । **समादेशनं** 'यजेत' इत्यादिनियोगः, आह्वानं च । संश्चासौ आगमश्च इति

---

1 'करालकरवाल'—क. 2 'विकट'—ख. 3 'विभाति'—क. 4 हे नृप ! रक्तधारालङ्कृतभीषणखड्गमनोज्ञबाहुरूपार्गलयुतः सद्योभ्रूभङ्गसञ्जाततरङ्गफालफलकः त्वं भयङ्करः विभासि । 'भीम !'—क. 5 'राज्ञः' इति नास्ति—क. 6 इति व्यङ्ग्यमिति शेषः । 7 'अभेदव्यापारादपि'—घ.

**कस्य नानन्दनिस्यन्दं[1] विदधाति सदागमः[2] ॥ ७९ ॥**

**काचित् सङ्केतदायिनं एवं मुख्यया वृत्त्या शंसति ॥**

(संल० पदे अर्थ० स्व० वस्तुना वस्तुनः—)

**सायं स्नानमुपासितं, मलयजेनाङ्गं समालेपितं,**

**यातोऽस्ताचलमौलिं[3] अम्बरमणिः, विस्रब्धमत्रागतिः[4] ।**

---

### सङ्केतः

शुभस्य (सुभगस्य) आगमनं च । मुख्ययेति । प्रकृतेन अर्थेन 'सङ्केतदं काचित् आशंसति' इति वस्तु सदागममुखेन व्यज्यते । अत्र अर्थयोः वैसादृश्यात् न उपमा ॥

अथ अर्थोत्थं द्वादशधा ध्वनिं पदप्रकाश्यमाह—**सायमिति** । अत्र **स्नान-विलेपन-अर्कास्त-मन्दागमनैः** क्रमहेतुभावः उक्तः । एवं 'कारणा-

### मधुमती

**सदागमः** वेदः, सतः आगमनं च । **काचिदिति** । सङ्केतस्तुतिरूपं वस्तु इति शेषः । **मुख्यया** । व्यञ्जनयेत्यर्थः । एवं च—अप्रस्तुतनेतृप्रशंसया सङ्केतदायिनः प्रस्तुतस्य स्तुतिः व्यङ्ग्या । अभिधानियमनात् न श्लेषः इति द्रष्टव्यम् । यत्तु—पितृचरणैः—'मुख्यया—शक्त्या' इत्युक्तम्, तत्

---

1 'निःष्यन्दं' 'निस्पन्दं'–ख. 2 यः तृप्तिकरं सुरतोपभोगं वियोग-जन्याविषह्यदुःखविमोचनं च करोति, एकान्तसङ्केतप्रदेशे आह्वानप्रवणश्च, तादृशः सतः प्रियतमस्यागमः कस्य वा रमणीजनस्य आनन्दातिशयं न तनोति? इति कामुकं काचित् स्तौति । तत्र च यः ऐहिकं भोगजालं, पारत्रिकं मुक्तिसाम्राज्यं च निर्दिशन्, निर्विचिकित्सोपदेशने प्रवणश्च, परिशुद्धः वेदादिरूपः आगमः, सः कस्य वा प्राज्ञस्य आनन्दसन्ततिं नोत्पादयति? इति वेदादिस्तवश्च गम्यते । समीपस्थवञ्चनार्थमेव-मुक्तिरिति केचित् । वेदस्तुतेरेव प्राधान्यमित्यपरे । (?) 'समागमः'–क. 3 'मूलं'–क. 4 'सत्रागतम्'–क. 'मन्दागतिः'–ख.

आश्चर्यं तव सौकुमार्यं ! अभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वं अमीलनव्यतिकरं शक्नोति ते नासितुम्[1] ॥८०॥
अत्र—वस्तुना 'कृतपरपुरुषपरिचया[2] क्लान्ताऽसि'
इति वस्तु 'अधुना'पदद्योत्यं व्यज्यते ॥

(संल० पदे अर्थ० स्व० वस्तुना अलङ्कारस्य—)

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लाद[3]क्षीणपुण्यचया तथा[4] ॥ ८१ ॥
चिन्तयन्ती जगत्सूतिं[5] परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका[6] ॥ ८२ ॥

## सङ्केतः

भावेऽपि क्लमः तव ' इति वस्तुना ' पुरुषसङ्गं कृत्वा स्नाताऽसि ' इति वस्तु अधुनापदेन व्यज्यते । अन्यदाऽप्यागमने क्लमाभावात् ॥

तदप्राप्तीति । एतौ श्लोकौ विष्णुपुराणे । तस्य विष्णोः अप्राप्तिः । निरुच्छ्वासतयेति । एकत्र ध्यानेन, अन्यत्र तद्गतया चिन्तया । मुक्तिः

## मधुमती

प्रकृतव्यञ्जनायाः अभिधामूलत्वात् परम्परया तत्प्रयोजकत्वं अभिप्रेत्य ॥

---

1 उपपतिसंभोगजन्यश्रमापनयनाय स्नानादिकृतवतीं सखीं प्रति विदग्धा काचिदाह—सखि ! भवत्या खलु सार्धं स्नानं आदरेण कृतम्, चन्दनेन शरीरं सम्यगालिप्तम्, दिनकरोऽप्यस्तं गतः, एवं धर्मलेशशून्येऽप्यस्मिन् काले मन्दमन्दमेवाऽऽगतम् । अथापि बहिरन्तश्च श्रान्ताऽसि, ते नयनयुगलं च पुनःपुनः मीलनक्रियां विना स्थातुमपि न शक्नोति । अहो तव सुकुमारता ! इति । 2 परिचयः—गाढोन्मर्दनम् । 3 ' विमलाह्लाद '–क. 4 ' सति '–ख. 5 ' जगद्योनिं '–क. 6 तद्विरहदुःखानुभवक्षपितसमस्तपातका, तच्चिन्तानुभवजनितानन्दानुभवक्षीणनिखिलपुण्यनिचया सती पुण्यापुण्य विवर्जितमार्गे वर्तमाना काऽपि गोपकन्यका प्राणायामेन परमपुरुषं चिन्तयन्ती मुक्तिं गता । (विष्णुपुराणे ५-१३-२१-२२) ।

अत्र—'जन्मसहस्रैः उपभोक्तव्यानि[1] दुष्कृत-सुकृतफलानि वियोगदुःख-चिन्ताऽऽह्लादाभ्यां अनु-भूतानि' इत्युक्तम्। एवं च अशेषचयशब्दद्योत्ये अतिशयोक्ती॥

---

### सङ्केतः

प्राणवियोगोऽपि। **अशेषचयशब्देत्यत्र** शब्दशब्देन अनेकार्थत्वात् पदं उच्यते। अन्यथा **शब्दद्योत्ये** इत्युक्त्या शब्दमूलत्वप्राप्त्या, अर्थमूलध्वनि-प्रस्तावः न सङ्गच्छेत। **अतिशयोक्ती** असम्बन्धे सम्बन्धरूपे॥

### मधुमती

**अतिशयोक्ती इति।** अत्र अतिशयोक्तिपदं समाख्याबलेन अलङ्कारसामान्यवाचकमपि अत्र विशेषालङ्कारविशेषपरम्। प्रयत्नविषये तदवतारात्। इह च तद्वियोगदुःखोपभोगजनकयत्नेन समस्तपातकजन्य-दुःखोपभोगस्य तद्वियोगदुःखजनकपातकनाशेन समस्तपातकनाशप्रतीतेः अपर-विशेषालङ्कारद्वयं अशेषपदद्योत्यम्। एवं च—तच्चिन्ताऽऽह्लादभोगजनकयत्नेन सकलपुण्यजन्यसुखोपभोगस्य तच्चिन्ताऽऽह्लादजनकपुण्यनाशेन समस्तपुण्यनाश-प्रतीतेः अपरविशेषालङ्कारद्वयं च चयपदद्योत्यम्। चयाशेषपदाभ्यां विना स्वस्वजनकपातकपुण्ययोरेव विलयप्रतीतौ व्यञ्जनैव न स्यात्। एवं च—अशेषचयपदयोः अतिशयोक्तिद्वयं प्रत्येकमेव द्योत्यमिति ज्ञेयम्। व्युत्पत्ति-बलात् इति तात्पर्यम्॥

---

1 'भोग्यानि'—क.

(संल० पदे अर्थ० स्व० अलङ्कारेण वस्तुनः—)

क्षणदाऽसौ अक्षणदा,
वनं अवनं, व्यसनं अव्यसनम् ।
बत! वीर! तव द्विषतां
पराङ्मुखे त्वयि पराङ्मुखं सर्वम्[1] ॥८३॥

अत्र—शब्दशक्तिमूलविरोधाङ्गेन अर्थान्तरन्यासेन[2] 'विधिरपि त्वां अनुवर्तते' इति 'सर्व'पदद्योत्यं वस्तु ॥

---

### सङ्केतः

क्षणदेति । यथा घृतकार्यत्वात् आयुरपि घृतम्, तथा क्षणकार्यत्वात् सुखमपि क्षणम् । वनं शून्योद्देशः । व्यसनं सप्ताङ्गानामन्यतमस्य परस्मादुपजापः, द्यूतादि वा ॥ यदि—रात्रिः अरात्रिः, वनं अवनं इत्यादिरूपतया व्याख्या, तदा—रात्र्यभावो दिनम् इत्यादि लभ्यते । ततश्च पराङ्मुखत्वेन न द्विषां किञ्चिद्विरूपम् । ततः विरोधः एषां पदानां वैपरीत्येन व्याख्येयः । विरोधपरिहारस्तु—या हि अक्षणदा दिनं, सा क्षणदा[3] । दिनेऽपि नष्टत्वात् तेषाम् । अवनं रक्षकं वनम् । अवीनां असनं खेटनं व्यसनम् इति । प्रथमव्याख्याने तु विरोधपरिहारौ सुगमौ । शब्देति । अत्र अर्थान्तरन्यासः शब्दोत्थविरोधाङ्गभूतः । तत्साहाय्यात् सर्वपदद्योत्यं वस्तु व्यनक्ति ॥

---

1 हे वीर! शत्रूणां विषये त्वयि विपरीते=प्रतिकूले जाते सति तेषां सर्वमपि विपरीतं जातम् । तथाहि इदानीं—तेषां सर्वाऽपि रात्रिः नोत्सवदायिनी, अरण्यमेव च रक्षकं जातम् । तदीयं द्यूतादि सर्वमपि व्यसनं मेषपालनव्यसने पर्यवसितम् इति । क्षणदा—रात्रिः, क्षणः—उत्सवश्च । अव रक्षणे । अवीनां असनं—पालनं च ॥

2 विरोधालङ्कारसमर्थकेन 'त्वयि पराङ्मुखे सर्वं पराङ्मुखं' इत्यर्थान्तरन्यासेनेत्यर्थः ।

3 'रत्नं वाऽक्षणदा'—ग.

(संल० पदे अर्थ० स्व० अलङ्कारेण अलङ्कारस्य—)

तुह वल्लहस्स गोसम्मि
आसि अहरो मिलाणकमळदळो ।
इअ णववहुआ सोऊण
कुणइ वअणं महीसमुहं ॥ ८४ ॥

[तव वल्लभस्य प्रभाते
आसीदधरः म्लानकमलदलम् ।
इति नववधूः श्रुत्वा
करोति वदनं महीसंमुखम्[1] ॥]

अत्र—रूपकेण[2] 'त्वया अस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं,[3] येन म्लानत्वम्' इति 'मिलाणा'दिपद-द्योत्यं काव्यलिङ्गम् । एषु च स्वतस्सम्भवी व्यञ्जकः ॥

---

## सङ्केतः

तुहेति । गोसम्मि प्रभाते । दळो इति पुंस्त्वं प्राकृतत्वात् । मिलाणादीति । मिलाणकमळदळो इति रूपं यत् पदं तद्द्योत्यं इत्यर्थः । अयं भावः—म्लानकमलदलं इति रूपकेण म्लानत्वान्यथानुपपत्तेः 'मुहुर्मुहुः चुम्बनं विहितवती' इत्यर्थः ॥

---

1 'अयि नवोढे! प्रातःकाले तव दयितस्य अधरोष्ठः (अतिशयितचुम्बनेन) म्लानकमलदलसदृशः आसीत्' इति सखीवचनं श्रुत्वा नायिका वदनं लज्जया अधोमुखं करोति॥ 2 अधरः म्लानकमलदलमिति रूपकेणेत्यर्थः । 3 'रूपकेण तथा कृतम्'–क.

(संल० पदे अर्थ० कवि० वस्तुना वस्तुनः—)

राईसु चन्दधवलासु
ललिअं अप्फालिऊण जो चावं ।
एकच्छत्तं विअ [1] कुणइ
भुवणरज्जं विजंभंतो [2] ॥ ८५ ॥

[रात्रीषु चन्द्रधवलासु
ललितं आस्फाल्य यश्चापम् ।
एकच्छत्रमिव [3] करोति
भुवनराज्यं [4] विजृम्भमाणः [5] ॥]

अत्र—वस्तुना[6] 'येषां कामिनां असौ राजा स्मरः, तेभ्यो[7] न कश्चिदपि[8] तदादेशपराङ्मुखः इति, जाग्रद्भिः उपभोगपरैरेव तैः[9] निशा अतिवाह्यते' इति 'भुवणरज्ज'पदद्योत्यं वस्तु प्रकाश्यते ॥

---

## सङ्केतः

अत्र वस्तुनेति । गाथोक्तेनेत्यर्थः । तदादेशेति ।

'जाग्रद्भिर्भोगपरैः निशाऽतिवाह्या' ।

इति हि प्रसिद्धः स्मरादेशः ॥

---

1 'चिअ'–क. 2 'विअंभंतो'–ख. 3 'मेव'–ख. 4 'त्रिभुवनराज्यं'–क. 5 मानिनीं प्रति माननिर्वाहकाठिन्यं बोधयति सखी— अयि सखि! स्मरः खलु महावीरः, यः चन्द्रिकोज्ज्वलासु रात्रिषु गर्वभूयिष्ठः सन् स्वीयं सुकुमारं धनुः सकृदास्फाल्यैव त्रिभुवनमपि एकच्छत्रं राज्यमिव स्वैकवशंवदं करोति इति ॥ 6 मदनवृत्तान्तरूपेण वस्तुनेत्यर्थः । 7 'राजा कामः तेषां'–ख. 8 ये कामिनः ये विरक्ताः ये पक्षिमृगादयः ये चाचेतनाः ते सर्वेऽपीत्यर्थः । 9 'पैरेतैः'–क.

(संल० पदे अर्थ० कवि० वस्तुना अलङ्कारस्य—)

निशितशरधियाऽर्पयत्यनङ्गः
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः [1] ॥ ८६ ॥

अत्र—वस्तुना 'युगपत् अवस्थाः परस्परविरुद्धाः अपि प्रभवन्ति' [2] इति 'व्यतिकर'पदद्योत्यः विरोधः ॥

(संल० पदे अर्थ० कवि० अलङ्कारेण वस्तुनः—)

वारिज्जंतो वि पुणो
संदावकदत्थिएण हिअएण ।
थणभर[3]वअस्सएण
विसुद्धजाई ण चलइ से हारो ॥ ८७ ॥

---

## सङ्केतः

निशितेति । अराले वक्रे वयसि तारुण्ये । व्यतिकरं मिश्रीभावम् । अवस्थाः अभिलापचिन्तादयः । अयं भावः—अवस्थानां यौगपद्येनोत्पत्तौ मिथोविरोधः इति ॥

वारिज्जंतो इति । विरहे हारस्य असुखायमानत्वात्

---

1 कामदेवः खलु, कामिन्याः अभिनवं तारुण्यं समुद्भूतं विलोक्य अनुपदमेव तस्याः दृशि निशितशरत्वधिया स्वकीयं बलं ननु सङ्क्रमयति। सेयं दृक् यत्र यत्र दिशि निपतति तत्र तत्र हसितरुदितप्रलपितमूर्च्छादयः सर्वा अप्यवस्थाः परस्परं मिश्रीभूय युगपदेव समुन्मिषन्तीत्यर्थः ॥ 2 'अपि भवन्ति'–क. 3 'हर'–ख.

[वार्यमाणोऽपि पुनः
सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन [1]
विशुद्धजातिः न चलत्यस्याः [2] हारः [3] ॥]

---

### सङ्केतः

वार्यमाणत्वम् । स्तनभर एव वयस्यः यस्य सोऽपि विषमोन्नतत्वात् यतः चलयत्येनं अत एव मित्रीभूतः स्तनभरः । मित्रं हि स्वमित्रानिष्टं वारयतीति । परं हारः न चलति न त्रुट्यति, किन्तु कम्पमान एवास्ते । हृदयं संतप्तं सत् 'हार ! त्वं मां तापयसि' इति तं निवारयति । मम तु

### मधुमती

तस्याः हारः न चलति नापसरति । कीदृशः? **हृदयेन वार्यमाणोऽपि** । अर्थात् तस्याः उत्प्रेक्षागर्भं चेदं विशेषणम् । तेन 'हृदयेनेव'[4] इति गम्यते । कीदृशेन[5] हृदयेन? **सन्तापकदर्थितेन** । हारस्य गाढालिङ्गनान्तरायतया यः सन्तापः तत्कदर्थितेन इत्यर्थः । गाढालिङ्गनान्तरायत्वे हेतुमुक्तं विशेषयति—**स्तनभरेति** । हारेण सहालिङ्गनेन स्तनयोः पीडा मा भूत् इत्यभिसन्धिः । एवं च—विपरीतरतावस्थेयं इति बोद्धव्यम् ॥

---

1 'वयस्यत्वेन'–क. 2 'चलति तस्याः'–क. 3 गाढालिङ्गनविघ्नकारिहारजन्यसन्तापपीडितेन हृदयेन मुहुर्मुहुर्वार्यमाणोऽपि नायिकायाः हारः स्वस्थानात् नैवापसरति, किन्तु तत्रैव कम्पमानः आस्ते । युक्तमेवेदम् । यतः अयं हारः स्तनभरमित्रम्, निर्दुष्टजातिश्च । कुलीना हि उत्कटक्लेशेऽपि मित्रं न त्यजन्ति । स्तनरूपं मित्रं परित्यज्य अपसरणे हि स्तनयोः गाढालिङ्गनेन अतीव पीडा स्यादिति, तथा सम्पद्यमानाऽपि पीडा आत्मना सहैव भवत्विति च ॥ 4 'हृदयेनैव'–च. 5 'कीदृशः'–ज.

अत्र—विशुद्धजातित्वलक्षण[1] हेत्वलङ्कारेण 'हारः अनवरतं कम्पमान एवास्ते' इति 'ण चलइ' पदद्योत्यं वस्तु ॥

(संल० पदे अर्थ० कवि० अलङ्कारेण अलङ्कारस्य—)

सो मुद्धसामलंगो
　　धम्मिल्लो कलिअललिअणिअदेहो ।
तीए खंधाहि बलं
　　गहिअ[2] सरो सुरअसंगरे जअइ ॥ ८८ ॥

[स मुग्धश्यामलाङ्गः
　　धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धात् बलं
　　गृहीत्वा[3] स्मरः सुरतसङ्गरे जयति[4] ॥]

---

### सङ्केतः

स्तनभर एव वयस्यः सन्तापभागित्वात् इति, स एव मया सार्धं तापं अनुभवतु, त्वमपि[5] किमित्यत्र ? इति वार्यमाणोऽपि विशुद्धजातित्वात् हेतोः न चलति, किं तु—किमत्र भावि ? इति कम्पते ॥

---

1 'जातिलक्षणेन'–क.　2 'लहिअ'–ख.　3 'लब्ध्वा'–ख.　4 यथा नष्टबलं युद्धान्निवर्तमानं कञ्चन सुहृदं विलोक्य, अन्यः तत्सुहृत् अन्यतः कस्माच्चित् स्कन्धावारात् बलं लब्ध्वा तं युद्धे पुनः प्रोत्साहयति, तथा—पूर्वसुरतकाले मुहुर्मुहुः कम्पनेन स्कन्धदेशे पतितः केशपाशोऽयं, स्वीकृतनिजदेहः सुन्दरश्यामलाङ्गः मन्मथ एव भूत्वा अस्याः स्कन्धभागात् बलं रत्यभिलाषाङ्कुररूपं गृहीत्वा सुरतभोगनिवृत्तमपि मनः प्रोत्साहनेन पुनः सुरते प्रवर्तयतीति भावः ॥
5 'अनुभवितुं त्वं'–ग.

अत्र—रूपकेण 'मुहुर्मुहुराकर्षणेन[1] तथा केश-पाशः स्कन्धयोः प्राप्तः, यथा रतिनिवृत्तावपि[2] अनि-वृत्ताभिलाषः कामुकोऽभूत्' इति 'खंध'पदद्योत्या विभावना। एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः ॥

(संल० पदे अर्थ० कविनि० वस्तुना वस्तुनः—)

णवपुण्णिमामिअङ्कस्स
सुहअ! को तं सि? भणसु मह सच्चं।
का सोहग्गसमग्गा
पओसरअणिव्व तुह अज्ज ॥ ८९ ॥

[नवपूर्णिमामृगाङ्कस्य
सुभग! कस्त्वमसि? भण मम सत्यम्।
का सौभाग्यसमग्रा
प्रदोषरजनीव तवाद्य[3] ]

---

## सङ्केतः

अत्र रूपकेणेति। धम्मिल्लः संयतः केशपाशः। स एव स्मरः इति[4] रूपकम्। स्मरो हि किल अभिलाषं उत्पादयतीति ॥

णवेति। पूर्णेन्दुरपि क्षणमेवानुरज्यते, तथा प्रदोषरजन्यपि। को तं सि?[5] केन सौजन्येन[6] संबद्धो भवसीत्यर्थः ॥

---

1 'ण मुहुराकर्षणे'–क. 2 'रतिविरतावपि'–ख. 3 हे सुभग! त्वं नवपूर्णिमाचन्द्रस्य किं ज्येष्ठः? उत कनिष्ठः? को वाऽसि? सत्यं वद। यतः पूर्वं मयि तथाऽनुरक्तोऽपि इदानीं नानुरक्तोऽसि। एवं क्षणानुरागरूपो धर्मश्च चन्द्रस्यैव। किं च—चन्द्रस्य प्रदोषरजनीव का वा तवाद्यानुरागकारिणी सौभाग्यशालिनी अन्या नायिका च? इति—परवध्वनुरक्तं नायकं प्रति खण्डितानायिकोक्तिः ॥ 4 'णेति। सरो स्मर इति'–घ. 5 'कातोऽसि'–ग. 6 'स्वाजन्येन'–ग.

अत्र—वस्तुना 'मयीव अन्यस्यामपि प्रथमं अनुरक्तः त्वम्, न ततः' इति 'णवे'त्यादि 'पओसे'त्यादिपदद्योत्यं वस्तु व्यज्यते ॥

(संल० पदे अर्थ० कविनि० वस्तुना अलङ्कारस्य—)

सहि! णवणिहुवणसमरम्मि
अंकवालीसहीए णिविडाए।
हारो णिवारिओ विअ[1]
उच्चेरंतो[2] तदो कहं रमिअं ॥ ९० ॥

[सखि! नवनिधुवनसमरे अङ्कपालीसख्या निबिडया।
हारो निवारित एव उच्चलन्[3] ततः कथं रमितम्[4] ॥]

---

**सङ्केतः**

**सहीति**। **अङ्कपाली** आश्लेषः। सैव **सखी**। **निबिडा** घना, अन्तरङ्गा च। **अङ्कपालीसख्या हारः उच्चेरन्तः** उच्चलन्[5] द्वयोस्तृतीयतया। स्पर्शविघ्न[6]हेतुतया वा अधिकीभवन्[7] **निवारित एव**। घनालिङ्गनेन हारः त्रोटित एवेत्यर्थः। सखी च सुरते मानुषान्तरमुत्सारयति, अत एव हारच्छेदं यावत् मयापि आश्लेषादि दृष्टम्। तदनन्तरं किं जातमिति

---

1 'च्चिअ'—क. 2 'उव्वेरंतो'—क. उच्छेरंतो—ख. 3 'उद्व्रियमाणः'—क. 'उच्छ्रयमाणः'—ख. 4 काचन सखी नवोढां प्रति रात्रिवृत्तान्तं पृच्छति—हे सखि! रात्रौ नवसुरतरूपसंग्रामसमये निबिडगाढालिङ्गनरूपया सख्या मध्ये उच्चावचं चलन् हारः त्रोटित एवेति मन्ये। तावदन्तं मया तत्र स्थितम्। ततः परं भवत्या कथं क्रीडितम्? वद। इति ॥ अत्र रते प्रौढाङ्गनासादृश्यं ध्वन्यते ॥ 'अङ्कपाली परीरम्भः' इति मेदिनी ॥ 5 उच्चलन् इति नास्ति—घ. 6 विघ्न इति नास्ति—ग. 7 'बाधकीभवन्'—घ.

अत्र—वस्तुना 'हारच्छेदादनन्तरं अन्यदेव[1] रतं अवश्यमभूत्, तत् कथय कीदृक्?' इति व्यतिरेकः 'कहं'पदगम्यः।

(संल० पदे अर्थ० कविनि० (स्व०) अलङ्कारेण वस्तुनः—)

पविसंती घरवारं[2]
विवलिअवअणा विलोइऊण पहं।
खंधे घेत्तूण घडं,
हाहा णट्ठेत्ति रुअसि सहि! किं ति?॥९१॥

[प्रविशन्ती गृहद्वारं
विवलितवदना विलोक्य पन्थानम्।
स्कन्धे गृहीत्वा घटं,
हा हा नष्टः! इति रोदिषि सखि! किमिति[3]?]

अत्र—हेत्वलङ्कारेण 'सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुं इच्छसि, तदा अपरं[4] घटं गृहीत्वा गच्छ' इति वस्तु 'किंति'पदद्योत्यम्॥

---

## सङ्केतः

न जाने इत्यर्थः। ततः हारच्छेदानन्तरम्। व्यतिरेकः इति। उपमाभूतेभ्यः रतान्तरेभ्यः तस्य रतस्य अधिकत्वात् व्यतिरेकः इति भावः॥

खंधे इति। स्कन्धान्निक्षिप्य। अत्र रोदने नष्टत्वं हेतुः॥

---

1 'नन्तरमेव'–ख. 2 'घरद्वारं'–ख. 3 जलानयनव्याजेन सङ्केतस्थानं गता काचन, शून्यं तत्प्रदेशं विलोक्य, घटं स्कन्धे गृहीत्वा गृहद्वारं यावदागच्छति, तावत्तत्र प्रियः संकेतस्थानयायी दृष्टः। अनुपदमेवेयं पुनस्तत्र गन्तुकामा विवलितं वदनं कृत्वा द्वारस्खलनव्याजेन घटं पातयित्वा लोकवञ्चनार्थं रुदति। तदा सख्याः चतुरायाः इयमुक्तिः॥ अत्र-मार्गावलोकनस्य, द्वारप्रवेशसमये स्कन्धे ग्रहणस्य च घटनाशं प्रति हेतुत्वप्रतीतेः, घटनाशस्य रोदनं प्रति हेतुत्वप्रतीतेर्वा काव्यलिङ्गमलङ्कारः इति भाव्यम्। 4 'तदपरं'–ख.

यथावा—(संल० पदे अर्थ० कविनि० अलङ्कारेण वस्तुनः—)

विहलंखलं[1] तुमं सहि !
दट्ठूण कुडेण [2] तरलतरदिट्ठिं ।
वार[3] प्फंससिसेण अप्पा [4]
गुरुओ त्ति पाडिअ विभिण्णो ॥ ९२ ॥

[विशृङ्खलां[5] त्वां सखि !
दृष्ट्वा कुटेन[6] तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेणात्मा[7]
गुरुक इति पातयित्वा[8] विभिन्नः[9] ॥]

अत्र—‘नदीकूले लतागहने कृतसङ्केतं अप्राप्तं गृह-प्रवेशावसरे पश्चादागच्छन्तं[10] दृष्ट्वा पुनः नदीगमनाय

---

## सङ्केतः

विहलंखलमिति । विशृङ्खलां[11] उच्छृङ्खलाम् । सात्त्विक-भावात् । कुडेण[12] घटेन । तरलतरदृष्टिम्[13] अनुरागवशात् । अयं भावः—यो हि गुरुः स्यात् सः किञ्चिदुच्छृङ्खलप्रकृतिं चपलप्रकृतिं च दृष्ट्वा

## मधुमती

उक्तोदाहरणे—गृहद्वारप्रवेशनादेः स्वतस्सम्भवित्वात् कविनिबद्ध-प्रौढोक्तिमात्रनिष्पन्नत्वं नास्तीति अस्वरसादाह—**यथावेति** ॥

---

1 ‘विहलंखण’–क. 2 ‘दिट्ठण घडेण’–ख. 3 ‘दार’–ख. 4 ‘अअप्पा’–क. 5 ‘विह्लल क्षणं’–क. 6 ‘घटेन’–ख. 7 ‘मिषेण चात्मा’–क. 8 ‘पातित’–क. 9 हे सखि! अतिभारवशात् व्याकुलां, अत एव अतिशयितचञ्चलदृष्टिं त्वां दृष्ट्वा, अयं घटः स्वात्मनो गुरुत्वेनैवैवं सम्पन्नमिति मत्वा च द्वारस्पर्शव्याजेन आत्मानं पातयित्वा स्वयमेव विभिन्नः। तावदेव। त्वं तु नैव घटस्य भङ्गं कृतवती इत्यर्थः। 10 ‘दागतम्’–ख. 11 ‘विस्थूलं खलां’–ग. 12 ‘कुटेन’–घ. 13 ‘दृष्टिः’–ग.

द्वारोपघात[1]व्याजेन बुद्धिपूर्वकं व्याकुलया त्वया घटः स्फोटितः इति तव चेष्टितं मया चिन्तितम्,[2] तत् किमिति नाश्वसिषि ?[3] तत्समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये'[4] इति द्वारस्पर्शन-व्याजेनेत्यपह्नुत्या वस्तु ॥

(संल० पदे अर्थ० कविनि० अलङ्कारेण अलङ्कारस्य—)

जोह्लाइ महुरसेण अ
विइण्णतारुण्णउस्सुअमणा सा ।
वुड्ढा वि णवोढव्विअ
परवहुवा अहह हरइ तुह हिअअं ॥ ९३ ॥

[ज्योत्स्नया मधुरसेन च
वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव
परवधूः अहह ! हरति तव हृदयम्[5] ॥]

---

**सङ्केतः**

आत्मानं ततः पृथक्करोति येन केनापि मिषेण इति उक्तिलेशः । **चेतितम्** ज्ञातम् । **समर्थयिष्ये** इत्यन्तं वस्तु अपह्नुत्या व्यज्यते इति योगः ।

**जोह्लाइ** इति । अत्र **ज्योत्स्नामधुरसौ** वाक्यार्थतया उपनिबद्धौ हेतू । **वितीर्णतारुण्या**दि साध्यम् । एकं तावत् **परवधूः**, अन्यच्च **वृद्धा**,

---

1 'द्वाराघात'—क. 2 'इति चेतितम्'—क.- 3 निःश्वसिषि'—ख. 4 'साधयिष्यामि'—क. 5 वृद्धायां परनार्यामासक्तं नायकमुपहसन्ती तरुणी एवमाह— प्रिय ! वृद्धाऽपि सा परवधूः स्वकीयपलितत्वधीतिरोधायिकायाः चन्द्रिकायाः मधुपानस्य च सहकारेणैव तव हृदये नवोढेव सुरतौत्सुक्यं उत्पादितवती । न तु सौन्दर्येण तारुण्यादिना वा । हन्त ! इत्यर्थः ।

अत्र—काव्यलिङ्गेन 'वृद्धां परवधूं त्वं अस्मान् उज्झित्वा अभिलषसि इति त्वदीयमाचरितं वक्तुं न शक्यम्'[1] इत्याक्षेपः परवधूपदप्रकाश्यः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः॥

वाक्यप्रकाश्ये तु पूर्वं उदाहृतम्॥

शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न संभवति।

इत्येवं[2] पञ्चत्रिंशद्भेदाः॥

**प्रबन्धेऽप्यर्थशक्तिभूः॥४२॥**

यथा गृध्रगोमायुसंवादादौ। तथा च—

(प्रबन्धे स्व० वस्तुना वस्तुनः—)

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे॥९४॥

---

### सङ्केतः

साऽपि त्वया अभिलष्यते इति, अहो! कामान्धत्वेन अविवेकित्वमिति व्यङ्ग्यम्॥

भेदाः इति। पूर्वाष्टादशमेलने सप्तदशैते भेदाः पञ्चत्रिंशद्भेदाः (१८+१७=३५) भवन्ति इति भावः॥

अलं स्थित्वेति। अत्र उपयोगित्वात्[3] अर्धद्वयेन एक एव श्लोकः उदाहृतः। भारते तु श्लोकद्वयम्। तत्र 'अल'मित्यस्योत्तरार्धम्—

'कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे।' इति।

### मधुमती

इत्येवमिति। वाक्यप्रकाश्याष्टादशभेद-पदप्रकाश्यसप्तदशभेदाभ्यां सह मिलित्वा पञ्चत्रिंशद्भेदत्वं सम्पद्यते इत्यर्थः॥

---

1 'शक्यते'–ख. 2 एवं इति नास्ति–क. 3 'गित्वेन'–ग.

न चेह जीवितः कश्चित् कालधर्ममुपागतः ।[1]
प्रियो वा यदि वा द्वेष्यः[2] प्राणिनां गतिरीदृशी[3] ॥ ९५ ॥

इति दिवा प्रभवतः गृध्रस्य पुरुषविसर्जनपरं इदं वचनम् ॥

आदित्योऽयं स्थितो मूढाः! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ ९६ ॥
अमुं कनकवर्णाभं बालं अप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं बालाः![4] त्यजध्वं[5] अविशङ्किताः[6] ॥९७॥

---

सङ्केतः

'न चे'त्यस्य तु—

'प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी'। इति[7] ॥

स्थितः। नाद्याप्यस्तमितः इति भावः। कनकवर्णाभमिति। कनकवर्णवत् आभाति इत्यर्थः। यदि वा कनकवर्णयोः हेमकुङ्कुमयोरिव आभा यस्य तत् तथा इत्यर्थः। न पुनः कनकवर्णस्येव आभा यस्येति, अनुप-

---

1 'मुपेयिवान्'–क. 2 'दुष्टः'–ख. 3 श्मशाने शवं निक्षिप्य बहुकालं रुदतः तद्बन्धून् उद्दिश्य, 'सूर्येऽस्तमिते स्वस्य तत्र स्थित्यसंभवेन शवभक्षणं न सङ्घटेत, किन्तु गोमायोरेव स्यात्' इति मत्वा, असूयया सूर्यास्तमयात्प्रागेव 'शवं विसृज्य भवद्भिर्गन्तव्यम्' इत्यभिप्रायवतः गृध्रस्य वाक्यमिदम्। 'स्याच्छरीरास्थि कङ्कालः' इति 'कालधर्मस्तु मरणम्' इति च कोशः ॥ (महाभारते–शां– १५३ अ.) 4 'मूढाः'–क. 5 'त्यक्ष्यध्वं'–ख. 6 अथ च दिवैव शवं विसृज्य बन्धवः गताश्चेत् स्वस्याहारो न भविष्यति, किन्तु गृध्रस्यैव स्यात्' इति मत्वा तदसूयया बन्धूनां तत्रैवावस्थितिबोधनपरा गोमायोरियमुक्तिः। (महाभारते—शां. १५३ अ.) गृध्रः स्वयं भक्षितुमेवं वदति, तत्र विश्वासः न कार्यः। यतः—यथा इष्टप्राप्तौ विघ्नबाहुल्यं, तथा अनिष्टप्राप्तावपि स्यात्। दैवाज्जीवेदपीति भावः। 7 एतद्व्याख्यानुरोधेन अत्र निर्दिष्टं अर्धद्वयं काव्यप्रकाशमूले न पठितमिति भाति।

इति निशि विजृम्भमाणस्य गोमायोः जनव्या-वर्तननिष्ठं च वचनं इति प्रबन्ध एव प्रथते। अन्ये तु एकादशभेदाः ग्रन्थविस्तरभयात् नोदाहृताः। स्वयं तु लक्षणतः[1] अनुसर्तव्याः। 'अपि' शब्दात् पद-वाक्ययोः॥

---

## सङ्केतः

पद्यमानत्वात्॥ **बालाः** मूर्खाः!। **त्यक्ष्यध्वम्**[2] इति आत्मनेपद-क्रियातिपत्ती आर्षत्वात्। **निष्ठं चेति**। वचनमिति योगः। **प्रबन्ध एवेति**। भारतोक्तगृध्रगोमायुसंवादनामकप्रबन्धप्रतिपाद्येनार्थेन गृध्रगोमाय्वोः भक्षणाभि-प्रायः व्यज्यते। स च शान्तरसनिष्ठः॥

## मधुमती

**प्रबन्धेऽपीति**। क्रियत्यपि[3] वाक्ये इत्यर्थः।

---

1 'लक्ष्यतः'–क. 2 'अत्यक्ष्यध्वम्'–घ. त्यक्षध्वमिति पाठः अस्याभिप्रेतः। अत्र अडागमाभावोऽपि आर्षत्वेन निर्वाह्यः। हैमव्याकरणानुसारेण लङ्लकारे क्रियाति-पत्तिशब्दः प्रयुज्यते। पाणिनिस्तु क्रियायाः अनिष्पत्तिरित्यर्थे प्रयुनक्ति। (३-३-१३९) परं तु सर्वत्र मूलपाठः 'त्यजध्व'मित्येव दृश्यते॥ 3 'यद्यपि'–ज.

पदैकदेशरचना-
वर्णेष्वपि रसादयः ॥[1]

(धातुरूपपदैकदेशे सम्भोगशृङ्गारस्य—)

रअकेळिहिअणिअसणकर-
किसलअरुद्धणअणजुअळस्स ।
रुद्दस्स तईअणअणं
पव्वईपरिचुंबिअं जअइ ॥ ९८ ॥

सङ्केतः

वर्णेष्वपीति । निमित्तसप्तमीयम् । तेन—रसादयः पदैकदेशादि-निमित्तेन व्यङ्ग्याः भवन्ति इत्यर्थः । यदा विशिष्टेन पदांशादिना केनाप्युप-कृताः विभावादयः रसास्वादातिशयं कुर्वन्ति, तदा पदांशादेरेव हेतुत्वम्, रसास्वादमात्रे तु विभावादीनाम् । तथा वर्णा अपि मृदुपरुषात्मना श्रुति-कालोपलभ्यमानेन अर्थानपेक्षश्रोत्रग्राह्येण स्वभावेन रसास्वादे निमित्तमेव । विभावादिसंयोगाद्धि रसनिष्पत्तौ सत्यां तदास्वादे वर्णानां निमित्तमात्रत्वात् । एवं—'पदेऽप्यन्ये' इत्यत्र, 'प्रबन्धेऽप्यर्थ' इत्यत्र च निमित्तसप्तम्येव । **पदैकदेशश्च** वक्ष्यमाणप्रकृतिप्रत्ययाद्यंशभेदात् अनेकधा । **रचना** तु दीर्घा-दीर्घसमासभेदात् त्रिधा ॥

मधुमती

**आदि**पदात् भावतदाभासादीनां परिग्रहः । वाक्यस्य पदघटितत्वात्, तयोश्च वर्णघटिततया, यत्र वाक्यस्य रसादिव्यञ्जकता तत्र सर्वेषामेषामपि

1 तिङन्तसुबन्तरूपपदैकदेशेषु धातुप्रातिपदिकादिप्रकृतिषु प्रत्ययेषु उपसर्गेषु च, तथा वैदर्भ्यादिसंघटनासु, अक्षरविशेषेषु, प्रबन्धेषु च रसभावतदाभासभावशान्तिभावो-दयभावसन्धिभावशबलतारूपाः अलक्ष्यक्रमाः संभवन्तीत्यर्थः ।

[रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति[1] ॥]

अत्र—'जयति' इति, न तु[2] 'शोभते' इति । समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेण अस्य नयनस्य पिधानमिति[3] तदेवोत्कृष्टम् ॥

---

## सङ्केतः

रअकेळीति । रतिकेलौ[4] हृतं निवसनं येन स चासौ करकिसलयरुद्धनयनयुगलश्च । यद्वा—रतकेलौ[4] हृतं निवसनं यकाभ्यां[5] कराभ्यां तौ तथा[6] । तौ हि गौर्याः निवसनरक्षणाय यामिकौ कृतौ स्तः । ततः प्रहरके विनष्टे ताभ्यां रुद्धं नयनयुगलं[7] यस्य । यदि वा—रतिकेलौ[4] हृते वसने[8] सति करकिसलयाभ्यां रुद्धं नयनयुगलं[7] यस्येति । तदेवोत्कृष्टम् । इति व्यज्यते इति शेषः । तच्च जयति इत्यत्र जिधात्वंशेन ॥

## मधुमती

व्यञ्जकता । एभिर्विनाकृतस्य वाक्यस्यैव अभावात् । तथाच—क्वचित् कस्यचित् प्राधान्यं विवक्षित्वा वाक्यादेः व्यञ्जकत्वव्यपदेशः इति तात्पर्यम् ॥

न त्विति । 'शोभते' इत्यादिपदैः प्रकर्षमात्रप्रतीतावपि सर्वोत्कर्षाप्रतीतेः, तदप्रतीतौ च—करस्पर्शापेक्षया चुम्बनस्य, करस्थगनापेक्षया चुम्बनस्थगनस्य च उत्कर्षो न[9] प्रतीयेत इति भावः । लोकोत्तरेति ।

---

1 सुरतक्रीडासमये भगवति शिवे पार्वत्याः वसनं हरति सति, तदवलोकनेन सलज्जा देवी करद्वयेन तदीयं नयनद्वयं पिधाय, तदीयं तृतीयं नयनमपि चुम्बनेन मुकुलीचकार । तच्च नयनं नयनद्वयापेक्षया अतीव उत्कर्षेण राजमाना आसीत् इति भावः । लज्जायामपि वैदग्ध्यवर्णनपरमिदं वचनम् ॥ (गा. स. ५-५३) 2 'तु' इति नास्ति–क. 3 'नैव रूपेणास्यापिधानमिति'–ख. 4 'रतकेलौ'–ग. 5 'एताभ्यां'–घ. 6 'तौ तथा' इति नास्ति–घ. 7 'युगुलं'–ग. 8 'निवसने'–घ. 9 'उत्कटेन'–च.

यथा वा[1]—(नामरूपपदैकदेशो सम्भोगशृङ्गारस्य—)

प्रेयान् सोऽयं[2] अपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनात् यावन्न यात्युन्मनाः[3]।
तावत् प्रत्युत पाणिसम्पुटलसन्नीवीनिबन्धं[4] धृतः
धावित्वैव कृतप्रणामकं, अहो! प्रेम्णो विचित्रा गतिः[5] ॥९८॥

अत्र—'पदानि' इति, न तु 'द्वाराणि' इति॥

---

## सङ्केतः

प्रेयानिति। सशपथं इति अपाकृतः पादानतः इति द्वयेऽपि योज्यम्। पाणीति। करपुटधृतमण्डलीकृतनीव्यन्तरे कृत्वा बद्धः। करसम्पुटे लसन् नीव्याः निबन्धः संरोधः यत्रेत्यर्थः। प्रत्युतेति। या किल अनुनीता न प्रसन्ना साऽपि[6] प्रिये याति सति, सपत्नीसङ्गमाशङ्किनी स्वयमेव प्रार्थिका अभूत् इति व्यज्यते। प्रेम्णः इति। यावत् पदत्रयमपि न याति, तावत् धृतः इति च स्नेहातिशयः व्यङ्ग्यः॥

## मधुमती

करादिना स्थगनमात्रम्, चुम्बनेन तु स्थगनं क्रीडा चेति द्वयमुपपन्नमिति, अस्य लोकोत्तरत्वम्। अत्र उत्तमदेवताविषयसम्भोगवर्णनस्य अनौचित्यात् आभासत्वम्॥

न तु द्वारादीनीति। बुद्धिपूर्वक[7]गमने हि तथा युज्यते। तथा च—पदानि इत्यनेन किङ्कर्तव्यताव्यामोहप्रयुक्तत्वं गमनस्य युज्यते।

---

1 'तथा'–ख. 2 'सायं'–क. 3 'यात्यात्मना'–क. 4 'नितम्बं'–ख.
5 कयाचन मानिन्या सोऽयं परमप्रेमविषयोऽपि नायकः सशपथं पादयोः प्रणतोऽपि यदा निराकृतः निर्विण्णः क्रीडागृहात् प्रस्थितः सन् द्वित्राण्यपि पदानि यावत् न गच्छति, तावदेव प्रसन्ना सती इयं मानिनी नीवीविश्लथनभिया करतलधृतनीवीबन्धं यथा भवति तथा धावित्वैव सप्रणामं स्वयमेव तं प्रियं निवार्य, पदान्तरचलनमपि यथा न करोति तथा तं धृतवती। प्रेम्णो ह्ययं स्वभावः अत्याश्चर्यावहः इति भावः॥
6 'अपि' इति नास्ति–घ. 7 'पूर्वकमिति'–ज.

तिङ्सुपोः यथा—(पदैकदेशयोः सम्भोगशृङ्गारस्य—)

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां[1]
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि वि[2]निवृत्ता मानिनीमानचर्चा[3] ॥ १०० ॥

अत्र—'किरति' इति किरणस्य साध्यमानत्वम्[4], 'विनिवृत्ता' इति निवर्तनस्य सिद्धत्वं तिङा सुपा च । तत्रापि क्तप्रत्ययेन अतीतत्वं द्योत्यते ॥

---

## सङ्केतः

पथीति । अत्र कार्यकारणपौर्वापर्य[5]विपर्ययरूपा अतिशयोक्तिः ॥

## मधुमती

यद्वा—द्वारपर्यन्तगमने सहिष्णुतया अनुरागशैथिल्यं स्यात् इति पदानीत्यनेन अनुरागाधिक्यं प्रतीयते ॥

अत्रेति । किरति इति कर्तरिप्रत्ययविधानात् कर्ता लकारवाच्यः । साध्यमानत्वं व्यङ्ग्यम् । एवं निवृत्ता इत्यत्रापि प्रातिपदिकार्थादि सुपो वाच्यम् । सिद्धत्वं तु व्यङ्ग्यमेव । तथा क्तप्रत्ययस्यापि भावादिः अर्थः । अतीतत्वं[6] तु व्यङ्ग्यम् ॥

---

1 'रम्भाङ्कुराणां'–क. 'रागाङ्कुराणां'–ख. 2 'पुरि च'–ख. 3 वसन्तवर्णनमिदम् । प्रतिमार्गं नवनवाङ्कुराणां कान्तिः शुकचञ्चुवद्रक्ता मनोहरा दृश्यते । प्रतिदिशं च लतानां नर्तक इव चालयिता मन्दमारुतो वाति । काले चास्मिन् कामदेवः प्रतिपुरुषं झटिति आत्मनः पञ्चापि बाणान् क्षिपति । एवं सर्वविधकामोद्दीपनेनोद्दीपितानां मानिनीनां मानकथाऽपि निःशेषतो निवृत्ताऽभवत् । किरणस्य—किरणव्यापाररूपधात्वर्थस्य । क्तप्रत्ययेन च किरणव्यापारकार्यभूतमाननिवर्तनस्य चिरकालसिद्धता इत्यर्थः ॥ 4 'साध्यत्वम्'–क. 5 'अत्र कारणपूर्वापरत्व'–ग. 6 'अर्थः । भीतत्वं'–च.

यथा वा—(पदैकदेशयोः तिङ्सुपोः विप्रलम्भशृङ्गारस्य—)

लिखन् आस्ते भूमिं बहिरवनतः प्राणदयितः
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः
तवावस्था चेयं विसृज कठिने! मानमधुना[1] ॥१०१॥

अत्र—'लिखन्' इति, न तु 'लिखति' इति । तथा 'आस्ते' इति, न तु 'आसितः' इति; अपि तु प्रसादपर्यन्तं आस्ते इति । 'भूमिं' इति, न तु 'भूमौ' इति; न हि बुद्धिपूर्वकं अपरं किञ्चित् लिखति इति च तिङ्सुप्विभक्तीनां व्यङ्ग्यम् ॥

---

## सङ्केतः

न तु लिखतीति । लिखतीत्युक्ते प्रसादपर्यन्तं इति न लभ्यते । तेन लिखन् इत्येव युक्तम् । सर्वत्र सुबादीनां आकूतविशेषव्यञ्जकत्वम् । स तु आकूतः व्यक्तः सन् यथायोगं विभावादिरूपताद्वारेण[2] रसादिकं व्यनक्ति । आस्ते इति[3] । न लिखित्वा गतः, किन्तु अद्यापि लिखन् वर्तते एवेत्यर्थः । न तु भूमाविति । आधारत्वे हि चित्रलिखनस्यैव प्राधान्यं स्यात्, न तु तस्याः प्रसादस्य । अतो भूमिं इत्युक्तमिति भावः ॥

---

1 काचन सखी बहुदिनानुवृत्तमानवतीं प्रत्याह—अयि कठिनहृदये! प्राण इव दयितः तव प्रियः गृहद्वारि अवनतमुखः सन् शून्यहृदयतया भूमिं विलिखन् आस्ते । सख्यश्च संततरोदनेन उच्छूननयनाः संवृत्ताः । पञ्जरगतैः शुकैश्च सर्वविधं हासकारिवचनमपि परित्यक्तम् । तव च इयं कण्ठगतप्राणत्वावस्था । सखि! अद्यापि वा इदं मानं मुञ्च इति ॥ (अमरुशतके. ६.) 2 'रूपद्वारेण'–ग. 3 'न त्वासित इति'–घ.

सम्बन्धस्य यथा—(षष्ठीप्रत्ययेन पदैकदेशेन शृङ्गारस्य—)

गामारुहम्मि गामे वसामि णअरट्ठिइं ण आणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥

[ग्रामरुहाऽस्मि[1] ग्रामे वसामि
नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि
या भवामि सा भवामि[2] ॥ १०२ ॥]

अत्र—'नागरिकाणां' इति षष्ठ्याः ॥

---

### सङ्केतः

ग्रामेति । ग्रामरुहा ग्रामीणा । नागरिकाः विदग्धाः । षष्ठ्याः इति । व्यञ्जकत्वमिति योगः । समासे हि सम्बन्धमूढत्वे[3] सति नागरि

### मधुमती

षष्ठ्याः इति । ननु—'षष्ठी चानादरे'[4] इति अनादरः षष्ठीवाच्य

---

1 'ग्रामीणाऽस्मि'-क. 'ग्राम्याऽस्मि'-ख. 2 स्वकामुकोपभोगकुपितया नागरिकया कयाऽपि ग्राम्याऽसीति सनिन्दमुपालब्धायाः कस्याश्चित् ग्राम्यायाः वचनमिदम्—अरे! अहं ग्रामजाताऽस्मि, ग्रामे वसामि, अत एव जन्मारभ्य अद्ययावत् नागरिकीं वैदग्धीं न जानामि त्यादिसर्वं सत्यमेव। अथापि सुरततन्त्रकुशलानां नगरसुन्दरीणां पतीनपि सर्वान् तासुपश्यन्तीष्वेव वशीकरोमि। पश्य, अहं या भवामि सा भवामि इति ॥ (गा. स. ७०५). 3 'गूढत्वे'-ग. नागरिकपतीनिति समासे हि समासार्थसम्बन्धस्य आसक्त्वात् नागरिकान् पतीन् इत्येवार्थो लभ्येतेति-भावः। 4 (पा. सू. २-३-३८).

(लङ्प्रत्ययरूपपदैकदेशेन रौद्रस्य—)

"रमणीयः क्षत्रियकुमारः आसीत्"[1] इति कालस्य[2]।
एष हि भग्नमाहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः ॥

---

## सङ्केतः

काणां अभावो लभ्येत। असमासे तु साक्षात् षष्ठीत्वात् नागरिकाणां सद्भावः लभ्यते। तदयमर्थः—याः नागरिकाः सौभाग्यादिना सत्त्वेन च जीवन्त्यः, तासु प्रसक्तानपि पतीन् अपहरामि—इति ॥

आसीत् इति अतीतनिर्देशात् कथाशेषत्वं व्यज्यते ॥

## मधुमती

एव। तत् कथं व्यङ्ग्यः? इति चेत्—न। शेषे षष्ठी' इति शैषिकषष्ठ्या एव[3] वक्त्रादिवैशिष्ट्यसहकारेण अनादरव्यञ्जकत्वात् इति ॥

**कालस्येति**। अतीतकाले विहितस्य लङ्प्रत्ययस्येत्यर्थः। अन्यथा पदैकदेशव्यञ्जकत्वप्रस्तावे कालस्य[4] व्यञ्जकत्वोपदर्शनं असङ्गतं स्यात्। स्वकरहननीयत्वं चात्र व्यङ्ग्यम् ॥ **एषेति**। तथा च रौद्रो रसः इति भावः ॥

---

1 (महावीरचरिते २-२)। 2 तिङन्तेन षडर्थाः प्रकाश्यन्ते—कालः, क्रिया, उपग्रहः, साधनं, संख्या, पुरुषश्चेति। तत्र आद्यं त्रयं प्रकृतिरभिधत्ते, अन्यत् सर्वं प्रत्ययः इति विवेकः। तत्रेदं कालस्योदाहरणम्। 3 'तत् कथं' इत्यादि एतत्पर्यन्तं नास्ति–ज. 4 'काल'–च,

वचनस्य यथा—(पदैकदेशेन वचनेन विप्रलम्भशृङ्गारस्य—)

ताणं गुणग्गहणाणं
ताणुक्कंठाणं तस्स पेम्मस्स ।
ताणं भणिआणं सुंदर !
एरिसअं[1] जाअमवसाणं ।। १०३ ।।

[तेषां गुणग्रहणानां तासां उत्कण्ठानां तस्य प्रेम्णः ।
तासां भणितीनां[2] सुन्दर ! ईदृशकं[3] जातमवसानम्[4] ।।]

अत्र—गुणग्रहणादीनां बहुत्वं प्रेम्णश्च एकत्वं द्योत्यते।।

---

### सङ्केतः

बहुत्वमिति । अनेकशः गुणग्रहणादि कृतवान् इत्यर्थः । स्मर्यमाणं हि वस्तु रतिं[5] उद्दीपयतीति भावः । एकत्वं अद्वितीयत्वम् । एरिसअं इत्यत्र कप्रत्ययः अतीव निन्द्यं वैराग्यं व्यनक्ति[6] ।।

### मधुमती

अत्र गुणेति । यद्यपि–'प्रातिपदिकार्थलिङ्ग'[7]त्यादिस्वरसात् वचनमपि सुपा वाच्यमेव । तथापि "प्रातिपदिकार्थलिङ्गे एव वाच्ये, न तु वचनमपि"। इति महाभाष्यकारवचन[8]माश्रित्य एवं अभिधानम् ।।

---

1 'एरिसिअं'–क 2 'तेषां भणितानां'–ख. 3 'ईदृशं'–क. 4 पूर्वं अत्यन्तमनुरक्तं कदाचिदपराद्धं च नायकं प्रति नायिका आह—अयि सुन्दराङ्ग ! तेषां गुणवर्णनानां, मयि जातानां तासामुत्कण्ठानां, 'त्वमेव मम जीवितसर्वस्वं' इत्यादीनां तेषां प्रेमवचनानां, तस्य प्रेम्णश्च, एवंविधान्यानुरागरूपापराधकलुषितं पर्यवसानं जातमिति शोचामीत्यर्थः ।। (गा. स. ९४०). 5 'रसं'–ग. 6 'वक्ति'–घ. 7 (महाभाष्ये २-३-५) 8 'कारमत'–च.

पुरुषव्यत्ययस्य यथा—(पुरुषव्यत्ययेन शान्तस्य—)

रे रे चञ्चललोचनाञ्चितरुचे! चेतः! प्रमुच्य स्थिर-
प्रेमाणं महिमानं एणनयनामालोक्य किं नृत्यसि?।
किं[1] मन्ये विहरिष्यसे? बत! हतां मुञ्चान्तराशामिमां
एषा कण्ठतटे शिला खलु कृता संसारवारांनिधौ[2] ॥१०४॥

अत्र—प्रहासः ॥

---

## सङ्केतः

रे रे इति। अत्र चञ्चलयोः लोचनयोः अञ्चिता अपचिता रुचिः अभिलाषः यस्य। यद्वा—चञ्चले लोचने अञ्चिता—गमिता रुचिः येन चेतसा, तस्य आमन्त्रणम्। किं मन्ये इति। त्वं एवं मन्यसे—यत्—'अहं तया सह क्रीडिष्यामि' इति अन्तः मध्ये या आशा तां मुञ्च। अत्र मन्ये इत्यत्र मध्यमपुरुषप्राप्तौ उत्तमस्य विधानात् व्यत्ययः। तेन प्रहासः व्यज्यते ॥

## मधुमती

अत्र प्रहासः इति। 'प्रहासे च मन्योपपदे'[3] इति व्यत्ययप्राप्त-मध्यमोत्तमपुरुषरूपपदैकदेशव्यङ्ग्यः[4] इति शेषः ॥

---

1 'त्वं'–क. 2 कश्चिद्विरक्तः कस्याश्चन सुन्दर्याः दर्शनेन क्षुभितं स्वचित्तं उपहसति—रे रे! चञ्चलनेत्रासु कामिनीषु निविष्टाभिलाष! दुष्ट हृदय! अक्षय्यानुग्रहं महामहिमशालिनं भगवन्तं त्यक्त्वा, इमां मृगाक्षीमालोक्य कुतो हर्षादुल्लोलं भवसि। विहरिष्यामीति मन्यसे किम्? हन्त! निन्दितामिमां अन्तःप्रसृतामाशां मुञ्च। एषा हि कामिनी संसारवारिधौ प्लवमानानां कण्ठतटे निबद्धा शिला खलु। इति ॥ 3 (पा. सू. १-४-१०६)। 4 'व्यङ्ग्यता'–ज.

पूर्वनिपातस्य यथा—(पूर्वनिपातेन भावस्य—)

येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः[1] कार्यं किमुर्वीश्वरैः ?।
ये क्ष्माशक्र ! पुनः पराक्रमनयस्वीकारकान्तक्रमाः
ते स्युः नैव भवादृशाः त्रिजगति द्वित्राः पवित्राः परम्[2] ॥१०५॥

अत्र—पराक्रमस्य प्राधान्यं व्यज्यते ॥

---

## सङ्केतः

दोर्बलमेवेति। न तु नीतिबलम्। अत्रेति। अल्पस्वरतरत्वात्[3] नयशब्दस्य पूर्वनिपाते प्राप्तेऽपि, विक्रमस्य अर्चितत्वेन पूर्व[4]निपातः। स चास्य अर्चितत्वं व्यनक्ति ॥

## मधुमती

अत्र पराक्रमस्येति। परक्रमनयेत्यादि सामासिकं पदम्। तदेकदेशः पराक्रमशब्दः। स च प्राक् प्रयुज्यमानः व्यञ्जकः इत्यर्थः ॥

---

1 'रीतिकुशलैः'–क. 2 येषां राज्ञां केवलं बाहुबलमेव वर्तते, न तु नीत्यादिबलं, ते सत्यं दुर्बला एव। ये नीतिमात्रशरणाः तेऽपि अप्रयोजका एव। हे भूमीन्द्र ! ये पुनः भवादृशाः पराक्रमनयोभयशालिनः सन्तः मनोहरवृत्तयः त एव महान्तः। परं तु तादृशाः त्रिजगत्यपि न लभ्यन्ते। लभ्यमाना अपि द्वित्राः न भवानिव पवित्रचरित्राः इत्यर्थः ॥ 3 'स्वरत्वात्'–ग. अल्पाच्तरम्—(पा. सू. २-२-३४)। 4 'पूर्व' इति नास्ति–घ. अभ्यर्हितं च—(वा. २-२-३४)।

विभक्तिविशेषस्य यथा—(उपपदविभक्त्या भावस्य—)

प्रधनाध्वनि धीर! धनु-
ध्वनिभृति विधुरैः अयोधि तव दिवसम्।
दिवसेन तु नरप! भवान्
अयुद्ध विधिसिद्धसाधुवादपदम्[1] ॥ १०६ ॥

अत्र—'दिवसेने'ति अपवर्गे तृतीया फलप्राप्तिं द्योतयति[2] ॥

---

## सङ्केतः

प्रधनेति। प्रधनं युद्धम्। दिवसमिति। 'कालाध्वनोरत्यन्तसंयोगे'[3] इति आधारे द्वितीया[4]। दिनान्तं[5] क्षणमपि युद्धशून्यं न तैः स्थितम्। फलप्राप्तिस्तु तवैवाभूत्—इत्याशयः। अत्रेति। अपवर्गः फलप्राप्तौ सत्यां क्रियानिष्पत्तिः। तथाच युद्धफलं जयरूपं तवैव जातमिति भावः। अत एव साधुवादपदं इत्युक्तम् ॥

## मधुमती

अत्र दिवसेनेति। क्रियापरिसमाप्तिमात्रं तृतीयार्थः। फलप्राप्तिस्तु व्यङ्ग्या इति द्रष्टव्यम्। इदमुपलक्षणम्—दिवसं इति द्वितीययाऽपि फलप्राप्तिः[6] व्यज्यते। अत्यन्तसंयोगस्य तावत्येव पर्याप्तेः। फललाभे क्रियाऽनाचरणात्[7] ॥

---

1 गम्भीरचापटङ्कारपरिपूरिते रणवर्त्मनि तव शत्रुभिः सर्वस्मिन्नपि दिवसे क्षणमप्यविरमय्य निष्फलं युद्धं कृतम्। त्वं तु ब्रह्मदेवेन सिद्धकिन्नरादिभिश्च यथा साधुसाध्विति जयघोषः भवति तथा एकेन दिवसेन युद्धमकरोः इत्यर्थः॥
2 'दर्शयति'–ख. अपवर्गे तृतीया–(पा. सू. २-३-६)। 3 (पा. सू. २-३-५)
4 'आधारद्वितीया'–घ. 5 'दिनान्तः'–ग. 6 'फलाप्राप्तिः'–ज. 7 'क्रियाचरणात्'–ज.

(प्रकृत्येकदेशतद्धितेन विप्रलम्भशृङ्गारस्य—)

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात् कामं नवमिव रतिः मालती माधवं यत्
गाढोत्कण्ठा ललितललितैः[1] अङ्गकैः ताम्यतीति[2] ॥१०७॥

अत्र अनुकम्पानुवृत्तेः 'क'रूपतद्धितस्य ॥

---

## सङ्केतः

**भूयः** इति । **सविधे** समीपे या **नगरीरथ्या** तया । **नवमिव** पुनर्जीवितमिव । **ललितललितैः** वीप्सया अतीव रम्यैः । यदि वा—ललितानि चारूणि, ललिताः विलासाः येषां इति । क्वचिच्च 'लुलिते'ति पाठः । तदा लुलितानि—तन्मयीभूतानि, ललितानि—विलासाः येषाम् । न कदाचित् निर्विलासानीत्यर्थः । **इतिः** अनुभवप्रकारे[3] । **तद्धितस्येति** । अभिलाषरसस्य सौकुमार्यस्य च[4] अत्र व्यञ्जकः तद्धित'क'प्रत्ययः ॥

## मधुमती

**करूपेति** । अत्रापि अल्पार्थे कन्, न तु अनुकम्पायाम् । व्यङ्ग्यत्वाभिधानविरोधात्[5] ॥

---

1 'लुलितलुलितैः'—क. 'ललितलुलितैः'—ख. 2 मालतीमाधवे कामन्दक्याः वचनमिदम् । प्रासादस्थितोन्नतगवाक्षसमीपे स्थिता मालतीयं संनिहितनगरराजमार्गेण सञ्चरन्तं नपुण्मन्तमभिनवं साक्षान्मदनमिव स्थितं माधवं पुनः पुनः दर्शंदर्शं गाढाभिलाषा रतिरिव अतिम्लानैः अनुकम्प्यैरङ्गैः ग्लायतीति यत्, तत् लवङ्गिकया नः कथितमेवेत्यर्थः ॥ (मालतीमाधवे १-१५). 3 'अशुभप्रकारे'—ग. 4 'वा'—घ. 5 'विरोधाद्येति'—च.

(प्रकृत्येकदेशेन उपसर्गेण विप्रलम्भशृङ्गारस्य—)

परिच्छेदातीतः सकलवचनानां अविषयः
पुनः जन्मन्यस्मिन् अनुभवपथं[1] यो न गतवान् ।
विवेकप्रध्वंसात् उपचितमहामोहगहनः
विकारः कोऽप्यन्तः जडयति च तापं च कुरुते[2] ॥१०८॥

अत्र—प्रशब्दस्य उपसर्गस्य ॥

(निपातरूपपदैकदेशेन वीररसस्य—)

कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।

---

## सङ्केतः

पुनर्जन्मनि इत्यत्र द्वितीयवारमात्रे पुनश्शब्दः । प्रशब्दस्येति । प्रकर्षेण ध्वंसात् 'निर्मूल[3]काषं कषितो विवेकः' इति ध्वन्यते ॥

---

1 'पदं'–क. 2 'च तनुते'–ख. मकरन्दं प्रति माधवस्य स्वावस्था-कथनमेतत् । ईदृक्तया इयत्तया च परिच्छेत्तुमशक्यः, वाचामगोचरः, जन्मन्येवास्मिन् कदाऽप्यननुभूतपूर्वः, विवेकस्यात्यन्तिकनाशात् महामोहस्योपचयाच्च लङ्घितुमेवाशक्यः, मनसाऽप्यनुल्लेख्यः कोऽप्ययं कामजो विकारः मदीयं अन्तःकरणं इतिकर्तव्यताविमूढमेव करोति, विरहसन्तापं च परिवर्धयति ॥ (मालतीमाधवे १-३०). 3 'निमूल'–ग.

तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम्[1] ॥ १०९ ॥

अत्र—तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ॥

---

## सङ्केतः

च इतीति । अत्र चकारः तुल्ययोगितां जल्पन् वीररसं विश्रान्तिप्रधानतया व्यनक्ति । पदसम्बद्धाः एव चादयः स्युः—इति एषां पदैकदेशता ॥

## मधुमती

निपातस्येति[2] । निपातत्वेन अनर्थकत्वं[3] ब्रुवता 'समुच्चयो नाभिधेयः, किन्तु व्यङ्ग्यः' इति प्रतिपाद्यते । यद्यपि—उपसर्गाः निपाताश्च पदान्येव, न तु पदैकदेशाः, तथापि प्रकृते स्वतन्त्रप्रयोगाविषयत्वेन[4] पदैकदेशत्वव्यपदेशः । तेन च नात्र पदस्य पदैकदेशव्यञ्जकत्वप्रस्तावाभिधानविरोधः[5] इति ध्येयम् ॥

---

1 भगवन्तं प्रति सुराणामिदं वचनम् । स्वामिन्! भवता केवलं 'मम दैत्यहननं कियत्?' इति अहंकाराभिमुखं मनः कृतम् । न तु गर्वितम् । तावतैव अस्माकं सर्वे रिपवः हताः । किं बहुना? यावत् उदयाचलशेखरं नायाति सूर्यः, तावदेव खलु तमांसि तिष्ठन्ति ॥ इति ॥ 2 'निपातस्येति' इति नास्ति–ज. 3 'नानार्थकत्वं'–च. 4 'प्रयोगविषयस्यैव'–ज. 5 'विरोधात्'–च.

(बहूनां वीररसव्यञ्जने—)

**रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-**
**मस्मद्भाग्यविपर्ययाद् यदि परं देवो न जानाति तम् ।**
**वन्दीवैष यशांसि गायति मरुत् यस्यैकबाणाहति-**
**श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः[1] ॥११०॥**

अत्र—'असौ' इति, 'भुवनेषु' इति, 'गुणैः' इति सर्वनामप्रातिपदिकवचनानां, न त्वत् इति न मत्

---

### सङ्केतः

रामोऽसाविति । राघवानन्दे कुम्भकर्णोक्तिः[2] । अत्र प्रस्तावात् देवः त्वमित्यर्थः । **एकबाणाहत्या श्रेणीभूतविशालतालानां यत् विवरं** तेन **उद्गीर्णैः** । **सर्वनामेति** । सामान्येन यत् नाम तत् प्रातिपदिकम् । यत्तु विशिष्टं सर्वादिगणोक्तं तत् सर्वनाम । वचनानां एकद्वित्र्यादिरूपाणाम् । व्यञ्जकत्वमिति योगः ॥ तेन च **असौ प्रसिद्धः** अद्वितीयः इति, **भुवनेषु** न तु एकस्मिन् भुवने इति, **गुणैः** अनेकैः[3] न त्वेकेन इति च ध्वन्यते । **न त्वदित्यादि[4]** । **त्वत्** इत्युक्ते हि रावणस्यैव, **मत्**

### मधुमती

**अत्र—असौ इति ।** असौ इति **सर्वनाम्ना** रामान्तरापेक्षया वैलक्षण्यम्, **भुवनेषु** इति बहुवचनेन **प्रसिद्धेः** अनपह्नवनीयत्वम्, **गुणैः** इति **प्रातिपदिकेन** न गुणेन नाप्यगुणैः इति च व्यज्यते । **न त्वदिति ।**

---

1 सुवेलकृतसंनिवेशं कपिबलमवलोक्य 'अत्र को वा रामः ?' इति कृतप्रश्नं रावणं प्रति चारो वदति—भूर्भुवस्सुवर्लोकेषु विक्रमेण आत्मगुणैश्च परां प्रसिद्धिं प्राप्तः असावेव रामः । तं भवानेव न जानाति यदि, तर्हि तत् अस्मदीयदुरदृष्टवशादेव । यस्य कीर्तीः एष मरुत् वैतालिक इव तद्विसृष्टैकबाणमात्राहत्या एकरेखाऽन्तःपातितया कृतेषु विशालसप्तसालविवरेषु उद्भूतैः सप्तभिः स्वरैरपि गायति ॥ इति ॥ (राघवानन्दे).
2 उद्योते तु 'इयं रावणमुद्दिश्य विभीषणोक्तिः ।' इति दृश्यते । 3 'अनन्तैः'–ग.
4 'न यदिति'–घ.

**इति, अपि तु अस्मत् इत्यस्य सर्वाक्षेपिणः व्यञ्ज-कत्वम्,[1] भाग्यविपर्ययात् इति अन्यथासम्पत्तिमुखेन, न तु अभावमुखेन, अभिधानस्य ॥**

---

## सङ्केतः

इत्युक्ते वक्तुरेव भाग्यव्यत्ययः ध्वन्यते। **अस्मत्** इति बहुवचनान्ततया उक्ते तु 'तव च मम कुलस्य च' इति सर्वेषां आक्षेपः इत्यर्थः। **अन्यथेति**। **भाग्यानां** अभावात् इति नोक्तम्, किन्तु **विपर्ययात्** इति। यान्येव भाग्यानि अस्माकं प्रभुत्वाय अभूवन्, तान्येव **अन्यथासम्पन्नानि** सन्ति, क्षयहेतुत्वात् व्यत्ययरूपाणि जातानि। पुण्याभावे हि प्रभुत्वमेव न स्यात्, न पुनः प्रत्युत क्षयः स्यात्। अयं भावः—पुण्यान्येव अपुण्यतया परिणतानि अस्मत्कुलं क्षयं नेष्यन्तीति व्यज्यते इति ॥

## मधुमती

तव भाग्यविपर्ययः—त्वद्भाग्यविपर्ययः, मम भाग्यविपर्ययः मद्भाग्यविपर्ययः, अस्माकं भाग्यविपर्ययः **अस्मद्भाग्यविपर्ययः**—इति समासेषु आद्ययोः[2] एकवचनान्तस्य समस्यमानतया[3] नियतविषयत्वम्, अन्त्ये तु बहुवचनान्तस्य समस्यमानतया सर्वाक्षेपित्वं—इत्यर्थः। **रामोऽसौ** इत्यत्र नानापदैकदेशे सर्वनामादीनां व्यञ्जकत्वं उक्तम्। अत्र तु एकस्मिन्नेव **अस्मद्भाग्य-विपर्ययात्** इति सामासिकपदे तेषां व्यञ्जकत्वं उक्तमिति ततो भेदः। अत्र **अस्मच्छब्देन** ये रामाय न द्रुह्यन्त्यपि तेषामप्यविनाशः[4] प्रतीयते। वचनप्रातिपदिकयोः व्यञ्जकता मूले एव स्फुटा ॥

---

1 'व्यञ्जकत्वं' इति नास्ति। 2 'समासः। शिष्टाद्ययोः'–ज. 3 'न्तस्य मानतया'–ज. 4 'अपि नाशः'–ज.

(बहूनां शृङ्गाररसव्यञ्जने—)

तरुणिमनि कलयति कलां
अनुमदनधनुः भ्रुवोः पठत्यग्रे ।

---

## सङ्केतः

तरुणिमनीति । मदनश्च, प्रस्तावात् तस्य धनुश्च ते तथा, तयोः समीपे । अयं भावः—यत् तारुण्यं कलां कलयति तत् तस्य स्पर्धयेव भ्रुवोरग्रं अग्रभागः[1] कलां पठति । एतेन उपाध्यायस्यैव वक्रत्वे[2] तच्छिष्यस्य ततोऽप्यतीव वक्रतैवेति[3] ध्वन्यते । यस्याः भ्रूतारुण्यात्मकानि अङ्गान्यपि

## मधुमती

तरुणिमनीति । अत्र भ्रुवोः अग्रे पठति सतीत्यर्थः । कलां इति एकमेव पदं कलयति पठति इत्युभयत्रापि आवृत्त्या[4] अन्वेति । अत्रेति । 'रचनावर्णेष्वपि' इति श्रवणात् अत्रापि इमनिचा बन्धसौकुमार्य-परेण नवोद्भिद्यमानं[5] वयः प्रतीयते । त्वप्रत्ययेन तु बन्धस्य गाढतया प्रौढम् । अव्ययीभावेन तु धनुषः नित्योपसर्जनताप्रतीत्या तद्वैलक्षण्यं भ्रुवोः व्यज्यते । मदनधनुषः समीपद्रव्याभिधाने तु धनुषः इति पञ्चमीभ्रमे 'धनुषः एव पठती'[6]त्यर्थप्राप्तौ धनुषो गुरुत्वस्य शाब्दत्वत् । एवं च अभिधानेन व्यञ्जनागम्यमिति चमत्कारः ॥ एवं 'गौलौ वसति' इति

---

1 'भ्रुवोरग्रभागः'–ग. 2 'वक्रत्वे'–ग. 3 'वक्रता'–ग. 4 'इत्यत्र वृत्त्या'–च. 5 'परेण तूद्भिद्यमानं'–ज. 6 'एव वदती'–ज.

अधिवसति सकलललना-
मौलिमियं चकितहरिणचलनयना[1] ॥ १११ ॥

अत्र—इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य 'तरुणत्वे' इति 'धनुषः समीपे' इति 'मौलौ वसति' इति त्वादिभिः[2] तुल्येऽपि एषां वाचकत्वे, अस्ति कश्चित् स्वरूपस्य विशेषः, यः चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति । एवं अन्येषामपि बोद्धव्यम् ॥

---

## सङ्केतः

परस्परस्पर्धया सविभ्रमाणि, सा तदाधारः सकलानां चतुराणां समस्तानां वा ललनानां कथं न मौलिं अधिवसति ? । चकितेति विशेषणपदम् । एतेन नेत्रविभ्रमः उक्तः । स एव विशेषः । व्यञ्जकत्वं इमनिजादीनां स्वरूपस्य, विभावादि[3]द्वारतया पारम्पर्येणेत्यर्थः । अन्येषामपीति । पदैकदेशानामित्यर्थः ॥

## मधुमती

आधारतामात्रं प्रतीयते । मौलिं अधिवसति इति[4] कर्मभूताधारनिर्देशे तु सर्वव्यापित्वं व्यज्यते । यद्यपि—'मौलौ वसति' इत्यत्रापि अभिव्यापकाधाराश्रयणे प्रकृतार्थलाभः भवत्येव । तथापि औपश्लेषिकाधारसम्भवेन द्राक्[5] न तथा प्रतीयेत[6] । कर्मभूताधाराभिधाने तु झटित्येव तथा प्रतीतिरिति । अत एव चमत्कारकारी[7] इत्युक्तम् ॥

---

1 अस्याः त्रस्तमृगेक्षणायाः कामिन्याः किञ्चिद्यौवनोन्मेषदशायामेव शिष्यरूपे भ्रुवोः प्रान्ते (कर्तरि) गुरुरूपस्य कामधनुषः सकाशात् कामकलाः पठति सति, इयं सद्यः सर्वासां सुन्दरीणां शिरसि चूडामणिरिव विभातुमारब्धा इत्यर्थः ॥ 2 'वसतीत्यादिभिः'–क. 3 'व्यञ्जकत्वं व्यञ्जकस्य इमनिजादीनां व्यङ्ग्यव्यञ्जकविभावादि'–घ. 4 एवं इत्यारभ्य एतत्पर्यन्तं नास्ति-च. 5 'प्राक्'–च. 6 'प्रतीयते'–ज. 7 'चमत्करोति'–च.

**वर्णरचनानां व्यञ्जकत्वं[1] गुणस्वरूपनिरूपणे[2] उदाहरिष्यते ॥**

**'अपि' शब्दात् प्रबन्धेषु नाटकादिषु ॥**

**एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड् भेदाः ॥**

## भेदाः तदेकपञ्चाशत् ॥

**व्याख्याताः ॥**

---

### सङ्केतः

**वर्णेति ।** आसां साक्षात् माधुर्यादिगुणव्यञ्जकत्वमेव, तद्द्वारेण तु रसेषु उपयोगः ॥

**भेदाभ्यामिति ।** पूर्वोक्ताभ्यां वाक्यपदप्रकाश्याभ्यामित्यर्थः ॥

### मधुमती

अलक्षित[3]क्रममधिकृत्याह—**एवमिति** ॥

**पूर्वगणितभेदाभ्यां** वाक्यपदरूपाभ्याम् ॥ तथा च—वाक्य-पद-प्रबन्ध-पदैकदेश-रचना-वर्णात्मकव्यञ्जकभेदात् व्यङ्ग्यत्वेन[4] षट्त्वं इत्यर्थः । एवं च वक्ष्यमाणैकपञ्चाशद्ध्वनिषु—षड् भेदाः वाच्यत्वासहस्य, पञ्चचत्वारिंशद्भेदाः वाच्यत्वसहस्य—इत्युक्तं भवति ॥ **न च**—'भेद एको हि गण्यते' इत्यनेन विरोधः । व्यङ्ग्यभेदनिबन्धनभेदस्य विवक्षितत्वेन, व्यञ्जकभेदनिबन्धनभेदस्य तथात्वात्, अविरोधात्[5] । **अत एव**—शब्दव्यङ्ग्यत्वेन सर्वेषां ऐक्यात् भेदानुपपत्तिर्वा, रसत्वभावत्वाद्युपाधिभेदमादाय आधिक्यं वा स्यात्—इत्यनुयोगोऽपि स्वतन्त्रेच्छे शास्त्रकर्तरि निरवकाशः । अन्यथा पतिभावोच्छेदापत्तेः इति दिक् ॥

उपसंहरति—**भेदाः इति** । पूर्वगणितपञ्चत्रिंशत्सङ्ख्याकेषु ध्वनिषु

---

1 'व्यञ्जकः'–ख. 2 'निर्णये'–क. 3 'अलक्ष्य'–च. 4 'तत्तद्व्यङ्ग्यत्वेन'–ज. 5 'अविरोधः'–ज.

**तेषां चान्योन्ययोजने**[1] **॥**
**सङ्करेण त्रिरूपेण**
**संसृष्ट्या चैकरूपया ॥**

न केवलं शुद्धा एव[2] एकपञ्चाशद्भेदाः भवन्ति, यावत् तेषां स्वप्रभेदैः एकपञ्चाशता, संशयास्पदत्वेन

---

## सङ्केतः

**तेषामिति** । प्रत्येकमिति शेषः । **स्वप्रभेदैरिति** । स्वस्य प्रभेदैः इति, स्वेन च प्रभेदैः इति वा[3] अर्थः । **अयं भावः**—शुद्धभेदानां मध्यात् केनापि इष्टभेदस्य शेषैः पञ्चाशद्भेदैः स्वेन च यदा योगः, तदा मौलिक्यभेदात् भिन्नाः एकपञ्चाशद्भेदाः स्युः । परं एकयोगे कल्पनेयम् । न द्विकादियोगे । क्वचिद्व्यभिचारात्[4] । एवं अन्यभेदेष्वपि ज्ञेयम् ।

## मधुमती

कतिपयकाव्यात्मकप्रबन्धगतार्थशक्त्युद्भवद्वादशविधध्वनि–पदैकदेश-रचना-वर्ण-नाटकादिगतरसादिध्वनिचतुष्टयमिलनात् एकपञ्चाशत्त्वं इत्यर्थः ॥ **यद्यपि**—पदैकदेश-रचना-वर्ण-प्रबन्धव्यङ्ग्यानामपि पूर्वन्यायेन अनेकत्वात् नेदमुपपद्यते । तथापि पदैकदेशसमुत्थत्वादिना एकीकृत्य तथा अभिधानात् न दोषः ॥ **न च** अर्थसमुत्थत्वादिनाऽपि एकीकरणे न्यूनताऽपत्तिः । स्वतन्त्रेच्छायाः नियोगपर्यनुयोगाविषयत्वात् ॥

**तेषामिति** । अर्थान्तरसङ्क्रमितवाच्यस्य, अस्यैव अत्यन्ततिरस्कृत-वाच्येन, इत्येवं अग्रिमेणापीति एकपञ्चाशद्भेदाः । एवं प्रत्येकं तावन्त एव भेदाः । एतावता च द्वे सहस्रे एकोत्तरषट्छती [२६०१] भवति । अस्य

---

1 'योजनं'–क. 2 'एव' इति नास्ति–ख. 3 'इति च'–ग. 4 'चाराच'–घ.

अनुग्राह्यानुग्राहकतया एकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण, परस्परनिरपेक्षरूपया एकप्रकारया [1] संसृष्टया चेति चतुर्भिः गुणने—

वेदखाब्धिवियच्चन्द्राः । (१०४०४)

शुद्धभेदैः सह—

शरेषुयुगखेन्दवः ॥ ४४ ॥ (१०४५५)

---

सङ्केतः

तत् सिद्धमेतत्—एकपञ्चाशन्मूलभेदानां प्रत्येकं स्वव्यतिरिक्ताः एकपञ्चाशद्भेदाः स्युः इति ॥

मधुमती

चतुर्धा गुणनेन यत् समुत्पद्यते तदाह—**वेदेति** । **वेदाः** चत्वारः, **खं** शून्यम्, **अब्धयः** चत्वारः, **वियत्** शून्यम्, **चन्द्रः** एकः । प्रस्तारश्चास्य वैलोम्येनेति १०४०४ संख्याः । **यद्यपि**—अर्थान्तरसङ्क्रमितवाच्यस्य अत्यन्ततिरस्कृतवाच्येन सह योजनादेव अत्यन्ततिरस्कृतवाच्यस्य अर्थान्तरसङ्क्रमितवाच्येन योजनं गतार्थम् । एवं यथोत्तरं एकद्व्यादिहान्या एकसहस्रं षड्विंशत्यधिका च अष्टशती [2] [१८२६] भवति । अस्य चतुर्धा गुणने वेदखाग्न्यर्क [3] वाजिनः [७३०४] एव भवन्तीति नेयं गणना साध्वी । तथापि—विनिगमकाभावेन गुणप्रधानभावस्य नियन्तुमशक्यतया, उभय-

---

1 'निरपेक्षस्वरूपया एकरूपया'–क. 2 'अष्टाशती'–च. 3 'भाग्न्यर्क'–ज. अग्नेऽग्नयः, अर्कवाजिनः—सूर्याश्वश्च सहेति ज्ञेयम् ।

तत्र दिङ्मात्रं उदाह्रियते—(संशयास्पदध्वनिद्वयसङ्करस्य—)

छणपाहुणिआ देअर !
जाआए सुहअ ! किंपि दे भणिआ ।
रुअइ पडोहरवलही-
घरम्मि[1] अणुणिज्जउ वराई ॥ १११ ॥

---

## सङ्केतः

छणेति । पडोहरं पश्चादोकस्तटम्, तत्र यत् वलभीयुक्तं गृहं, तत्र । 'पलहीहरम्मि' इति पाठे, पलही—कार्पासः, तस्य भरः । तथा च कार्पासतरुवने[2] इत्यर्थः । यद्वा वलहीशब्दोऽपि कार्पासार्थः । 'पुरोहर'[3] इति वा पाठः । तत्र पुरोहरं[4]—पच्छोकडं इति सातवाहनः । विषमं इत्यन्ये । इतरे तु 'पलहियं' इति यस्य प्रसिद्धिः तं तदर्थमाहुः ॥

## मधुमती

प्राधान्यमाश्रित्य गणनायाः साधुत्वमिति । स्वतन्त्रेच्छायाः नियन्तुं अशक्यत्वात् । अत एव—

"जातिः चतुर्भिः जात्याद्यैः विरुद्धः स्यात् गुणादिभिः[5] ।"

इति विरोधालङ्कारपरिगणनाऽविरोधः । एतन्न्यायेन तत्र षोडशत्वापत्तेः ।

---

1 'पुरोहरपलहीहरम्मि'–ख. 2 'वनं'–घ. 3 'पुडोहर'–ग. 4 पुडोहरं'–ग. 5 (काव्यप्रकाशकारिका ११०)

[क्षणप्राघुणिका देवर !
जायया सुभग ! किमपि ते भणिता ।
रोदिति गृहपश्चाद्भाग-
वलभीगृहे अनुनीयतां वराकी [1] ॥ ]

अत्र--अनुनयः किं उपभोगलक्षणे अर्थान्तरे सङ्क्रमितः ? किं अनुरणनन्यायेन उपभोगे एव व्यङ्ग्ये व्यञ्जकः ? इति सन्देहः ॥

---

## सङ्केतः

**अत्रेति** । अत्र विदितप्राघुणिकासक्तपतिवृत्तान्तपत्नीगिरा रोदनात् प्रस्तावादेव अनुनये लब्धे, **अनुनीयतां** इति अनुपयुज्यमानत्वात् बाधितार्थं, असत्यनुनयस्य अनौचित्याद्वा बाधितार्थं, स्वविषयभूतार्थविपयत्वे योगे सति उपभोगरूपं अर्थान्तरं लक्षयत् ईर्ष्यो[2]त्पादनादिकं ध्वनयति । इयं शुद्धा साध्यवसाना लक्षणा । **किमनुरणनेति** । किं अनुनयः स्ववाच्यं वदन्नेव **सुभगशब्दात्** लब्धावकाशं उपभोगं व्यनक्ति इत्यर्थः । अयं प्रदप्रकाश्यः[3] अर्थशक्तिमूलः ध्वनिः । अत्र द्वयोरपि व्यङ्ग्यभेदयोः सम्भवात्, एकस्य कस्यापि अनिश्चितत्वे संशयास्पदत्वेन सङ्करः ॥

---

1 उत्सवार्थमागतायां कस्याञ्चिदनुरक्तं देवरं प्रति उत्सवव्याजेनागतायाः भ्रातृजायायाः परिहासोक्तिरियम् – अयि पतिसहोदर ! उत्सवार्थमागता सा तव प्रियतमा इदानीं तव जायया अवाच्यं अनुचितं च भणिता सती, गृहपश्चाद्भागस्थितोपरितनगृहे गत्वा रोदिति । सेयं उत्तरयितुमशक्ता त्वय्यत्यन्तासक्ता च दीना भवतैव समाधीयताम् इति ॥ 2 'तोषो'–घ. 3 'प्रकाशः'–घ.

तथा[1]—(अनुग्राह्यानुग्राहकैकव्यञ्जकानुप्रवेशरूपयोः सङ्करयोः संसृष्टेश्च—)

**स्निग्धश्यामलकान्तिलिप्तवियतः वेल्लद्बलाकाः घनाः,**
**वाताः शीकरिणः, पयोदसुहृदां आनन्दकेकाः कलाः ।**

---

## सङ्केतः

**स्निग्धेति ।** **स्निग्धा** जलसम्बन्धात् सरसा । **कान्तिः** चाकचक्यम् । **घनाः** इति भणनात् निबिडत्वमपि व्यङ्ग्यम् । **वेल्लन्त्यः** कामापर[2]भागवशात् प्रहर्षाच्च । एतेन—घनैः आकाशस्य दुष्प्रेक्ष्यत्वं सम्भोगस्मारकत्वं च उक्तम् । **वाताः** इति बहुवचनेन तेषां सर्वगत्वं अप्रतीकार्यत्वं च उक्तम् । **शीकरिणः** इति तेषामेव मन्दमन्दत्वं मद[3]स्मारकत्वं चोक्तम् । तर्हि गुहासु प्रविश्य आस्यताम् इत्याह—**पयोदेति** । **पयोदानां सुहृदः** तेषाम् । मेघभावे हि तेषां शोभनचित्तता स्यात् इति भावः । **केकाभिः** गुहामध्येऽपि वर्षाकालस्मरणात् इति । ताश्च **कलाः** इति भणनात् षड्ज[4]संवादात् स्वयमपि दुःसहाः इति, सर्वत्र विभावानां विद्यमानत्वम् । एवं उद्दीपनविभावबोधितविप्र[illegible]ः अन्योन्याश्रयत्वात् रतेः

## मधुमती

तेन च—तन्न्यायेन अत्र गणितन्यूनत्वापत्तिरित्यपि निरस्तम् ॥ **शराः**—पञ्च, **इषवः** पञ्च, **युगानि** चत्वारि, **खं** बिन्दुः, **इन्दुः** एकः । तथाच १०४५५ संख्याः ॥

---

1 'तथा' इति नास्ति–क. 2 'कार्त्स्न्ये पर'–ग. 3 'मेव मन्दत्वमब्द'–ग. 4 'खड्ग'–घ.

**कामं सन्तु, दृढं कठोरहृदयः, रामोऽस्मि, सर्वं सहे,**
**वैदेही तु कथं भविष्यति ? ह हा हा ! देवि ! धीरा भव[1]॥११३॥**

---

**सङ्केतः**

विभावानां सार्थ्यं मन्वानः,[2] इत एव प्रभृति प्रियां हृदि न्यस्यैव स्वं वृत्तान्तं रामस्तावदाह—**काममिति**। **कामं** विभावाः **सन्तु**, अहं तु **कठोरहृदयः रामः अस्मि**। रामशब्दार्थव्यङ्ग्यविशेषावकाशदानाय कठोरहृदयपदम्। अन्यथा—रामपदं दशरथकुलोत्पत्ति–कौसल्या[3]स्नेहपात्रत्व—बाल्यचरित—ताटकावधादितद्धर्मान्तरपरिणमितं अर्थं कथं नु ध्वनयेत्? अस्मि स एवाहं भवामि इति **सर्वं सहे**। न तु सर्वसहः। कृद्वृत्तौ हि सहने कर्तृशस्यैव च मुख्यता स्यात्, न सर्वार्थस्य कर्मणः। ततश्च अविमृष्टविधेयांशदोषः स्यात्। सर्वं सहे इत्युक्ते तु—यद्यत् निपतति तत्तत् सहे इति लभ्यते। **भविष्यति** इति क्रियासामान्यम्। तेन किं करिष्यतीत्यर्थः। अथवा—भवनमेव असम्भाव्यमित्यर्थः। उक्तप्रकारेण चित्तन्यस्तां प्रियां विभावानां साधारण्यादिना स्मरणेन, **वैदेही** इति शब्देन, **कथं भविष्यति** इति विकल्पपङ्क्त्या च प्रत्यक्षीकृतां हृदयस्फोटोन्मुखीं ससम्भ्रममाह—**ह हा हेति**। **देवीति**। तव युक्तं[4] धैर्यम्, देव्या हि कृताभिषेकत्वेन राजतुल्यत्वात् इति भावः॥

---

1 'विरहिणो रामस्योक्तिरियम्—इमे मेघाः निबिडश्यामलकान्तिभिः लिप्ताकाशास्सन्तः सविधवलमानबकसंहतयश्च दृश्यन्ते। अम्बुकणशालिनः शीतमारुताः मन्दं मन्दं वीजयन्ति। मेघमित्राणां मयूराणां अव्यक्तमधुराः परमानन्दजनिताः केका अपि श्रूयन्ते। काममिदं सर्वं विजृम्भताम्। तादृशसीतावियोगक्षणेऽपि अन्यथाभावमप्राप्यैतावन्तं कालं जीवन् कठिनहृदयः रामोऽहमस्मि। अत एव सर्वं सहे। मां विना क्षणमप्यन्यदाऽपि जीवितुमशक्ता सीता तु अस्मिन् काले कथं वा जीवति। हा हा देवि! किञ्चिद्धीरा भव॥ इति॥ (हनुमन्नाटके ५-७).
2 'मत्वा'–ग. 3 'कौशल्य'–ग. 4 'देवीविभवयुक्तं'–घ.

अत्र 'लिप्त' इति 'पयोदसुहृदां' इति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह

---

## सङ्केतः

अत्रेति। लिप्तशब्दः—कुङ्कुमादिवत् लेपहेतुत्वाभावात् बाधितार्थः सन्, ईषत्तिरोधीयमानत्वादिसादृश्यात् कान्तियुक्तत्वं अर्थं लक्षयन्, कुङ्कुमादि-लिप्तवक्त्रादिसारूप्यप्रतीतिद्वारेण चारुत्व-मारोद्दीपकत्वादि[1] व्यनक्ति। अत्र—लिप्तत्वं[2] आरोप्यम्, आरोपविषयश्च नभः, इति द्वयोः उक्तत्वात् गौणी सारोपलक्षणा, तथा सुहृच्छब्दोऽपि—घनानां अचेतनत्वेन मैत्रीयोगाभावात् बाधितस्वार्थः सुहृद्गत[3]सांमुख्यादिधर्मसादृश्यात् पयोदाभिमुखान् मयूरान् लक्षयन्, मित्ररूपताप्रतिपत्तिद्वारेण तद्दर्शनानन्यसामान्यप्रमोदमेदुरत्वादि ध्वनयति[4]। पयोदसुहृच्छब्देन अरोप्येण आरोपविषयाणां शिखिनां निगीर्णत्वात् इयं साध्यवसाना। उभयत्रापि स्वार्थोपमितवस्तुपरत्वेन अत्यन्त-तिरस्कृतवाच्ययोः लिप्तसुहृच्छब्दयोः सक्तस्य व्यङ्ग्यद्वयस्य मिथः निरपेक्षत्वात् स्वपदप्रधानयोः संसृष्टिः॥ रामोऽस्मीत्यत्र प्रस्तावात् अभिधेयप्रतिपत्तौ रामशब्दः[5] अनुपयुज्यमानत्वात् बाधितार्थः,[6] स्वाभिधेयभूतार्थगामित्वरूपात् सम्बन्धात् राज्यभ्रंश-प्रवास-पितृवियोग-सीतापहरणादिदारुणदुःखपात्रत्वं लक्षयन्, अनन्यसाधारणनिर्वेदादि व्यनक्ति। इयं च सादृश्यव्यतिरिक्त-

## मधुमती

ताभ्यां सहेति। लिप्तपदेन निबिडत्व[7]सम्बन्धेन सम्पर्कातिशयं लक्षयता दुःसहत्वम्,[8] सुहृच्छब्देन च कार्यकारणभावसम्बन्धेन साधुक्रियां

---

1 'कुङ्कुमेत्यारभ्य एतत्पर्यन्तं नास्ति'–ग. 2 'लिप्तं'–ग. 3 'सुहृत्'–घ. 4 'ध्वनति'–घ. 5 'शब्देन'–ग. 6 'बाधितार्थेन'–ग. 7 'निखिलत्व'–च. 8 'दुःसहद्वन्द्वं'–ज.

**अर्थान्तरसङ्क्रमितवाच्यरसध्वन्योः सङ्करः। एवमन्य-दप्युदाहार्यम् ॥ ४४ ॥**

इति श्रीकाव्यप्रकाशे

ध्वनिनिर्णयो नाम चतुर्थः उल्लासः

---

## सङ्केतः

सम्बन्धान्तरनिमित्तत्वात् शुद्धा सारोपा। आरोप्यस्य रामशब्दस्य, आरोप-विषयस्य अस्मिशब्दाभिधेयस्य च उक्तत्वात्। अत्र—वाच्यं दाशरथिरूपं व्यङ्ग्यधर्मान्तरपरिणतत्वात् स्वपरत्वेन नोपपन्नं इति, अविवक्षितमेव; न पुनः अत्यन्ततिरस्कृतम्। व्यङ्ग्यधर्माधारद्वारेण तस्यापि परिणतत्वात्[1]। अत्र च—लिप्तपयोदसुहृच्छब्दव्यङ्ग्यौ अर्थौ अनुग्राहकौ। रामशब्दव्यङ्ग्य[2]-स्त्वनुग्राह्यः। उद्दीपनवशेनैव असाधारण[3]निर्वेदादीनां परिस्फुरणात् इति—अनुग्राह्यानुग्राहकत्वेन सङ्करः। रामपदेति। यथा रामशब्दः निर्वेदादीन्

## मधुमती

लक्षयता विरहिवेदनाकारित्वं चोक्तमिति, लक्षणामूलाविवक्षितवाच्यान्तर्गता-त्यन्ततिरस्कृतवाच्यव्यङ्ग्ययोः नैरपेक्ष्येणावस्थानात् अनयोः संसृष्टिः। रामपदं च सर्वसहत्वानुपयुक्तशक्यार्थतया पितृवियोगादिसकलदुःखभाजनत्वं लक्षयत्, सीतां विनाऽपि जीविष्यामीति व्यञ्जयत् विप्रलम्भं व्यनक्ति। अस्य च अर्थान्तरसङ्क्रमितवाच्यस्य पूर्वोक्ताभ्यां सह अनुग्राह्यानुग्राहकभावेन सङ्करः इत्यर्थः। **यद्यपि**—रामपदस्य अर्थान्तरसङ्क्रमं विनाऽपि कठोरहृदयत्वविशेषण-

---

1 'इयं च' इत्यारभ्य एतत्पर्यन्तग्रन्थस्थाने 'लक्षणा तु मेघशब्दात्' इत्येव दृश्यते—ग. 2 'शब्दोत्थ'—घ. 3 'असाधारणं' इति नास्ति—ग.

## सङ्केतः

व्यनक्ति, तथा विप्रलम्भमपि इति, उभयसाधारणरामशब्दरूप[1]व्यञ्जकव्यङ्ग्यत्वेन द्वयोः व्यङ्ग्ययोः एकव्यञ्जकानुप्रवेशेन सङ्करः इति ध्येयम् ॥

अन्यदपि ध्वनिभेदजातम्[2] ॥ ४४ ॥

इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
चतुर्थः उल्लासः

---

## मधुमती

बलादेव प्रकृतार्थसिद्धिः। तथापि कठोरहृदयत्वमात्रेण पयोदादिजनितपीडातिशयसहनसमर्थनस्य चमत्कारकारित्वाभावात्, कठोरहृदयेनापि रामपदवाच्येन रामान्तरेण उक्तवेदनातिशयस्य सोढुमशक्यत्वाच्च उक्तरूपेण रामपदस्य दाशरथिपरत्वमेव वाच्यम्। तच्च नार्थान्तरसङ्क्रमं विना प्रकृतोपयोगीति एवं प्रकृतोदाहरणत्वं उक्तमिति ध्येयम्। अत्र सीताविरहजीवनविप्रलम्भशृङ्गारयोः एकमेव रामपदं व्यञ्जकमिति भावः ॥ ४४ ॥

इति श्रीरत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां
मधुमत्यां चतुर्थः उल्लासः

---

1 'यथा रामशब्दस्य निर्वेदादयः अर्थान्तरसंक्रमितवाच्यरूपाः व्यङ्ग्याः तथा विप्रलम्भोऽपि व्यङ्ग्यः इत्यभिप्रायसाधारण्येन'–घ. 2 इदं वाक्यं नास्ति। परं तु—240 पुटे दृश्यमानं "नवेत्ति यस्य गाम्भीर्यं" इत्यादिश्लोकद्वयं 'सर्वथा रससर्वस्वमर्मास्पार्क्षीन्न नायकः' इति पाठान्तरेणात्र लिखितं ग. पुस्तके दृश्यते ॥

अथ काव्यप्रकाशमूलकारिकासु

ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदो नाम

## पञ्चमः उल्लासः

—o—

गुणीभूतव्यङ्ग्यभेदाः—

> अगूढं अपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
> सन्दिग्धतुल्यप्राधान्ये काक्वाऽऽक्षिप्तमसुन्दरम् ॥ ४५ ॥
> व्यङ्ग्यम्, एवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः [1] ॥

---

1 इत्युक्तमुत्तमं काव्यं अथ मध्यममुच्यते ।
प्रथमोल्लास एवोक्तं तस्य सामान्यलक्षणम् ॥ २३३ ॥
अगूढमपरस्याङ्ग . . . अष्टौ भिदाः स्मृताः ॥

अगूढता सहृदयैरिवान्यैरपि वेद्यता! सोऽयं विजयते राजा सुमनोजनरञ्जनः ॥ अपराङ्गं तैरपेक्ष्यात् लब्धसिद्ध्युपकारकम् । रसवत् प्रेय ऊर्जस्वि तथैव च समाहितम् ॥ भावोदयो भावसन्धिशबलत्वे इति क्रमात् । अपराङ्गं सप्तविधं प्रवदन्ति मनीषिणः ॥ रसे रसाङ्गे भावाङ्गेऽप्येषु स्यात् रसवद्द्विधा । क्षणध्वस्तखरानीकं जानकी सस्वजे प्रियम् । अत्र सम्भोगशृङ्गारस्याङ्गं वीररसः स्मृतः ॥ २३७ ॥ लक्ष्मीविलोकनोत्फुल्ल-लोचनं शीलये विभुम् । इत्यादौ रतिभावस्य शृङ्गारोऽङ्गत्वमश्नुते ॥ प्रेयोऽभिधानं भावस्य यदि भावरसाङ्गता । वन्देय महतः तान् ये रामपादावलम्बिनः ॥ इत्यादिषु तु भावस्य भावाङ्गत्वं प्रतीयताम् ॥ वत्से! जानकि! हा हन्त! कथं वत्स्यसि कानने? इत्यादिषु रसाङ्गत्वं भावस्य परिकीर्तितम् ॥ रसाभासोऽथवा भावाभासो भावाङ्गतां यदि । अश्नुवीत तदोर्जस्विनाम स्यादपराङ्गकम् ॥ हन्त! द्रुह्यति देव्यै च खड्गमुत्कृष्य रावणः । मारुत्युक्ताविह रसाभासो भावाङ्गतां व्रजेत् ॥ जितेन्द्रस्य कियान् रामः ममेत्युक्त्वा तृणाय तम् । मेने देवीत्यत्र भावाभासो भावाङ्गतां व्रजेत् ॥ भावाङ्गत्वे भावशान्तेः समाहितमुदाहृतम् । त्वद्दानश्रवणे जाता स्वर्गवी भग्नमानसा ॥ भावोदयश्चेत् भावाङ्गं तदा भावोदयं विदुः । त्वद्दानश्रवणादेति कामधेनुः विनम्रताम् ॥

एषामेव अवान्तरभेदसत्तासूचना—

एषां भेदाः यथायोगं वेदितव्याश्च पूर्ववत् [1] ॥ ४६ ॥

उक्तविजातीयव्यङ्ग्ययोगात् ध्वनिभेदस्यानन्तत्वम्—

सालङ्कारैः ध्वनेः तैश्च योगः संसृष्टिसङ्करैः ।
अन्योन्ययोगादेवं स्यात् भेदसंख्याऽतिभूयसी [2] ॥ ४७ ॥

इति श्रीकाव्यप्रकाशमूलकारिकासु
पञ्चमः उल्लासः

---

भावाङ्गं चेत् भावसन्धिः भावसन्ध्यपराङ्गकम् । नम्रस्मेरमुखी पाणिं गृह्णती सेव्यतामुमां ॥ भावाङ्गे भावशाबल्ये भावशाबल्यमिष्यते । क्लिष्टे दृष्टेऽरुणं, नम्रे फुल्लं अक्षि तवेष्यते ॥ शब्दार्थोभयशक्त्युत्थाः त्रयस्ते ध्वनयो यदा । वाच्याङ्गतां भजेयुः स्यात् अपराङ्गं तदाऽष्टमम् । नलिनीयं अनालोकात् आमोदं भजतेतराम् । इत्यादौ शब्दशक्त्युत्थध्वनेः वाच्याङ्गता मता ॥ आलिङ्गत्यंशुमान् ऐन्द्रीं उल्लासयति चाब्जिनीम् । इत्यादौ अर्थशक्त्युत्थध्वनेः वाच्याङ्गता मता ॥ रक्तोऽयं अब्जिनीनाथः चुम्बत्यैन्द्रीमुखं शनैः । इत्यत्रोभयशक्त्युत्थध्वनेः वाच्याङ्गता भवेत् ॥ वाच्यसिद्ध्यङ्गमेतद्यत् विना वाच्यं न सिद्ध्यति । भूभृदाभाति काश्मीरपङ्कगैरिकपाटलः ॥ स्यात् यत् सुहृदयस्यापि दुःखवेद्यं तदस्फुटम् । भूपो गुणाहितप्रीतिः भुनक्त्यम्बुधिमेखलाम् ॥ स्यात् सन्दिग्धप्रधानत्वं वाच्यात् प्राधान्यसंशये । त्वामालोक्य रणे वैरी वीक्षते जविनं हयम् ॥ वाच्यात् प्राधान्यतौल्ये तु तुल्यप्राधान्यमिष्यते । जाताः त्वद्वैरिसुदृशां स्मरणीयाञ्जनाः दृशः । काकाक्षिप्तं यत्र साक्षात् काका व्यञ्जकतेष्यते । मन्ये सा सुभगा मत्तो यां त्वमेवानुधावसि ॥ वाच्यान्निकृष्टं व्यङ्ग्यं चेत् असुन्दरमितीरितम् । अतपःक्लेशसुलभं सुकृतं तव दर्शनम् ॥ 1 एषां भेदाः यथायोगं वेदितव्याश्च पूर्ववत् ॥ २६० ॥ 2 एषां योगेऽप्यलङ्कारैः भेदाः स्युः बहवस्तथा । अलङ्कारैः गुणीभूतव्यङ्ग्यैश्चालङ्क्रियाऽन्वितैः । संसृष्टिसङ्करैर्योगे न गण्यन्ते ध्वनेर्भिदाः ॥ वस्तुध्वनिः अलङ्कारध्वनिः वाच्येतरध्वनिः । इति त्रिधोदितोऽनन्तभेदभिन्नोऽप्ययं ध्वनिः ॥ २६३ ॥

इति काव्यदर्पणमूलकारिकासु
पञ्चमः उल्लासः

---

अथ ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम

पञ्चमः उल्लासः

—o—

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यस्य[1] प्रभेदान् आह—

**अगूढं अपरस्याङ्गं**
**वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**सन्दिग्धतुल्यप्राधान्ये**
**काक्वाऽऽक्षिप्तं असुन्दरम् ॥ ४५ ॥**

---

**सङ्केतः**

अथ मध्यमकाव्यभेदानाह—**अगूढमिति** । **अगूढं** अतिस्फुटम् । अनतिस्फुटं तु ध्वनेर्मार्गः । अस्फुटस्य च गुणीभूतता वक्ष्यते । **सन्दिग्धतुल्यप्राधान्ये इति** । वाच्यव्यङ्ग्ययोः प्रत्येकं चमत्कारकारित्वात्, सन्दिग्धे

**मधुमती**

अवसरसङ्गतिं प्रदर्शयन्नाह—**एवमिति** ॥ सामान्यलक्षणस्य प्रागेव कृतत्वात् विभागं विशेषलक्षणं चाह—**अगूढमिति** ॥ सहृदयासहृदयवेद्यत्वं **अगूढत्वम्** । एतदेव व्यतिरेकमुखेनाह—**कामिनीति** ॥ यदाहुः—
"नान्ध्रीपयोधर इवातितरां प्रकाशः नो गुर्जरीस्तन इवातितरां निगूढः ।
अर्थो गिरां अपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभः"[2] ॥इति॥
अत एव—सहृदयैरपि यत्र दुःखेन प्रतीयते[3] तत्र अत्यन्तगूढे अनुभावविभावयोः कष्टकल्पनत्वं रसदूषणतया वक्ष्यति[4] । अत्र हि–**अगूढापराङ्गयोः** वाच्यसाधारणगूढत्वापराङ्गत्ववत्तया, **वाच्यसिद्ध्यङ्गस्य** वाच्योप सर्जनतया, **अस्फुटसन्दिग्धतुल्यप्राधान्यकाक्वाक्षिप्तेषु** वाच्यसमत्वेन,[5] **असुन्दरे**

---

1 मध्यमकाव्यस्येत्यर्थः (पृ. ४५)। 2 गुर्जरथी–गुजरात्। घूर्जरीत्यपि पाठः मरहट्टाः–माहाराष्ट्राः। मरहाटइत्यपि पाठः। 3 'द्राङ् न यत्प्रतीयते'–च. 'यद्क्रियते'–ज. 4 (का. प्र. ७. ३२६ उदाहरणप्रस्तावे). 5 'वाच्यमित्यनेन'–ज. ।

**व्यङ्ग्यम्, एवं गुणीभूत-**
**व्यङ्ग्यस्याष्टौ भिदाः स्मृताः[2] ॥**

**कामिनीकुचकलशवत् गूढमेव[3] चमत्करोति[4] ।**
**अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ॥**

---

### सङ्केतः

तुल्ये च प्राधान्ये—सन्दिग्धप्राधान्य-तुल्यप्राधान्यरूपं भेदद्वयं स्यात् इत्यर्थः ॥

### मधुमती

च वाच्यनिरूपितनिकर्षवत्तया वाच्यनिरूपितव्यङ्ग्यप्रकर्षानाश्रयत्वमस्तीति बोद्धव्यम् । एतच्च तत्र तत्र उदाहरणेष्वेव व्यक्ती भविष्यति ॥

---

2 अगूढादिकं व्यङ्ग्यं, मध्यमकाव्ये भवतीति शेषः । एषामयं सङ्ग्रहः—

(१) सहृदयासहृदयवेद्यमगूढम् । (२) स्वनैरपेक्ष्येण लब्धसिद्धेरर्थस्य यदुपकारकं तत् अपरस्याङ्गम् । एतदेव रसवदादिभेदेन सप्तविधम् । (३) येन व्यङ्ग्येन विना वाच्यं न सिद्ध्यति तत् वाच्यसिद्ध्यङ्गम् । तत्र निरपेक्षवाच्यार्थोपस्कारकं अपराङ्गम्, सापेक्षवाच्यार्थोपस्कारकं वाच्यसिद्ध्यङ्गमिति विवेकः । (४) यत्र पोटास्तनसंनिवेशवत् अनुन्मिषिततया सहृदयानामप्यतिदुःखवेद्यो व्यङ्ग्यः तत्र अस्फुटम् । (५) यत्र वाच्यापेक्षया व्यङ्ग्यस्य प्राधान्यं संदिग्धं तत्र सन्दिग्धप्राधान्यम् । (६) यत्र वाच्यस्य व्यङ्ग्यस्य च प्राधान्यं तुलाधृतवत् तुल्यमेवावतिष्ठते तत्र तुल्यप्राधान्यम् । (७) यत्र काकुः साक्षादेव व्यञ्जिका तत्र काक्वाक्षिप्तम् । यतः प्रतीयमानो विधिर्वा निषेधो वा काक्वैवाक्षिप्यते प्रतिक्षिप्यते इति । (८) यत्र व्यङ्ग्यं वाच्यापेक्षया निकर्षशालि तत्र असुन्दरम् ॥ इति ॥ 3 एव इति नास्ति–क. 4 यथा रतिसर्वस्वायमानयोरपि कुचयोः संवरणेन गूढतापादननिबन्धनमेव असाधारणप्रीतिविशेषप्रयोजकत्वं तथाऽत्रापीति भावः । तदुक्तं प्राचीनैः—'चोलीपयोधर इव प्रकटो न कामं नो घूर्जरीस्तन इवातितरां निगूढः । अर्थो गिरां अपिहितः पिहितश्च किञ्चित् आन्ध्रीपयोधर इवातितरां समिन्धे' ॥ इति ॥ अयमेव श्लोकः मधुमत्यां किञ्चिदन्यथा पठितः ।

तत्र अगूढं (अर्थान्तरसङ्क्रमितं) यथा—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन् न सम्प्रति भवामि, किमावहामि ?[1] ॥ ११४ ॥

अत्र—'जीवन्' इति अर्थान्तरसङ्क्रमितवाच्यस्य ॥

---

## सङ्केतः

यस्य । ममेत्यर्थः । काञ्चीत्यादेः स्त्रीरूपः इत्यर्थः[2] । अत्र जीवतैव वक्त्रा जीवन् इति भणनात्, तत् पदं अनुपयुज्यमानतया बाधितार्थं सत्, प्राणधारणयोगात्किञ्चित्करत्व[3]—सदविद्यमानत्व—जीवत्कार्याकारित्वाद्यर्थान्तरसङ्क्रमितवाच्यम् । अन्ये तु—जीवन् न भवामि इति वाक्यस्य, जीवतो वक्तुः उक्तौ[4] सत्यां अनुपपद्यमानतया, अत्यन्ततिरस्कृतवाच्यतां आहुः । अत्र विक्रमरहितत्वस्य व्यङ्ग्यस्य झटिति[5] प्रतीयमानतया अति-

## मधुमती

यस्येति । सः एषः अहं सम्प्रति जीवन् भवामि, न किमावहामि न किं करोमीत्यर्थः । आक्षेपे किंशब्दः । एवं च जीवन्पदं कष्टजीवने पर्यवसितम् । मरणमेव श्रेयः इति व्यङ्ग्यम् । तच्च अगूढम् ।

---

1 'भाजनमेव सोऽस्मि'–क. 'किमालपामि'–क. 'कमावहामि'–ख. कीचककृतपरिभवया द्रौपद्या कीचकवधार्थं प्रेर्यमाणः अर्जुनः वदति—अयि प्रिये ! शत्रुणा कीचकेन कृतेयं तिरस्कृतिः यस्य मम कर्णौ एत्य संतप्तलोहशलाकावत् पुनः पुनः तोदयति, अथापि किञ्चिदपि प्रतिकर्तुं न प्रभवामि च, सोऽहं केवलं स्त्रीकव्यां काञ्च्याः गुणेन ग्रथनरूपे कर्मणि नियुक्तः सन् बृहन्नलारूपः इदानीं न श्लाघ्यजीवनोऽस्मि, किं वा करोमि ? वद—इति ॥ 2 'काञ्चीति स्त्रीति भावः'–ग. 3 'गादकिञ्चित्करत्व'–घ. 4 'शक्तौ'–ख. 5 'झगिति'–ग.

(अगूढं अत्यन्ततिरस्कृतम्—)

**उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः**
**गायन्ति मञ्जु मधुपाः गृहदीर्घिकासु ।**
**एतत् चकास्ति च रवेः नवबन्धुजीव-**
**पुष्पच्छदाभं उदयाचलचुम्बि बिम्बम्**[1] **॥ ११५ ॥**

**अत्र—चुम्बनस्य अत्यन्ततिरस्कृतवाच्यस्य ॥**

---

## सङ्केतः

स्फुटत्वात् अगूढता । तेन व्यङ्ग्यस्य अप्राधान्यम् । गूढस्यैव चमत्कार-कारित्वात् ॥

**चुम्बनस्येति ।** चुम्बिइतिपदं वक्तृसंयोगस्य अनुपपद्यमानतया **अत्यन्ततिरस्कृतवाच्यं** सत्, संयोगसाम्यात् उदयाचलसूर्यबिम्बसंयोगं[2] लक्षयत् चारुत्वशोभावहत्वादिकं स्फुटमेव व्यनक्ति इति ध्वनेः अगूढता । **अन्ये तु—चुम्बिशब्दः** पादस्पर्शसम्भावनां लक्षयतीत्याहुः ॥

## मधुमती

न त्वत्र जीवनार्थेन नञन्वयः । प्रकृतोदाहरणत्वविरोधात् । इयं च विगट-नगरप्रच्छन्नस्य अर्जुनस्योक्तिः ।

**अत्रेति ।** चुम्बनस्य बाधात् संयोगसामान्यं लक्ष्यते । सामान्य-विशेषभावः सम्बन्धः । व्यङ्ग्यं अगूढमितिशेषः । अत्रापि अगूढत्वं स्फुटम् ॥

---

1 वैतालिकः सुप्रभाते एवं गायति—प्रभो! विकसितारक्तपङ्कजपरागैः पाटलिताङ्गाः इमे भ्रमराः गृहसरोवरेषु मधुरमधुरं गायन्ति । उदयाचलारूढं एतच्च सवितुर्मण्डलं नवबन्धूककुसुमसमूहशोभं प्रकाशते, जागृहि प्रभो! इति ॥
2 'साम्याद्बिम्बं'–ग. 'साम्याद्धि एवं'–घ.

(अगूढं अर्थशक्तिमूलम्—)

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैः इन्द्रजिदत्र लक्ष्मणशरैः लोकान्तरं प्रापितः[1]
केनाप्यत्र मृगाक्षि! राक्षसपतेः कृत्ता च कण्ठाटवी[2] ॥११६॥

अत्र—'केनाप्यत्र' इति अर्थशक्तिमूलानुरणन[3]-रूपस्य । 'तस्याप्यत्र' इति तु युक्तः पाठः ॥

---

**सङ्केतः**

अत्रासीदिति । देवरःपत्युर्भ्राता । गाढमिति । यतः द्रोणाद्रौ नानाविधाः संरोहिण्यः ओषधयः सन्ति अतः स एवाहृतः इति भावः । अत्र केनापि

**मधुमती**

शब्दशक्तिमूलध्वनौ अपरार्थस्य[4] व्यङ्ग्यस्यापि वाच्यायमानतया अगूढत्वं सुप्रसिद्धमिति, तदुपेक्ष्य, अर्थशक्तिमूले तदुदाहरति—अत्रासीदिति । भवद्देवरे इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः'[5] इति पुंवद्भावः । नचैवं—'उल्लास्य कालकरवाल' इत्यत्रापि पूर्वोक्तध्वनित्वानुपपत्तिः । अपरार्थध्वनेः अगूढतया गुणीभावेऽपि उपमाध्वनेः अतथात्वात् । अत्रेति । 'मया' इति व्यङ्ग्यम् । तच्च अगूढम् । 'अनिर्धारितविशेषः बुद्धिस्थत्वादि-रूपेणैव सर्वनामवाच्यः ।' इति मतावष्टम्भेन इदमुक्तम् । वस्तुतस्तु—'येन रूपेण बुद्धिस्थता तेनैव रूपेण सर्वनामपदादुपस्थितिः' इति वक्तव्य-मिति—कथं अस्य व्यञ्जनम्? इति हृदि निधायाह—तस्याप्यत्रेतीति । तथाच राक्षसपतिकण्ठाटवीकर्तनरूपेण धर्मेण रामगततया प्रसिद्धेन रामरूप-

---

1 'लम्भितः'—क. 2 'कण्ठावली'—क. लङ्कातः प्रतिप्रयाणसमये सीतां प्रति रामस्येदं वचनम्—प्रिये! अत्रैव नागास्त्रेण आवयोः बन्धनविधानमासीत् । अत्र तु तव देवरे लक्ष्मणे रावणस्य शक्त्यायुधेन दृढं वक्षसि प्रहृते सति हनुमता ओषधिपर्वतएवाहृतः । अत्र च दिव्यैः लक्ष्मणशरैः इन्द्रजित् स्वर्गं प्रापितः । अयि मृगाक्षि! अत्र रावणस्य कण्ठावलीरूपमरण्यं केनापि वीराधिवीरेण छिन्नं च । इति । (बालरामायणे—१०-२०) । 3 'मूलानुस्वान'—क. 4 'अपराङ्गस्य'—च.
5 तद्धितार्थेति (२-१-५१) पाणिनिसूत्रे इदं वार्तिकम् ।

**अपरस्य—रसादेः[1] वाच्यस्य वा वाक्यार्थीभूतस्य, अङ्गं रसादि,[2] अनुरणनरूपं[3] वा यथा—**

---

**सङ्केतः**

इत्युक्ते 'मया' इति व्यङ्ग्यस्य झटिति प्रतीयमानत्वात् अगूढता। 'तस्याप्यत्र' इति पाठे तु 'मया' इति व्यङ्ग्यं गूढं स्यात्॥

**रसादेरिति।** **रसादेः वाक्यार्थीभूतस्य** प्रधानभूतस्य **रसादि अङ्गम्**, **वाच्यस्य** तु वस्त्वलङ्काररूपस्य अलङ्कारवस्तुरूपं व्यङ्ग्यं च **अङ्गं**

**मधुमती**

धर्मिव्यञ्जनं अगूढमेव। न च मयेत्यनभिधानात् न्यूनपदता। हर्षाविष्टवक्तृकत्वात्॥

**अपरस्येति। नचैवं**—अनुग्राह्यानुग्राहकलक्षणध्वनिसङ्करे अनुग्राहकस्यापि अपराङ्गत्वं स्यात् इति वाच्यम्। यत्र—साक्षादङ्गता, तत्र अपराङ्गत्वम्, यथा—'अयं स रशनोत्कर्षी' इत्यादौ। यत्र तु—परम्परया तथात्वं, तत्र अनुग्राह्यानुग्राहकलक्षणः सङ्करः, यथा—उदाहृते 'स्निग्धश्यामले'त्यादौ। अत्र हि—अत्यन्ततिरस्कृतवाच्याभ्यां 'रामः' इत्यर्थान्तरसंक्रमद्द्वारा तन्मूलध्वनेः उपकारः स्पष्टः[4]। अत एव—वृत्तिकारः अविवक्षितवाच्यं अगूढे एव उदाजहार, न तु अपराङ्गे। साक्षादङ्गत्वाभावात्। तदिदमुक्तम्—**रसादि अनुरणनरूपं वा** इति। नचैवं उभय-

---

1 आदिपदेन भावरसाभासादीनां ग्रहणम्। 2 असंलक्ष्यक्रमरूपम्। निष्पन्नरसभावस्य अङ्गत्वाभावात् रसपदं अत्र स्थायिभावपरम्। 3 संलक्ष्यक्रमरूपम्। तथाच अत्र अपरपदेन असंलक्ष्य-संलक्ष्यक्रमे वाच्यवस्तु चेति त्रिविधमपि विवक्षितमिति भावः। तत्र रसवदपराङ्गं द्विविधं—रसस्य रसाङ्गत्वे भावाङ्गत्वे चेति। तत्राद्यम्—अयं स इति, द्वितीयम्—कैलासेति॥ 4 अत्र हि रामोऽस्मीति रामभावस्य स्वतसिद्धतया विधेयत्वानुपपत्तेः रामपदं सकलदुःखसहत्वं लक्षयत् सीतां विनाऽपि जीवनसामर्थ्यं व्यञ्जयत् विप्रलम्भातिशयं व्यञ्जयति। ततश्च श्यामलकान्तिलिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः, राम इति अर्थान्तरसंक्रमितवाच्यस्य च अङ्गाङ्गिभावेन सङ्करः, तयोरुद्दीपकत्वेनाङ्गत्वादिति परम्पराङ्गत्वे एव सङ्कर उदाहृतः इति भावः।

(रसस्य रसाङ्गतायां अपराङ्गम्—)

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः[1] ॥ ११७ ॥

अत्र—शृङ्गारः करुणस्य ॥

---

### सङ्केतः

गुणीभूतमेव, अपराङ्गत्वात् ॥

'अयं स रशनोत्कर्षी नीवीविस्रंसनः करः ।
नाभ्यूरुजघनस्पर्शी पीनस्तनविमर्दनः ॥'

इति तु पाठो युक्तः, सम्भोगक्रमभणनात् । परं तु शोकार्ततया व्यत्ययो न दुष्टः । शृङ्गारः इति । रणभुवि भूरिश्रवसः अर्जुनकृत्त[2]हस्तप्रेक्षणेन पूर्वरतवृत्तान्तः स्मर्यमाणः, सम्प्रति ध्वस्ततया यतः शोकविभावतां याति, अतः करुणस्य अङ्गिनः अङ्गं विप्रलम्भः ॥

### मधुमती

ध्वन्योः वाच्यसिद्ध्यङ्गता स्यादिति वाच्यम् । इष्टापत्तेः । अत एव—अवान्तरध्वनीनामपि प्रधानध्वन्यङ्गत्वेन गुणीभूतत्वमेव । यत् वक्ष्यति—"यद्यपि स नास्ति कश्चित् विषयः, यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह संकरः संसृष्टिर्वा नास्ति, तथापि प्राधान्येन व्यपदेशा भवन्ति इति क्वचित् केनचित् व्यवहारः"[3] इति ॥

---

1 (महाभारते स्त्रीपर्वणि–२४-१९)। 2 'श्रवसः स्वस्त'–ग. 3 यत्र येन चमत्कारः पुरस्स्फूर्तिकः तत्र तेन व्यपदेशः इति भावः । (का. प्र. ५ उल्लासे. १२४ श्लोके)।

(रसस्य भावाङ्गतायां अपराङ्गम्—)

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिः गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्धाबन्धसमृद्धयेव[1] सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकार[2]सरसा सद्यः समुत्सार्यते[3] ॥११८॥

अत्र—भावस्य रसः ॥

---

## सङ्केतः

**कैलासेति** । **कैलासालयः** शम्भुः यतः प्रसादनार्थं गौरीपादयोः पतितः तेन **नखद्युतिः सा निर्वर्तितालक्तकव्यक्तिः** सालक्तकच्छाया इत्यर्थः । **नेत्रयोः कान्तिरिति** । प्रणते शम्भौ कोपजा नेत्रारुणता गतेत्यर्थः । अत्र कवेः देवीगतरतिभावस्य शृङ्गारः अङ्गम् ॥

---

1 'समिद्धयेव'–क. 2 'नुकारि'–ख. 'नुसार'–ख. 3 कुपितपार्वतीप्रसादनाय भगवति प्रणते सति, प्रसन्नायाः भवान्याः नेत्रयोः कोपजनितं आरुण्यं झटिति निवृत्तमेवेति वैदग्ध्येनाह - ईश्वरः मानिन्याः कुपितायाः पार्वत्याः मानापनयनाय यदा तस्याः पादयोः पतति, तदा अस्य परमेश्वरस्य लाक्षारुणललाटनेत्रप्रभासम्पर्कात् सम्पादितलाक्षारसाञ्जनक्रियेव भासमाना पार्वत्याः पादनखकान्तिः युष्मान् सदा रक्षतु । यया भालनेत्ररुचिरञ्जितया पादनखकान्त्या 'अस्याः नेत्रकान्तिरपि रागेण मत्सदृश्येवाभूत्' इति असूयन्त्येव तस्याः रक्तोत्पलानुकारिणी प्रवृद्धा सरसा च नेत्रयोः रक्तकान्तिः निशेषमपनोद्यत इति वर्णनाविषयीभूतेव, तदैव प्रसन्ना विमलनेत्रा च सा भवानी तदा तदा सम्पद्यते—इति ।

(भावस्य भावाङ्गतायां अपराङ्गम्—)

'अत्युच्चाः परितः स्फुरन्ति गिरयः, स्फाराः तथाऽम्भोधयः,
तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि, तुभ्यं नमः ।'
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावत् भुवः
तावत् बिभ्रदिमां स्मृतः तव भुजः, वाचः ततो मुद्रिताः[1] ॥११९॥

अत्र—भूविषयः रत्याख्यो भावः राजविषयस्य रतिभावस्य ॥

---

सङ्केतः

अत्र पूर्वत्र च रसवदलङ्कारः । यथा पद्मादिना वस्तुना उपमितं मुखादि वस्तु चारुतया भाति, तथा रसादिनाऽपि रसाद्युपस्कृतं भातीति, वस्तुन इव रसादेरप्यलङ्कारत्वम् । ननु—अत्र उदाहरणद्वयेऽपि करुणरस-भावौ व्यङ्ग्यौ, तयोश्च मुख्यतेति कथं गुणीभूतव्यङ्ग्यता? इति चेत्—सत्यम् । मुख्यावपि न तथा चमत्कुरुतः, यथाऽत्र गौणोऽपि शृङ्गारः इति तेनैव व्यपदेशः । एवं अन्यत्रापि भाव्यम् ॥

**अत्रेति ।** भूपगतायाः कविरतेः भूविषया रतिरेव अङ्गम् । अन्योन्यावस्थाबन्धरूपरतेः अभावात् नात्र शृङ्गारः । ततश्च प्रेयस्वदलङ्कारः ॥

---

1 कश्चन भोजराजं एवं स्तौति—'अयि वसुन्धरे! ये समन्तादिमे अत्युन्नताः शैलाः, विस्तीर्णाः अम्भोधयश्च एवं महदाकारतया स्फुरन्ति, तान् शैलान्, इमानम्भोधीनपि वहन्त्यपि किञ्चिदपि त्वं न श्रान्ताऽसि किल!' एतादृश्यै, तुभ्यं नमो नमः!—इत्याश्चर्येण मुहुर्मुहुः यावत् भुवः स्तुतिं प्रस्तौमि, राजन्! तावदेव इमां सशैलसागरां भुवमेव बिभ्रत् तव भुजः स्मृतः । तदनन्तरं च भूस्तुत्यर्थं प्रवृत्ताः वाचः सर्वा अपि सम्पूर्णतया मुद्रिताः । इति ॥ यद्यपि अत्र भूराजोभयविषययोः भावयोः अद्भुतरसोऽप्यङ्गमिति रसवदलङ्कारताऽप्यस्ति । तथापि उपाधेरसाङ्कर्यमिति ध्येयम् । (पञ्चाक्षरीप्रशस्तिः)

(रसाभासभावाभासयोः भावाङ्गतायां ऊर्जस्वि अपराङ्गम्—)

**बन्दीकृत्य नृप ! द्विषां मृगदृशः ताः पश्यतां प्रेयसां**
**श्लिष्यन्ति प्रणमन्ति लान्ति परितः चुम्बन्ति ते सैनिकाः ।**
**'अस्माकं सुकृतैः दृशोर्निपतितोऽस्यौचित्यवारांनिधे !**
**विध्वस्ताः विपदोऽखिलाः तदि' ति तैः प्रत्यर्थिभिः स्तूयसे[1] ॥१२०॥**

**अत्र—भावस्य रसाभासभावाभासौ प्रथमद्वितीयार्ध-द्योत्यौ ॥**

---

### सङ्केतः

बन्दीति । अत्र **पश्यतां** इति अनादरे षष्ठी । पश्यतः प्रियान् अनादृत्येत्यर्थः । **भावस्येति** । रिपुस्त्रीणां रत्यभावे सैनिकानां हठात् अनुचितप्रवृत्त्या **रसाभासः** । शत्रूणां च रत्यभावे दैन्याद्यनुचितं इति उत्तरार्धे भावाभासः । तौ च राजविषयरतेः अङ्गम् । अत्र ऊर्जस्व्यलङ्कारः [2] ॥

### मधुमती

**पश्यतां प्रेयसां** इति अनादरे षष्ठी [3] । **रसेति** । परस्त्रीविषयतया रसः, विरोधिविषयतया भावश्च अनौचित्यप्रवृत्तः इति उभयोः आभासत्वम् ॥

---

1 राजशौर्यवर्णनमिदम्—राजन्! भवत्सेनाभटाः रिपूणां प्रेयसीः हठादाहृत्य, पश्यत एव तत्प्रेयसोऽनादृत्य च, ताः शत्रुवधूः आलिङ्गन्ति, ततस्ताभिर्निराकृताः प्रणम्य प्रसादयन्ति, तास्वन्यत्र यान्तीषु गृह्णन्ति, बलात् परितः चुम्बन्ति, च। ते वैरिणस्तु भवन्तं स्तुवन्ति—"हे औचित्यसमुद्ररूप! त्वं अस्मत्पुण्यैः दृष्टोऽसि, त्वद्दर्शनादेव अस्माकं सर्वाः विपत्तयः नष्टाः" इति॥ इति॥ 2 'अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्। भावानां च रसानां च बन्धः ऊर्जस्वि कथ्यते'॥ 3 'षष्ठी चानादरे' (पा. सू. २-३-३८)॥

(भावशान्तेः भावाङ्गतायां समाहितं अपराङ्गम्—)

अविरलकरवालकम्पनैः
भ्रुकुटीतर्जनगर्जनैः मुहुः ।
ददृशे तव वैरिणां मदः
स गतः क्वापि तवेक्षणे क्षणात्[1] ॥ १२१ ॥

अत्र—भावस्य भावप्रशमः ॥

(भावोदयस्य भावाङ्गतायां अपराङ्गम्—)

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।

---

### सङ्केतः

**अविरलेति** । अत्र **तवेक्षणे क्षणात्** इति भिन्नं व्याख्येयम्, अभिन्नं वा । तथा **तद्** शब्दः पूर्ववस्तुवाचको निर्दिष्टः. तेन यत्पदं नापेक्षते । अत्रापि राजविषयकरतेः मदभावप्रशमः अङ्गम् । प्रशमसमाहितयोः ऐकार्थ्यात्[2] अत्र समाहितालङ्कारः[3] ॥

---

1 राजन्! अविरतखड्गकम्पनैः भ्रूक्षेपेण तर्जनेन गर्जनेन च मुहुर्मुहुरुपलक्षितो यो मदः तव वैरिषु दृष्टः, सः तेषां मदः त्वद्वीक्षणक्षण एव कुत्रापि पलायितः ॥
2 'ऐक्यात्'–ग. 3 भावशान्तेरङ्गत्वादिति भावः ॥

अन्याभिधायि तव नाम विभो! गृहीतं
केनापि तत्र विषमां अकरोदवस्थाम्[1] ॥ १२२ ॥
अत्र—त्रासस्योदयः ॥

(भावसन्धेः भावाङ्गतायां अपराङ्गम्—)

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः[2] ॥ १२३ ॥
अत्र—आवेगधैर्ययोः सन्धिः ॥

---

### सङ्केतः

**अत्र त्रासस्येति**। भावस्य। रतेरङ्गमिति शेषः[3]। अत्र भावोदयालङ्कारः ॥

**असोढेति**। 'तपो मुञ्चत्वेषा' इत्येव भगवतः अपेक्षितमिति अक्षमा। **विश्रब्ध**जल्पितश्रवणे **रसिकः**। प्रकृते स्मरेणोपलक्षितो हरः **स्मरहरः** इत्युचितम्, न तु स्मरं हरतीति। अत्र शिवविषयरतेः सन्धिः अङ्गम् ॥

---

1 राजन्! तव वैरिणि कामिनीभिः स्निग्धैश्च सह मद्यपानरूपां क्रीडां कर्तुं प्रवृत्ते सति, त्वत्समनाम्नः अन्यस्याह्वानाय त्वन्नामधेयं केनचिदुक्तं सत्, तस्मिन् वैरिणि दुःसहां कामप्यवस्थामकरोत् ॥ 'लीलाः'–क. 2 तपः कुर्वतीं पार्वतीं वटुवेषेण छलयतः महादेवस्य वर्णनमिदम्—तथा शरीरनिरपेक्षं उग्रं तपश्चरन्तीं गौरीं क्षणमप्युपेक्षितुमक्षमः, तस्याः सविस्रम्भकथाश्रवणेषु रसिकश्च सन्, अत एव स्वकीयकपटब्रह्मचारिवेषापनयने समकालमेव त्वराशैथिल्याभ्यामाक्रान्तः स्मरहरः शिवः युष्माकं महदानन्दं दद्यात् ॥ 'असमभावस्य'–क. 'युगपदभिभूतः'–ख. ॥
3 'मिति योगः'–घ.

(भावशबलतायाः भावाङ्गतायां अपराङ्गम्—)

पश्येत् कश्चित् चल चपल! रे!, का त्वरा?ऽहं कुमारी,
हस्तालम्बं वितर, ह ह! हा! व्युत्क्रमः, क्वासि यासि?
इत्थं पृथ्वीपरिवृढ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित् फलकिसलयान्याददानाऽभिधत्ते[1] ॥ १२४ ॥

अत्र—शङ्काऽसूयाधृतिस्मृत्यौत्सुक्य[2]श्रमदैन्यविबोधौत्सुक्यानां शबलता ॥

---

## सङ्केतः

पश्येदिति । वने काचित् कन्या रतार्थिनं पान्थं प्रत्याह । पश्येत् कश्चित् इति आशङ्का । रे चञ्चल! चल—गच्छ इति असूया । का त्वरा? इति धृतिः । कुमारी अस्मि इति स्मृतिः । हस्तालम्बं वितर इत्यौत्सुक्यम् । ह ह! इति श्रमः । हा! इति दैन्यम् । व्युत्क्रमः इति विबोधः । क्वासि यासि? इति औत्सुक्यम्[3] । एषां पूर्वपूर्वोपमर्देन उपनिबन्धः शबलता नृपविषयरतेः अङ्गम् । "अन्यत्र तु प्रधाने वाक्यार्थे

## मधुमती

क्वासि यासि? इत्यत्र 'असि' शब्दः युष्मदर्थे निपातितः । अस्मदर्थे 'अस्मि' शब्दवत् । त्वमित्यर्थः । 'ते च गुणीभूताभिधाने उदाहरिष्यन्ते'

---

1 अयि भूपते! त्वद्भयात् अरण्यवासिनः कस्यचिच्छत्रोः कन्या कस्मिंश्चित् अरण्यभागे फलानि कोमलपल्लवांश्चाददाना सती तत्रागते कामुके जातानुरागा कामयानं च तं प्रतीत्थमभिधत्ते—रे चपल! सश्रृङ्गारचेष्टं त्वां कश्चित् समर्यादो जनः पश्येत्, अतः इतोऽपसर—इति । अथ तस्मिन्नपसरति आह—किमुक्तिमात्रे एव गच्छसि? का वा भवतः तादृशी त्वरा? इति । अथ तस्मिन् आगते सति आह—रे! अहं कन्या, पितृपराधीना, त्वया सह स्वेच्छया रन्तुं नाहं सिद्धा इति । तथेति तस्मिन् अपयाते पुनराह—आगच्छ, हस्तावलम्बनं देहि, श्रान्ताऽस्मीति । उपसर्पति तस्मिन् क्रोशति—ह ह हा! कोऽयं व्युत्क्रमः? इति । स च यदा भीतः अपसर्पति तदा पुनः पृच्छति—प्रिय! मां परित्यज्य क्व वा यासि त्वम्? इति ॥ 2 'स्मृतिश्रम'–क.
3 उद्द्योते तु—'हस्तालम्बं वितरेति श्रमः, ह ह हेति दैन्यम्, क्वासि यासीत्यौत्सुक्यम्,' इत्याद्युक्तम् । अत्र तु औत्सुक्यमेव द्विः प्रदर्शितम् ॥

एते च रसवदाद्यलङ्काराः ॥

यद्यपि—भावोदयभावसन्धिभावशबलत्वानि ना-

---

### सङ्केतः

यत्र अङ्गभूतः रसादिः, तत्र गुणीभूतव्यङ्ग्ये रसवदादयोऽलङ्काराः।" इति यदुक्तम्[1]—तथा चोदाहृतमित्याह—**एते चेति**। रसः—शृङ्गारादिः, प्रेयः—प्रियतराख्यानम्, ऊर्जः–बलम्। तानि विद्यन्ते येषु निबन्धनेषु तानि रसवदादीनि[2] ॥

### मधुमती

इति यत् प्रतिज्ञातम्,[3] तत् अधुना मयोक्तमिति स्मारयति—**एते चेति**। भामहाद्यभिमताः[4] इति शेषः। न तु रसवदादीनां अलङ्कारत्वे ग्रन्थकर्तुः तात्पर्यमिति भ्रमः कर्तव्यः। अमीषां गुणानामिव साक्षादुपकारकत्वेन, अङ्गोपकारद्वारा अङ्ग्युपकारकत्वाभावात्। एवं च स्थिते—यत्र रसस्य अन्योपसर्जनत्वं तत्र रसवदलङ्कारः। यत्र भावस्य तथात्वम् तत्र प्रेयोऽलङ्कारः। यत्र तु तदाभासस्य तत्र ऊर्जस्व्यलङ्कारः। एवं यत्र भावशान्तेः तत्र प्रेयोऽलङ्कारः। एव यत्र भावोदयादेस्तथात्वं तत्रापि उक्तन्यायसाम्यात् भावोदया-

---

1 (P. 195)। 2 रसवत्प्रेयऊर्जस्व्यभिधानानीत्यर्थः। 3 (P. 196)।
4 'द्यभिहिताः'–च,

लङ्कारतया उक्तानि[1]। तथापि कश्चित् ब्रूयात् इति एवमुक्तम्[3] ॥

यद्यपि स नास्ति कश्चित् विषयः, यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा

---

सङ्केतः

कश्चित् प्राश्निकाधुनिकः। एवं अलङ्कारतया। उक्तमिति। अस्माभिरिति शेषः ॥

यद्यपीति। अयं भावः—यद्यपि रसादितात्पर्यालोचनेन मध्यमकाव्येऽपि पुनः ध्वनावेव विश्रान्तिरिति, ध्वनिगुणीभूतव्यङ्ग्ययोः सर्वत्र सङ्करः संसृष्टिर्वा। तथापि यत्र यस्मात् चारुताप्रतिपत्तिः तत्र तेन

मधुमती

दयोऽपि अन्येषां मते पृथगेव अलङ्काराः भवेयुः इत्यर्थः। कश्चित् ब्रूयादिति। " भावोदयभावसन्धिभावशबलत्वानि पृथगलङ्काराः। " इति अलङ्कारसर्वस्वकारसूत्रदर्शनात् इत्यर्थः ॥

यद्यपीति। रसध्वनौ भावध्वन्यावश्यकत्वात् तयोः उपकार्योपकारकभावलक्षणः सङ्करः। अन्यत्रापि अवान्तरध्वनीनां प्रधानध्वनिरूपेतराङ्गत्वेन गुणीभूतव्यङ्ग्यत्वम्। तथाच—स्वप्रभेदैः गुणीभूतव्यङ्ग्यप्रभेदैः अलङ्कारैः सालङ्काराभ्यां च ताभ्यां ध्वनेः समावेशेन उभयनिमित्तसमावेशात् कतमो व्यवहारः अस्तु? इति आक्षेपग्रन्थार्थः। समाधत्ते—तथापीति ॥

यद्यपि—'अयं स रशनोत्कर्षी' इत्यादौ मुख्यत्वेन करुणस्यैव प्राधान्यम्। तथापि वर्णनीयत्वेन शृङ्गारस्यैव प्राधान्यमिहाभिमतम्। तत्रैव

---

1 महिमभट्टप्रभृतिभिः पूर्वैरिति शेषः। 2 युक्तिसाम्यात्, पर्यालोचनकुशलः कश्चिदित्यर्थः। उक्तं च तथैव रुय्यकादिना। 3 उक्तोदाहरणेषु गुणीभूतव्यङ्ग्यत्वे मध्यमकाव्यता, रसवदाद्यलङ्कारत्वे तु अधमकाव्यता च स्यादिति रसवदादीनां अलङ्कारतैव नोचिता इति नव्यानां मतम् ॥

नास्ति। तथापि ‘प्राधान्येन व्यपदेशाः भवन्ति’ इति क्वचित् केनचित् व्यवहारः[1]॥

---

### सङ्केतः

व्यपदेशः कार्यः। ततोऽत्र गुणीभूतव्यङ्ग्यमेव **प्रधानम्**, न ध्वनिः इत्यर्थः। **स्वप्रभेदादी**त्यादिशब्दात् अलङ्काराः ग्राह्याः॥

### मधुमती

कवेः अभिनिवेशात्। एवं च—यद्यत्रैवं शृङ्गारवर्णने एव कवेः तात्पर्यम्, तदैव मध्यमत्वम्। अन्यथा तु उत्तमत्वमेव। कवितात्पर्येणैव विशेष-निर्णयात्। **न च** तत्तात्पर्यस्यैव अशक्यग्रहत्वम्। अभियोगेन तद्ग्रहात्। दृश्यते हि—केषाञ्चित् कवीनां शब्दे, केषाञ्चित् अर्थे, केषाञ्चित् उभयत्र, केषाञ्चित् रसे, तत्रापि केषाञ्चित् शृङ्गारे, केषाञ्चित् वीरादौ चेत्येवं पाटवम्। तदेव अभियोगः इत्युच्यते। तेन च तत्तात्पर्यमुन्नीय तत्तद्व्यपदेशः कर्तव्यः इति सम्प्रदायः॥

**वस्तुतस्तु**—उपधेयसङ्करेऽपि निमित्तासङ्करात्, नानानिमित्तसमावेश-स्थले ‘विवक्षातः कारकाणि भवन्ति’ इति कारकप्रयोगवत् इहापि विवक्षात एव उत्तमत्वादिव्यवहारः। तत्र च—यत्र ध्वनित्वविवक्षा तत्र उत्तमत्व-व्यपदेशः, यत्र अपराङ्गत्वादिविवक्षा तत्र गुणीभूतव्यङ्ग्यत्वव्यवदेशः, यत्र तु चित्रत्वविवक्षा तत्र अधमत्वव्यपदेशः। एवं च—**‘प्राधान्येन व्यपदेशा भवन्ति’** इत्यत्र विवक्षाविषयत्वमेव प्राधान्यं इहाभिमतमिति ध्येयम्। एतच्च अग्रे उपमाग्रन्थे आकरे एव स्फुटम्। **एतेन**—‘शुद्धभेदैः सह शरेषुयुगखेन्दवः’ इत्युक्तमनुपपन्नम्। स्वप्रभेदादिभिः सह सङ्करसम्भवेन शुद्धत्वाभावात्’—इत्यपि निरस्तम्। उक्तप्रकारेण उपधेयसङ्करेऽपि तत्त-दुपाधीनां असाङ्कर्येण शुद्धत्वस्य सम्भवात्॥

---

1 एवं रसवत्प्रेयऊर्जस्विसमाहितभावोदयभावसन्धिभावशबलताख्यं सप्तविध-मप्यपराङ्गमुदाहृतम्।

(अलङ्कारस्य वाच्याङ्गतायां अपराङ्गम्—)

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदं उदश्रु प्रलपितम् ।
कृतालंकाभर्तुः वदनपरिपाटीषुघटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता[1] ॥ १२५ ॥

---

### सङ्केतः

जनस्थाने इति । जनस्थानं जनानां स्थानं, दण्डकारण्यं च । कनकमृगे तृष्णा भ्रान्तिः, कनके मृगतृष्णा लिप्सा च । वै देहि इति पदद्वयम्, वैदेही सीता च । लङ्काभर्तुः रावणस्य वदनेषु दशसु मुखेषु, इषुघटना बाणयोगः ; अलं अतिशयेन काभर्तुः कुत्सितस्य भर्तुः वदनपरिपाटीषु वदनपङ्क्तिषु वचनश्रेणिषु घटना आदेशकारिता च । कुशलवौ सुतौ यस्याः सा सीता, कुशलवसुनो भावः तत्ता—शुभधनता चेत्यर्थः ।

### मधुमती

जनस्थाने इति । काभर्तुः ईषद्भर्तुः । अल्पार्थे कोः कादेश-

---

1 राजसेवानिर्विण्णः कश्चिदाह—श्रीरामो यथा जनस्थानाख्यदण्डकारण्यप्रदेशविशेषे कनकमयमारीचमायामृगग्रहणाभिलाषान्धीकृतधिया बभ्राम, तथा अहमपि जनसंनिवेशपरिपूरिते नगरे कनकरूपमरुमरीचिकालोभान्धीकृतधिया सर्वतोऽभ्रमम् । स यथा प्रतिचरणन्यासं वैदेहि वैदेहीति उद्गताश्रुधारः प्रालपत्, तथा अहमपि त्वं वै देहि त्वमपि वै देहीति प्रतिवर्णसमूहं योजनेन परिपूरितनेत्राम्भसा प्रालपम् । एवं स यथा लङ्केश्वरमुखपरिपाटयितृशरसन्धानमकरोत्, तथा अहमपि कुत्सितप्रभुप्रलपितमिथ्यावचनसंदर्भेष्वघटितांशसमर्थनाय अलं—अधिकं यत्नमकरवं च । एवं अनेकविधरामधर्माचरणात् यद्यपि रामत्वमेव मया प्राप्तम् । तथापि रामाधिगतकुशलवरूपसुतवती सीता मदीयकुशलहेतुभूतवसुमत्ता वा परं मया नाधिगता—हन्त ! ॥ इति ॥ अत्र जनस्थान इत्यादिपदानां परिवृत्त्यसहतया शब्दशक्तिमूलध्वनिविषयः उपमानोपमेयभावः मयाऽऽप्तं रामत्वमिति वाच्याङ्गम् ॥ 'मयाऽथापि प्राप्ता कुशलवसुता नैव ह ह हा !'—क. (हनुमन्नाटके १०) इदं वाचस्पतिभट्टस्येत्यप्याहुः ।

अत्र—शब्दशक्तिमूलानुरणनोपमः[1] रामेण सह उपमानोपमेयभावः वाच्याङ्गतां[2] नीतः ॥

---

## सङ्केतः

**अनुरणनोपमः** अनुस्वानेन तुल्यः व्यङ्ग्यः इति। **वाच्याङ्गतामिति**। व्यङ्ग्योपमयैव रामत्वे लब्धे यत् **रामत्वं** इत्युक्तं, तत्[3]—व्यङ्ग्योपमा अपरस्य वाच्यस्य **अङ्गतां नीता** इत्यर्थः ॥

## मधुमती

विधानात्[4]। ततः अल्पत्वेन कुत्सितत्वं लक्ष्यम्। कार्यकारणभाव-सम्बन्धः, अनुपास्यत्वं व्यङ्ग्यम्। यत्तु—कुत्सितभर्तुः' इति पितृचरण-व्याख्यानम्, तत्तु पर्यवसितार्थप्रदर्शनपरम्। **वाच्यतां नीतः इति**। **वाच्यतां**—स्फुटतामिति यावत्। **मयाऽऽप्तं रामत्वं** इति निदर्शनालङ्कार-व्यक्तोपमानोपमेयभावस्य स्फुटत्वात्। एवंभूतोऽप्ययं वाक्यार्थस्य अङ्गमेव। वाक्यार्थस्यैवात्र औपम्यप्रतीतौ प्राधान्यात्। **न चैवं**—'उल्लास्य काल-करवाल'इत्यत्रापि अपराङ्गत्वं स्यादिति वाच्यम्। इष्टापत्तेः। अलङ्कार-ध्वनित्वविवक्षया उत्तमत्वव्यपदेशात्। अत्र—'वाच्याङ्गतां नीतः' इति क्वचित् पाठः। स तु—पूर्वापरग्रन्थपर्यालोचनया, 'अङ्गमिति शेषः' इति अवश्यवाच्यत्वेन च अप्रामाणिकः एव ॥

---

1 'मूलोऽनुरणनरूपः'–क. 2 'वाच्यतां'–ख. 3 तस्मादित्यर्थः।
4 'ईषदर्थे।' (पा. सू. ६-३-१०५) इति सूत्रेणे त्यर्थः।

(वस्तुनो वाच्याङ्गतायां अपराङ्गम्—)

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीं
अम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि! पादपतनेन सहस्ररश्मिः[1] ॥ १२६ ॥

---

## सङ्केतः

आगत्येति । अत्र विसंष्ठुलाङ्गीव विसंष्ठुलाङ्गी[2] तां तथेति विग्रहः । बहुव्रीहौ तु ङीप्प्रत्ययाप्राप्तेः[3] । क्वचिदपि द्वीपे क्षपिता त्रियामा येन । दिनं कृतमित्यर्थः । पादपतनेन दीप्तियोगेन प्रसादयति—लक्षणया

## मधुमती

आगत्येति । विसंष्ठुलाङ्गीं—सङ्कुचिताङ्गीमेव सन्तापकार्श्यादिना-विषमिताङ्गीम् ॥ नन्वत्र नायकवृत्तान्तप्रत्ययः किं शब्दशक्तिमूलः ? उत अर्थशक्तिमूलः ? आहोस्वित् उभयशक्तिमूलः ? किञ्च—किमत्र नायकवृत्तान्त एव ध्वन्यः ? उत तेन सह उपमानोपमेयभावः इत्युपमालङ्कारोऽपि ? इति, अस्य च ध्वनेः किं वाच्यसिद्ध्यङ्गता ? उत न ? इति च सन्देहे निर्धारयितुमाह—

---

1 मुग्धां प्रति सखी वदति - अयि मूढे! तन्वङ्गि! शृणु, यथा कमलिनी-नायकः सूर्यः मेरोरपरभागे क्वचित् सर्वामपि रात्रिं नीत्वा अधुना प्रभाते समागत्य तद्वियोगदुःखेन सङ्कुचिताङ्गीं नलिनीं स्वपादरूपकिरणावतरणेन विकासयति, तथा त्वत्प्रियोऽपि नायिकान्तरसन्निधौ सर्वामपि रात्रिं नीत्वा इदानीं समागत्य तद्वियोगेन विषमिताङ्गीं भवतीमपि भवच्चरणप्रणामेन शनैः गतरोषां कर्तुं प्रयतते, पश्यास्य चातुरीम्—इति ॥ अत्र पादपतनेनेति श्लिष्टपदं विहाय 'पाथोजिनीपरिवृढोऽय-मधीरनेत्रे' इत्येव पाठः समुचितः प्रकृतोदाहरणायेत्याहुः ॥ 2 'विसंस्थुलाङ्गी'–ग. 3 अनुपसर्जनादिति निषेधादिति भावः ।

**अत्र—नायकवृत्तान्तः अर्थशक्तिमूलः वस्तुरूपः निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ॥**

---

## सङ्केतः

विकासयतीत्यर्थः । अत्र समासोक्तौ **वस्तुरूपनायकवृत्तान्तस्य** सामर्थ्यादागतत्वात् अङ्गत्वम् । **निरपेक्षेति** । न हि रविपद्मिन्यौ नायकवृत्तान्तं आकाङ्क्षतः । नायकश्च नायिका च तौ **नायकौ** । **तद्वृत्तान्तः अर्थात्** आपतितः । **अध्यारोपेणैवेति** । न ह्यत्र नायकवृत्तान्तः रविपद्मिनीवृत्तान्तवत् प्राधान्यं लभते । कुतः ? रविपद्मिनीवृत्तान्तस्य प्रभातप्रस्तावात् वाच्यस्य सतः अङ्गतां नीतत्वात् । रविपद्मिन्योः नायकवृत्तान्तः आरोपितः इति भावः ॥

## मधुमती

**अत्रेति** । **अर्थशक्तिमूलः** इत्यनेन शब्दशक्त्यादिमूलतां अपाकरोति । यद्यपि—पादपदस्य श्लिष्टत्वात् शब्दशक्तिमूलत्वं अस्त्येव । तथापि 'भूम्ना व्यपदेशः' इति अर्थशक्तिमूलत्वव्यपदेशः । इदं तु प्रकृते । यत्र उभयशक्तिमूलत्वं तत्र अविवक्षैव व्यपदेशनियामिका । अत एव 'उल्लास्यकालकरवाले'त्यत्रापि तथा विवक्षायां उभयशक्तिमूलत्वमेव, प्रकारान्तराभावात् । न चैवमपि—'विभाति नृप भीमः' इत्यत्रेव अत्रापि पादपदं श्लिष्टमिति पदप्रकाश्यशब्दशक्तिमूलध्वनित्वव्यपदेशः भवत्विति वाच्यम् । भीमपदस्येव पादपदस्यापि विशेष्यानुपस्थापकत्वात् । अत एव—अत्र समासोक्त्यलङ्कारेऽपि श्लिष्टविशेषणमात्रात् अपरार्थप्रतीतिः इति ज्ञेयम् ॥ **वस्तुरूपः** इत्यनेन नोपमा व्यङ्ग्या इति प्रतिपाद्यते । तच्च श्लिष्टशब्दाभावेन, पार्थक्येन अर्थद्वयाप्रतीतेः । निरपेक्षेत्यनेन वाच्यसिद्ध्यङ्गतां निराकरोति । भवेदप्येवं यदि—वक्ष्यमाणतदुदाहरणे रूपकसिद्धिः व्यङ्ग्यगरलार्थमिव,

वाच्यसिद्ध्यङ्गं यथा—(एकव्यक्तिवक्तृकपदे—)

भ्रमिं अरतिं अलसहृदयतां
प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं
प्रसह्य कुरुते विषं वियोगिनीनाम्[1] ॥ १२७ ॥

अत्र—हालाहलं व्यङ्ग्यं भुजगरूपस्य[2] वाच्यस्य सिद्धिकृत् ॥

---

## सङ्केतः

**भ्रमिमिति** । **भ्रमिः** चित्तस्यानवस्थितत्वम् । **अरतिः** बाह्यार्थेषु । **प्रलयः** इन्द्रियाणां अल्पा शक्तिः । चित्तस्य शक्तिरोधः **मूर्च्छा** । सत्येव चेतसि इन्द्रियाणां अशक्तिः **तमः** । **विषं** प्रस्तावात् जलम् । तच्च

## मधुमती

रविकमलिनीवृत्तान्तोऽपि नायकवृत्तान्तमपेक्षेत । न चैवम्, अनुपपत्त्यभावात् । एवं च—'न वाच्यसिद्ध्यङ्गता नापराङ्गता वा' इति पितृचरणलेखनस्य नैतदाकारः सन्देहः इत्यर्थः । यथाश्रुते अस्य अपराङ्गत्वात् असङ्गतिः स्यादिति ॥

**अत्रेति** । विषमेव—जलमेव **विषम्** । एवमेतद्रूपणेन[3] **जलदाः** एव **भुजगाः** इति रूपकसमासः । उपमितसमासे जलप्राधान्येन तत्र हाला-

---

1 वर्षाकालवर्णनमिदम्—मेघरूपसर्पजन्यं जलरूपं हालाहलं विरहिणीषु शिरोभ्रमणम्, विषयेष्वरुचिम्, हृदयेष्वालस्यम्, निश्चेष्टताम्, बाह्यज्ञानोपरमम्, आन्तरज्ञानोपरमम्, देहकार्श्यम्, अन्ततो मरणं चेत्येतत्सर्वं बलात्कारेण निर्दयं समापादयति, हन्त! इत्यर्थः ॥ 2 'व्यङ्ग्यं मूर्च्छातमोरूपस्य भुजगरूपणस्य'—क. 3 'द्रूपकेण'—च.

यथा वा—(भिन्नव्यक्तिवक्तृकपदे—)

**'गच्छाम्यच्युत! दर्शनेन भवतः किं तृप्तिरुत्पद्यते[1]?**

**किं त्वेवं[2] विजनस्थयोः हतजनः संभावयत्यन्यथा।'**

**इत्यामन्त्रणभङ्गिसूचितवृथाऽवस्थानखेदालसां**

**आश्लिष्यन् पुलकोत्कराञ्चिततनुः[3] गोपीं हरिः पातु वः[4]॥१२८॥**

---

## सङ्केतः

अग्निप्रभृति कार्यविशेषोत्थापनेन कालकूटमिवेति व्याख्या, अन्यथा मेघानां भुजङ्गत्वं न सिध्यतीति। अयं शब्दशक्तिमूलः पदप्रकाश्यो ध्वनिः। 'मेघानां कृष्णत्वेन भुजङ्गत्वसिद्ध्या विषस्य जलस्य गरलरूपता सिद्ध्यती'ति व्याख्याने तु उत्तमत्वमेव॥

अच्युतेति। हे **अच्युत!** हरे! अक्षरणशील! **दर्शनेन** सम्भोगविकलेन। **विजनस्थयोः** एकान्तस्थयोः। **सम्भावयति** मन्यते।

## मधुमती

हलानन्वयप्रसङ्गात्। न वा सम्बन्धार्थाभिधायकत्वम्। वियोगिन्युद्देश्यक-अग्न्यादिविषावस्थाष्टकविधानस्य प्रकृतत्वात्, तस्य च रूपणं विना असम्भवात् इति दिक्॥

---

1 'किं प्रीतिरुत्पद्यते'—क. 2 'किन्त्वेवं'—ख. 3 'तनुं'—क. 4 "हे कृष्ण! यदहमिदानीं गच्छामि, तत् तव दर्शनेन तृप्तिरुत्पन्नेति न, किन्तु एकान्तस्थितयोः आवयोर्विषये दोषैकदृगयं जनः 'रत्यर्थं सङ्गताविमौ' इति सम्भावयेदिति भिया गच्छामि।" इति अन्यत्र गमनाभ्यनुज्ञाप्रार्थनव्याजेन सूचिता या सम्भोगादिसौभाग्यलाभमन्तरेणैव वृथावस्थितिः तन्निबन्धनेन खेदेन अलसां गोपीं दृष्ट्वा सहसाऽगत्यालिङ्ग्य रोमाञ्चितः श्रीहरिः युष्मान् रक्षतु इत्यर्थः॥

अत्र—अच्युतादिपदव्यङ्ग्यं आमन्त्रणेत्यादिवाच्यस्य। एतच्च—एकत्र एकवक्तृगतत्वेन, अपरत्र भिन्नवक्तृगतत्वेनेति अनयोर्भेदः ॥

---

## सङ्केतः

भवांस्तावत् अच्युतः एकान्तस्थितोऽपि उदासीनः, तत् किमिति आत्मानं वञ्चयावः ?[1] आमन्त्रणं अच्युतेतिरूपं हूतिकरणम्[2]। वाच्यस्येति। सिद्धौ अङ्ग इति योगः। अत्र वाच्यं स्वोपस्कारकात् व्यङ्ग्यात् स्वात्मो[3]पपत्तिं लभमानं वैदग्ध्यं प्रतिपादयत् व्यङ्ग्यमर्थं गौणयति। एतच्च व्यङ्ग्यम्। एकत्र भ्रमीत्यत्र। एको वक्ता कविः। अपरत्र गच्छामीत्यत्र। अत्र पूर्वार्धे गोपी, उत्तरार्धे तु कविः वक्ता[4] ॥

## मधुमती

स्थिरत्वं तेन निरुद्योगत्वं च व्यञ्जयता अच्युतपदेन वृथावस्थानरूपवाच्यस्य सिद्धिरित्यर्थः ॥

---

1 'बन्धयावः'–ग. 2 'ज्योक्करणम्'–व. 3 'स्वार्थो'–ग. 4 "शब्दार्थशक्त्याऽक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः। यत्राविष्क्रियते स्वोक्त्या नास्त्येषाऽलङ्कृतिर्ध्वनिः" ॥ इत्युक्ततया अत्र नैव ध्वनित्वमिति केचित् ॥

अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्[1] ॥ १२९ ॥

अत्र—'अदृष्टो यथा न भवसि, वियोगभयं च यथा नोत्पद्यते, तथा कुर्याः' इति क्लिष्टम् ॥

---

## सङ्केतः

तथा कुर्याः इति । एवंरूपं यत् व्यङ्ग्यं तस्य स्फुटत्वेन न प्रतीतिः । ततश्च न तथा चमत्करोतीति क्लिष्टम्[2] ॥

## मधुमती

**इति क्लिष्टमिति ।** व्युत्पन्नमपि सहृदयैः झटित्यसंवेद्यमिति अस्य वाच्यपर्यवसायित्वमेवेत्यर्थः । 'म्लिष्ट'मिति पाठे 'अथ म्लिष्टमविस्पष्टम्' इत्यमरः स्मर्तव्यः । तदिह प्रकृतपद्येन दर्शनादर्शनपर्यवसन्नमेव । **अदृष्टो यथा न भवसि** इत्यनेन अदर्शनम्, **वियोगभयं च नोत्पद्यते** इत्यनेन वियोगं च प्रतिक्षिपता दर्शनादर्शनयोः प्रतिपादनात् । उक्तौ परं भेदः इति ध्येयम् । अत एव अत्र पर्यायोक्तालङ्कारोऽपि । अत एव वाच्यपर्यवसायित्वोक्त्यनन्तराभिधीयमानव्यङ्ग्यत्वलक्षणोपाधिभेदात् द्वयोः साङ्कर्येऽपि न दोषः ॥

---

1 काचिन्मुग्धा प्रियं प्रत्याह—अयि! प्रिय! भवति अदृष्टे सति उत्कण्ठोदयात् न सुखं लभ्यते, दृष्टेऽपि झटिति विश्लेषभिया नैव सुखम्, इत्थं अदृष्टेन दृष्टेन चेति उभयथाऽपि भवता सुखं न लभ्यते किम्! इत्यर्थः । 'विश्लेषभीरुता'—क.
2 'प्रतीतिः सतोऽनवसं करोतीति क्लिष्टम्'—घ.

संदिग्धप्राधान्यं यथा—

हरस्तु किञ्चित् परिवृत्तधैर्यः
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि [1] ॥ १३० ॥

अत्र—'अधरं [2] परिचुम्बितुं ऐच्छत्' इति—किं प्रतीयमानम्? किं वा विलोचनव्यापारणं वाच्यं प्रधानम्? इति सन्देहः [3] ॥

---

## सङ्केतः

उमेति । बिम्बफलं अधरयतो बिम्बफलाधरौ, तादृशौ ओष्ठौ यत्र मुखे तत् तथा । यद्वा—त्रयाणां लोचनानां मुखे अधरे ओष्ठे चेति स्थानत्रये व्यापारणं सचमत्कारम् । अत एव विलोचनानीति बहुवचनोक्तिः युक्तिमेति । यदि वा—अधरश्चासौ ओष्ठश्च स तथा । बिम्बफलाकारः अधरोष्ठः यत्र तत् तथा । सर्वैः नेत्रैः मुखावलोकने मुखस्य सौन्दर्यातिशयः प्रतीयते । सन्देह इति । प्रतीयमानवाच्ययोः द्वयोरपि चमत्कारकारित्वात् एकस्यापि निर्धारणं कर्तुं न पार्यते इति ॥

## मधुमती

अत्रेति । बिम्बफलाधरोष्ठे इति पदं परिचुम्बने च प्राधान्येन अव्यञ्जकम् । परमेश्वरीरूपनिरूपणेच्छया च ध्यानस्तिमिताक्षितया उन्मीलनं

---

1 तस्मिन् विजृम्भमाणे वसन्तसमये, गृहीतकार्मुके च कामदेवे, भगवान् ईश्वरोऽपि सन् चन्द्रोदयसमये जलधिरिव किञ्चित्प्रक्षुब्धहृदयः प्रशिथिलधैर्यश्चसंवृत्तः बिम्बफलसदृशाधरसौन्दर्यपरिशोभिते गौरीमुखे स्वानि त्रीण्यपि विलोचनानि सञ्चारयामास ॥ (कु. सं. ३- ). 2 अधरं इति नास्ति–क. 3 उभयत्रापि साधक-बाधकप्रमाणाभावादिति भावः ।

तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यः तथा मित्रं अन्यथा दुर्मनायते [1] ॥ १३१ ॥

अत्र—'जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यति' इति व्यङ्ग्यस्य, वाच्यस्य च दुर्मनस्त्वस्य, समं [2] प्राधान्यम् ॥

---

### सङ्केतः

ब्राह्मणेति । 'द्विजावज्ञात्यागे भवतां भूतिः, अहं च मित्रम्' इति एकोपक्रमे कार्यद्वयं सिध्यतीति महाचमत्कारकारीत्यर्थः । इयं च रावणपुरुषं [3] प्रति भार्गवोक्तिः । वाच्यस्य दौर्मनस्यरूपस्य ॥

### मधुमती

च वाच्यम् । तदत्र—व्यञ्जनसहकारिणः अन्यसान्निध्यादेः वाच्यव्यङ्ग्योभयसाधारण्येन चमत्कारकारितायां सन्देहः । चत्कारित्वमेव च प्राधान्यमिव । परस्परं क्षत्रिययोरिव वाच्येन साकं व्यङ्ग्यस्य विग्रहः इति, उभयोः चमत्कारित्वाविशेषात् समप्राधान्यमित्यर्थः ॥

---

1 रावणदूतं प्रति भार्गवस्य सन्देशवचनमिदम्—ब्राह्मणावमानपरित्यागोऽयं केवलं भवतामेव कल्याणाय, न तु ब्राह्मणानां कल्याणाय । मयि जीवति तेषां अनिष्टप्रसङ्गस्यैवा सम्भवात् । अन्यथा तु—माहेश्वरताप्रत्यासत्त्या युष्माकं मित्रभूतोऽयं भार्गवः झटिति क्रुद्धो भवेत् । इति । (महावीरचरिते २- ) 'ब्राह्मणाभिभव'–क.
2 'च समं'–क.  3 रावणं प्रति इति तु उद्योतसंमतः पाठः ।

काकाक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपात्
दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन[1] ॥ १३३ ॥

अत्र—'मथ्नाम्येव' इत्यादि व्यङ्ग्यं वाच्यनिषेध-सहभावेन स्थितम्[2] ॥

## सङ्केतः

व्यङ्ग्यमिति । काकाक्षिप्तमिति सम्बन्धः । वाच्येति । वाच्यश्चासौ निषेधश्च, तत्सहभावेन । अयं भावः—पूर्वं निषेधस्य प्रतीतिः, ततः अप्राधान्येन[3] व्यङ्ग्यस्य इति नास्ति । किन्तु द्वयस्यापि सममेव प्रतीतिः । न चात्र विपरीतलक्षणा । यतः उच्चारणकाल एव न कोपात्

## मधुमती

काकाक्षिप्तमिति । काकुव्यङ्ग्यत्वे सति वाच्यसिद्धिसम्बन्धित्वमित्यर्थः । अत्र—'गुरुः खेदं खिन्ने' इत्यादौ उत्तमकाव्ये पूर्वं प्रतीकम्, वाच्यसिद्ध्यङ्गे उत्तरं प्रतीकं च अतिव्याप्तमिति उभयोपादानम् । एवं च

1 सन्धिश्रवणकुपितस्य भीमस्य सहदेवं प्रति वचनमिदम्— कौरवाणां शतमपि कोपात् युद्धे न मथ्नामि ! दुःशासनस्य वक्षसो रुधिरं न पिबामि ! दुर्योधनस्योरुयुगलं गदया न संचूर्णयामि ! भवतां नृपतिः युधिष्ठिरोऽयं पञ्चग्राममात्रं प्रतिग्राह्यतया स्वीकृत्य दुर्योधनेन सन्धिं करोतु, पश्यामि । इति ॥ (वेणीसंहारे १.) 2 वाच्यो यो मथनादिनिषेधः तत्समकालप्रतीयमानतयैव स्थितमित्यर्थः । 3 'प्राधान्येन'—ग. 4 'अक्षमण'—घ.

## सङ्केतः

इति दीप्ततारगद्गदसाकाङ्क्षकाकुबलात् निषेधस्य निषेध्यमानतयैव युधिष्ठिरेष्टसन्धेः अक्षमा[4]रूपत्वाभिप्रायेण प्रतीतिः इति, मुख्यार्थबाधाद्यभावात् ॥

## मधुमती

'काकुव्यङ्ग्यत्वे सति वाच्यसिद्ध्यङ्गत्वम्' इति पितृचरणलेखनस्यापि अत्रैव तात्पर्यम्। तेन—'काकोरेव वाच्यसिद्ध्यङ्गत्वम्, न तु तद्व्यङ्ग्यस्य, तस्य वाच्यसिद्ध्यविषयत्वात्' इति दूषणं अलग्नकं वेदितव्यम्। तदङ्गत्वाभावेऽपि तत्सम्बन्धित्वात्। तच्च—वाच्यसिद्ध्यङ्गे जनकतया, अत्र तु विषयतया इति अन्यदेतत्। **अत्रेति**। मथनायोगव्यवच्छेदप्रतीत्या वाच्यस्य मथनाभावस्यापि प्रतीतेश्चेति निषेधो विधिर्वा यत् वाच्यं तन्निषिध्यैव काका व्यञ्जनात्। एवं च वाच्यनिषेधशिरस्कैवात्र व्यङ्ग्यप्रतीतिरिति ध्येयम्। तेन—'न पुनस्तस्याधमस्यान्तिकम्'[1] 'नाद्यापि कुरुषु'[2] इत्यादौ नातिप्रसङ्गः। तदन्तिकागमन–कुरुविषयकखेदाभजनयोः व्यञ्जकीभूतवाच्ययोः व्यञ्जनातः अप्रतीतेः। किन्तु तद्विरुद्धयोः गमनभजनयोः ततः प्रत्ययात्। यदि च—'न पुनस्तस्याधमस्यान्तिकम्'[1] इत्यत्रापि काकुः क्रियते, तदा मध्यमत्वमेव। एवं 'यदि मे वल्लभा दूती'[3] इत्यादावपि, सत्यां काकौ मध्यमत्वमेव। एवं च गुणीभूतव्यङ्ग्ये वाक्यादिभ्योऽधिका काकुरपि व्यञ्जिकेति स्मर्तव्यम् ॥

---

1 (P. 43)। 2 (P. 152)। 3 "यदि मे वल्लभा दूती तदाऽहमपि वल्लभा। यदि तस्याः प्रियाः वाचः तन्ममापि प्रिय! प्रिया" ॥ अत्र विधिपरोच्चारणान्यथाकरणेन निषेधव्यञ्जिका निषेधकाकुः।

असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए ।
घरकम्मवावडाए वहुए सीअंति अंगाइं ॥ १३४ ॥
[वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृतायाः वध्वाः सीदन्त्यङ्गानि [1] ॥]

अत्र—'दत्तसङ्केतः कश्चित् लतागहनं प्रविष्टः' इति व्यङ्ग्यात् 'सीदन्त्यङ्गानि' इति वाच्यं सचमत्कारम् ॥ ४५ ॥

---

सङ्केतः

वाणीरेति । गृहकर्मव्यापृतायाः अन्यकर्मरतायाः अपि वध्वाः सातिशयलज्जापरवशायाः अपि । अङ्गानि इति बहुवचनेन एकमपि न तादृशं अङ्गम्, यत् आत्मानं संवरीतुं शक्नोति । सीदन्ति—आस्तां गृहकर्म, स्वमपि नालं धर्तुम् । गृहकर्मयोगे च स्फुटं तथा अलक्ष्यमाणानीति । अस्मात् वाच्यादेव स्मरपारवश्यप्रतीतेः चमत्कारः । वाच्यं स्वात्मानं उन्मज्ज्य [2] व्यङ्ग्यं निमज्जयतीत्यर्थः ॥

## मधुमती

अत्रेति । उक्तव्यङ्ग्यं विनाऽपि शकुनिकोलाहलश्रवणरूपोद्दीपनविभावस्य अङ्गसादरूपानुभावस्य तदाक्षिप्तानां आलम्बनविभावव्यभिचारिभावानां च संवलनादेव साक्षात् रसव्यञ्जनया चमत्कारोदयात्, व्यङ्ग्येन तु वाच्यद्वारा विलम्बेन रसव्यञ्जनात् वाच्यापेक्षया व्यङ्ग्यस्य निकर्षशालितेति भावः॥

---

1 स्वगृहपार्श्ववृत्तिनिकुञ्जे दत्तसङ्केता कामिनी गुरुजनपरतन्त्रा गृहे एव वर्तमाना यदा आरामगतपक्षिकोलाहलेन प्रियागमनं तर्कयति, न च तत्र गन्तुं शक्नोति तदा तदवस्थां वर्णयति—वेतसनिकुञ्जेभ्यः उत्प्लुतानां पक्षिणां कलकलशब्दं शृण्वन्त्याः दैनन्दिनगृहकर्मणि व्यापृतायाः वध्वाः सर्वाण्यप्यङ्गानि अनिर्वर्णनीयां आकुलतां प्राप्नुवन्ति इति ॥ (गा. स. ८७६) 'शृण्वत्याः'–ख. 2 'उन्मुच्य'–ग.

**एषां भेदाः यथायोगं**
**वेदितव्याश्च पूर्ववत्[1] ॥ ४६ ॥**

यथायोगमिति ।
'व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता[2] तासां काव्यवृत्तेः तदाश्रयात्[3] ॥

---

## सङ्केतः

**एषां भेदाः इति** । यावन्तो भेदाः शुद्धध्वनेः, तावन्तः गुणीभूत-व्यङ्ग्यस्यापि भवन्तीत्यर्थः । **ध्वन्यङ्गतेति** । व्यञ्जकत्वेन व्यङ्ग्यत्वेन च द्विधा ध्वन्यङ्गता । तत्र इह प्रस्तावात् ध्वन्यङ्गता व्यङ्ग्यत्वेन ग्राह्या । ध्वनिरूपतेत्यर्थः । **तदाश्रयादिति** । यतः अलङ्कारेषु काव्यवृत्तिः विश्राम्यति,

## मधुमती

ननु किमेतावन्त एव गुणीभूतव्यङ्ग्यभेदाः? नेत्याह—**एषामिति** । **पूर्ववदिति** । अर्थान्तरसङ्क्रमितवाच्यत्वादिरूपाः भेदाः ध्वनिवत् अत्रापि द्रष्टव्याः । य एव ध्वनयः त एव तत्तदुपाधियोगात् गुणीभूतव्यङ्ग्याः । निरुक्तास्तु तत्प्रयोजकाः उपाधयः इति भावः ॥

तत्किं यत्र वस्तुना अलङ्कारव्यञ्जनं तत्रापि गुणीभूतव्यङ्ग्यत्वम्? तथा च विरोधः इत्यत आह—**यथायोगमितीति** । यथसम्भवमित्यर्थः । तेन यत्रैव उक्तोपाधियोगः तत्रैव गुणीभूतव्यङ्ग्यत्वम् । अत्र तु तदभावात् न तथात्वमित्यर्थः । अत्रैव ध्वनिकारसंमतिमाह—**व्यज्यन्ते इति** । **काव्य-वृत्तेरिति** । तदलङ्कारमुखेनैव तत्काव्यस्य चमत्कारकारित्वात् ॥

---

1 एषां गुणीभूतव्यङ्ग्यानां शुद्धाः सङ्करसंसृष्ट्यायत्ताश्च भेदाः ध्वनिवदेव यथा-संभवं वेदितव्याः इत्यर्थः । 2 ध्वन्यङ्गता—ध्वनिप्रभेदता, न तु गुणीभूत-व्यङ्ग्यतेत्यर्थः । 3 (ध्वन्यालोके—२-२९) ।

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्र अलङ्कारो व्यज्यते, न तत्र गुणीभूतव्यङ्ग्यत्वम् ॥ ४६ ॥

---

## सङ्केतः

तेषां च गुणीभूततायां काव्यं वाक्यमात्रं भवेत्। न च वाक्ये वस्तुमात्रे काव्यव्यवहारः ॥

## मधुमती

**तदद्मर्थः**—चित्रेण चित्रव्यञ्जने, चित्रेण अचित्रव्यञ्जने च ध्वनित्वं गुणीभूतव्यङ्ग्यत्वं च विवक्षाभेदात्। द्वयं हीह चमत्कारप्रयोजकम्—चित्रत्वम् व्यङ्ग्यत्वं चेति। चित्रतायामपि प्रतीयमान एवार्थः मूलम्। एवं च—अलङ्कारेण वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि, चित्रत्वविवक्षया उभयोः तुल्यप्राधान्यात् गुणीभूतव्यङ्ग्यत्वमपि। एवं वस्तुना वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि उभयोरपि चित्रत्वविवक्षया तुल्यप्राधान्यात् गुणीभावोऽपि। तथा अलङ्कारेण अलङ्कारध्वनावपि व्यञ्जकस्य चित्रत्वात् व्यङ्ग्यस्यापि चित्रत्वात् तुल्यप्राधान्यविवक्षया ध्वनित्वं गुणीभूतत्वं च। प्रकृते वस्तुना अलङ्कारध्वनौ तु—व्यञ्जकस्य अचित्रत्वात् अव्यङ्ग्यत्वाच्च तुल्यप्राधान्यविवक्षा न सम्भवतीति ध्वनित्वमेव। तेन तैर्हीन एवायं प्रस्तारितः। अतः पञ्चचत्वारिंशदेव एतद्भेदाः इति द्रष्टव्यम् ॥ यच्च पितृचरणैरुक्तम्—**वस्तुमात्रेणे**त्युपलक्षणम्। 'अलङ्कारेणे'त्यपि द्रष्टव्यमिति। तत् रूपकालङ्कारमभिप्रेत्य, तेन अन्यालङ्कारवत् उपमाया अपि व्यञ्जनात्। न च तत्र ध्वनित्वव्यपदेशः अप्राधान्यात्, रूपकादिनैव चमत्काराधानात्। अत एव अयुक्तं गुणीभूतत्वमपि नेति दिक्[1] ॥

---

1 केचित्तु शब्दशक्तिमूलानुरणनरूपालङ्कारध्वनेरिव वस्तुमात्रव्यङ्ग्यालङ्कारध्वनेरपि वाच्याङ्गताद्यप्राधान्यप्रयोजकसद्भावे गुणीभूतव्यङ्ग्यता संभवत्येवेत्यपि वदन्ति ॥

**सालङ्कारैः ध्वनेस्तैश्च**
**योगः संसृष्टिसङ्करैः**[1] ॥

सालङ्कारैरिति । तैरेव अलङ्कारैः, अलङ्कारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता—

“स गुणीभूतव्यङ्ग्यैः
सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां
पुनरप्युद्द्योतते बहुधा”[2] ॥ इति ॥

---

## सङ्केतः

तैरेवेति । गुणीभूतव्यङ्ग्यैरेवेत्यर्थः । अयं भावः—अत्र पक्षत्रयी—शुद्धध्वनेः केवलालङ्कारयोगः इत्येकः पक्षः, केवलैः गुणीभूतव्यङ्ग्यैर्योगः इति द्वितीयः, तृतीयस्तु अलङ्कारयुक्तैः गुणीभूतव्यङ्ग्यैर्योगः इति । तैः गुणीभूतव्यङ्ग्यैः ॥

स इति । सः ध्वनिः स्वैः प्रभेदैः संसृष्टिसङ्कराभ्यां कृत्वा बहुधा स्यात् इत्यर्थः । एकस्मिन्नेव वृत्ते ध्वनिः गुणीभूतव्यङ्ग्यं च अलङ्कारश्च स्यात् इति भावः ॥

---

1 तैः सालङ्कारैः=गुणीभूतव्यङ्ग्यप्रभेदैः अलङ्कारात्मतां प्राप्तैः समासोक्तिरसवदादिभिः, उपमाद्यलङ्कारैश्च सह संसृष्टिरूपेण त्रिविधसङ्कररूपेण वा ध्वनेः मिश्रणं सम्भवतीत्यर्थः । 2 सहगुणीभूतव्यङ्ग्यैः सहालङ्कारैः ये वर्तन्ते स्वे ध्वनेः प्रभेदाः, तैः सङ्कीर्णतया संसृष्ट्या वा अनन्तप्रकारो ध्वनिर्भवतीत्यर्थः ॥ (ध्वन्यालोके ३-४३) ‘सुगुणीभूतव्यङ्ग्यैः’—क. ‘स गुणीभूतव्यङ्ग्यः’—ख.

**सङ्केतः**

ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टिः यथा—

षट्तर्कीललनाललामनि गते यस्मिन् मुनिस्वामिनि
स्वर्गं, वाग्जननी शुचां परवशा काश्मीरमाशिश्रियत् ।
तत्रापि स्फुरितारतिः भगवती जाने हिमाद्रिं गता,
तापं तादृशपुत्ररत्नविरहे सोढुं न शक्ताऽन्यथा [1] ॥

स्वमेतत् [2] । अत्र 'ललनाललामनि' इति अविवक्षितवाच्यो ध्वनिः । 'जाने' 'तादृश' इति पदे गुणीभूतव्यङ्ग्ये । 'जाने' इतिपदेन उत्प्रेक्ष्यमाणानन्तधर्म[3]व्यञ्जकेनापि वाच्यमेव उत्प्रेक्षणरूपं वाक्यार्थीक्रियते । 'तादृश' इतिपदेन असामान्यगुणौघः व्यक्तोऽपि गौणः ; स्मृतिरूपस्य वाच्यस्य प्राधान्येन चारुत्वहेतुत्वात् ॥

तयोः सङ्करो यथा—

'न्यक्कारो ह्ययमेव मे यदरयः, तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसकुलं, जीवत्यहो! रावणः ।
धिक् धिक् शक्रजितं! प्रबोधितवता किं कुम्भकर्णेन वा?
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः? [4]' ॥

इति । अत्र रौद्ररसध्वनिः वाक्यार्थीभूतः । तस्य व्यङ्ग्यविशिष्टवाच्य-

---

1 ललाम–तिलकम् । स्फुरितारतिः–जातनिर्वेदा । 2 एतत् पद्यं स्वेनैव रचितमित्यर्थः । 3 'धर्मि'–ग. 4 श्रीरामे राक्षसान् नाशयितुं संप्रवृत्ते सति रावणकृतं स्वकीयं भर्त्सनमिदम्—विनाशितप्रभूतारेः मम अरयोऽपि वर्तन्ते इति यत्, तदेव मे प्रथमो न्यक्कारः । तत्रापि तपस्विजनभक्षकस्य मे तापसः नाम्नाऽप्यनिर्देश्यः एको रामः शत्रुरिति अयमप्यपरो न्यक्कारः । तथाविधोऽप्ययं यत्र क्वापि कोणे अतिष्ठन् अत्रैव लङ्कायामेवागत्य राक्षसानां कुलं कुलमेव निहन्ति इति तु अन्यः महान् न्यक्कारः । एतादृशपराभवशतेऽपि अयं रावणः जीवत्येवेत्येतत् महदाश्चर्यकरम्! तस्य इन्द्रजितोऽपि धिक्कारोऽस्तु । उत्थापितेन कुम्भकर्णेन वा न किञ्चित्प्रयोजनम् । तथा स्वर्गरूपकुग्रामविलुण्ठनमात्रेण वृथाऽभिमानपरिपूरितैः पुष्टैश्च एभिः, भुजद्वयशालिनं शत्रुमेकमपि वा जेतुमशक्तैः, मम विंशतिभुजैश्च न हि किञ्चित्फलं दृश्यते । हन्त! इत्यर्थः ॥ (हनुमन्नाटके ९-५५) ।

**अन्योन्ययोगादेवं स्यात्**
**भेदसंख्याऽतिभूयसी ॥ ४७ ॥**

एवं—अनेन प्रकारेण अवान्तरभेदगणने[1] अतिप्रभूततरा गणना । तथाहि[2]—शृङ्गारस्यैव भेदप्रभेदगणनायां आनन्त्यम्[3] । का गणना तु सर्वेषाम् ?[4] ॥

सङ्कलनेन पुनः अस्य ध्वनेः त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्[5] ॥

---

### सङ्केतः

वाचिभिः पदैः सङ्करः । विभावादिरूपतया 'मे अरयः'[6] इत्यादिकं रौद्रमेव पुष्णाति । वाच्यस्यैव क्रोधोद्दीपकत्वात् गुणीभूतव्यङ्ग्यता । ध्वनेः वाच्यालङ्कारसंसृष्टिसङ्करविषयदृष्टान्ताः सुलभत्वात् नोक्ताः । ते च सरसालङ्कारकाव्येषु स्वयमूह्याः ॥

**अन्योन्येति** । न केवलं ध्वनेः स्वप्रभेदादिभिः संङ्करसंसृष्टी, यावत् तेषामपि मिथो योगात् ते स्याताम् ॥

### मधुमती

व्यञ्जनां साधयितुमाह—**सङ्कलनेनेति** । उपलक्षणसिद्धमिति सङ्कलनेनेत्यर्थः । पुनः संक्षेपे तु—द्वावेव भेदौ द्रष्टव्यौ[7] ॥

---

1 'भेदप्रभेदगणने'—क.　2 गणनायां प्रभूततरत्वमेवोपपादयति—तथाहीत्यादिना । 3 (p. 327) । 4 ध्वनिगुणीभूतव्यङ्ग्यानाम् । 'का भेदगणना'—क. 5 व्यञ्जनायां वादिविप्रतिपत्तीनां निर्मूलनिरसनाय एतद्व्याजेन प्रकरणान्तरमारभते सङ्कलनेनेत्यादिना । संक्षेपेणेत्यर्थः । तथा च ध्वननव्यापारोपहितस्य ध्वनेः गुणीभूत व्यङ्ग्यस्य चास्य संक्षेपेण—वस्तुध्वनिः अलङ्कारध्वनिः वाच्यभिन्नरसभावादिध्वनिः इति त्रयः प्रकाराः वर्तन्ते इत्यर्थः । 'सङ्कलने पुनः'—क. 6 'रूपतायामरयः'—ग. 7 अनन्तानां ध्वननव्यापारयोगिनां—ध्वनीनां गुणीभूतव्यङ्ग्यानां च काव्यभेदानामनुगतोपाधिना सङ्कलने त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात् । अधिकतरसंक्षेपे तु अविवक्षितवाच्य—विवक्षितान्यपरवाच्यभेदेन भेदद्वयमेवेति भावः ।

तथाहि—किञ्चित् वाच्यतां सहते, किञ्चित्तु अन्यथा। तत्र वाच्यतासहं—अविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम्। विचित्रं तु अलङ्काररूपम्। यद्यपि—प्राधान्येन तदलङ्कार्यम्। तथापि ब्राह्मण-श्रमणन्यायेन तथोच्यते[1]॥

---

## सङ्केतः

किञ्चित् व्यङ्ग्यं रसादिरूपम् अयं भावः—वस्त्वलङ्काररसादितया त्रिधा व्यङ्ग्यम्। तत्र वस्त्वलङ्काररूपस्य वाच्यतायोग्यताऽस्ति। न तु यदैव व्यङ्ग्यता तदैव वाच्यता इति॥ अन्यथेति। रसादि कदाचनापि वाच्यतां न सहते इत्यर्थः। वस्तुमात्रमिति। मात्रशब्दात् एतदुच्यते—यत्—विधिनिषेधतदुभयात्मतारूपेण वस्तुनो ध्वनिः संक्षिप्तः, न तु अलङ्काराणाम्; बहुत्वात्। तथोच्यते—ध्वनिरपि अलङ्कारतया निर्दिश्यते॥

## मधुमती

किञ्चिदिति। स्वशब्देनाभिधीयमानमपि चमत्कुरुते इत्यर्थः। किञ्चित्त्विति। स्वशब्देनाभिहितः न चमत्कुरुते इत्यर्थः। यद्यपि अलङ्कार-वस्तुनोरपि अलङ्कारोपमादिपद-वस्तुपदार्थादिपदाभ्यां उपादाने न चमत्कारः इति, न तावपि वाच्यतासहौ। तथापि वाक्यार्थप्रतीतिविषयत्वमेव वाच्यता-सहत्वम्, रसादिस्तु तत्प्रतीतिविषयोऽपि न भवतीति भावः॥

---

1 ननु यत्रालङ्कार एव ध्वन्यते तत्र तस्यैव मुख्यत्वात् तेन अन्यस्य कस्याप्यन-लङ्करणात् अलङ्कारत्वव्यवहारः कथमित्याशङ्क्य निराकरोति—यद्यपीत्यादिना। (p. 306)।

**रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः[1] । स हि रसादिशब्देन शृङ्गारादिशब्देन[2] वा अभिधीयेत, न चाभिधीयते । तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्य**

---

## सङ्केतः

**रसादीति** । रसादेः वाच्यतायोग्यताऽपि नेति भावः । रसादिः केवलं व्यञ्जनव्यापारेण आस्वाद्यमानजीवतया भाति, न तु व्यापारान्तरेणेत्याह—**स हीति** । **तत्प्रयोगेऽपि** रसादिशृङ्गारादिशब्दप्रयोगेऽपि ।

## मधुमती

**अभिधीयेत** चर्व्येत । **न चाभिधीयते** न च चर्व्यते । एतदेव साधयति—**तत्प्रयोगेऽपीति** । ननु—

'शृङ्गारी गिरिजानने, सकरुणो रत्यां, प्रवीरः स्मरे,
बीभत्सोऽस्थिभिः, उत्फणी च भयकृत्, मूर्त्याऽद्भुतस्तुङ्गया ।
रौद्रो दक्षविमर्दने च, हसकृन्नग्नः, प्रशान्तश्चिरात्
इत्थं सर्वरसात्मकः पशुपतिः भूयात् सतां भूतये[3] ॥'

इत्यादौ शृङ्गारादिपदादपि रसः चर्व्यते इति वाक्यार्थप्रतीतिविषयताऽपि रसादीनां दृश्यते इति, कथं तेषां व्यञ्जनैकविषयत्वं उच्यते ? इति चेत्—न । तत्रापि सति चमत्कारे—गिरिजापदेन अनुरागाधिक्यप्रतीतिरूपप्रयोजनवत्या उपादानलक्षणया सतीत्वेन पार्वतीरूपं विभावं उपस्थापयता पूर्वजन्माक्षिप्यमाणोद्दीपनविभावानुभावव्यभिचारिभिः रसाभिव्यञ्जनात् चमत्कारोदयस्य विभाव-

---

1 रसभावादयस्तु कदापि वाच्यार्थप्रतीतिकक्ष्यां नाधिरोहन्तीत्यर्थः । तत्र हेतुमाह स हीत्यादिना । (ध्वन्यालोके पु. १५) । 2 'शरीरी शृङ्गारो रस इव दशां दोग्धि कुतुकम्' इत्यादौ । 3 भोजराजकृतशृङ्गारतिलकस्थः मङ्गलश्लोकोऽयम् ।

अप्रतिपत्तेः,[1] तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्च, इति अन्वयव्यतिरेकाभ्यां[2] विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते। तेन असौ व्यङ्ग्य एव ॥

मुख्यार्थबाधाद्यभावात् न पुनर्लक्षणीयः[3] ॥

---

### सङ्केतः

**प्रतीयते** प्रतीतिविषयो भवति ॥

**मुख्यार्थेति**। न हि विभावानुभावादौ मुख्येऽर्थे बाधा अस्ति, येन लक्षणा स्यात् इति भावः ॥

### मधुमती

नीयत्वात्। विभावाद्यभिव्यक्तस्यैव शृङ्गारादिपदैः अनुवादात्। उक्तं च ध्वनिकृता—'स्वशब्देन केवलमनूद्यते'[4] इति। शृङ्गारोद्देशरूपप्रयोजननिष्पादनाय शृङ्गारपदेन तदनूद्यते इत्यर्थः। **व्यङ्ग्य एवेति**। व्यञ्जनाविषय एव चमत्कारगोचरः इत्यर्थः ॥

**मुख्यार्थबाधा(द्य)भावात्** इत्यापाततः। परमार्थतस्तु 'प्रयोजनाभावात्' इति द्रष्टव्यम्[5] ॥

---

1 अन्यथा 'शृङ्गारहास्यकरुणे'त्यादिविभागवाक्यपठनादपि सकलरसचर्वणाप्रसङ्गात्। 'विभावादिप्रयोगे तस्य प्रतिपपत्तेश्च'—क. 2 तत्सत्त्वे तत्सत्त्वम्, तदभावे तदभावः इत्यन्वयव्यतिरेकौ। 3 नन्वेवमपि विभावादिवाचकपदैः रसप्रतीतिः शक्त्या माऽस्तु, तथा सङ्केताभावात्, किन्तु लक्षणयाऽस्तु। किमतिरिक्तव्यञ्जनाव्यापारकल्पनया? इत्यत आह—मुख्येत्यादि। 'न लक्षणीयः'—ख. 4 (ध्वन्यालोके— )। 5 स्वप्रकाशानन्दमयसंविद्विश्रान्तिरूपे रसादौ, लक्ष्ये प्रयोजनान्तरस्य मनसाप्यचिन्तनीयत्वात् इति भावः।

अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोः[1] वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवति इति प्राक् प्रतिपादितम्[2] ॥

शब्दशक्तिमूले तु[3] अभिधायाः नियन्त्रणेन,[4] अनभिधेयस्य अर्थान्तरस्य, तेन सह उपमादेः अलङ्कारान्तरस्य च, निर्विवादं व्यङ्ग्यत्वम् ॥

---

## सङ्केतः

वस्तुमात्रेति । आस्तां रसरूपं व्यङ्ग्यं दूरे तावत् इत्यर्थः । प्रागिति । 'सहिता तु प्रयोजने' इत्यत्र । एतेन लक्षणाऽपि व्यङ्ग्यं विना न स्यादित्यर्थः । ततः यदा लक्षणायां वस्तुरूपमपि व्यङ्ग्यं न लक्ष्यत्वमागतम्, तदा कथं रसादेः लक्ष्यतेति ॥

अर्थान्तरस्य अप्राकरणिकस्य तेन अर्थान्तरेण सह उपमादेः अलङ्कारस्य ॥

---

1 केवलं रसादिप्रतीत्यनुसारेणैव नास्माभिः व्यञ्जना कल्प्यते, किन्तु वस्त्वलङ्कारप्रतीत्यर्थमपि सा अवश्यं कल्पनीयैवेत्याह—अर्थेत्यादि । आद्यस्य 'त्वामस्मि' (p. 187) इत्युदाहरणम्, द्वितीयस्य 'उपकृतम्' (p. 190) इत्युदाहरणम् । 'वाच्ययोस्तु'–क. 2 स्वाश्रत्ते शब्दप्रयोगे प्रयोजनमन्तरेण अवाचकपदप्रयोगानुपपत्त्या तत्र प्रयोजनं अवश्यं वाच्यम्, तच्च प्रयोजनरूपं वस्तु व्यञ्जनां विना नैव प्रतीयते इति द्वितीयोल्लासे (p. 122) एव प्रतिपादितमित्यर्थः । 3 'भद्रात्मनः' (p. 141) इत्यादौ । 4 प्रकरणेन प्राकरणिकार्थे एव नियन्त्रितत्वात् इत्यर्थः । 'धानियन्त्रणेन'–ख.

**अर्थशक्तिमूलेऽपि विशेषे सङ्केतः कर्तुं न युज्यते इति, सामान्यरूपाणां पदार्थानां आकाङ्क्षासंनिधि-योग्यतावशात् परस्परसंसर्गः यत्र अपदार्थोऽपि विशेष-रूपो वाक्यार्थः तत्र अभिहितान्वयवादे, का वार्ता व्यङ्ग्यस्य अभिधेयतायाम् ?**[1] ॥

---

## सङ्केतः

**न युज्यते इति ।** सङ्केतो हि न नियते विशेषांशे, आनन्त्यात् व्यभिचाराच्च । **सामान्यरूपाणाम्**—सामान्यभूतस्वार्थमात्रविश्रान्तानाम्, **संसर्गः** विशेषणविशेष्यभावरूपः अन्वयः । **अपदार्थोऽपीति ।** 'अपि'शब्दः व्यवहितक्रमः । तेन यदा **वाक्यार्थोऽपि अपदार्थः**—अनभिधेयः, तदा—उक्तानां पदानां उत्तरकालं **अन्वयं** अन्योन्यानुकूल्यरूपं[2] **वदतां** मते व्यङ्ग्योऽर्थः अपदार्थ एव अनभिधेय एवेत्यर्थः । तत्र—**विशेषरूपः इति ।**

'सामान्यानि अन्यथासिद्धेः[3] विशेषं गमयन्ति हि' ।

इतिन्यायात् इत्यर्थः ॥

## मधुमती

**अर्थेति ।** विशेषे व्यक्तौ । आनन्त्यव्यभिचाराभ्यामिति तात्पर्यम् । **अपदार्थ इति ।** अन्यलभ्यत्वादिति भावः ॥

---

1 मीमांसकेषु भाट्टाः अभिहितानां पदार्थानां अन्वयं अभिदधति । ते किल—व्यक्तीनां आनन्त्यात् व्यभिचाराच्च न सङ्केतग्रहविषयता, किन्तु जात्यादीनां चतुर्णामेव सङ्केतग्रहविषयता । सामान्ये गृहीतशक्तिकानामपि पदानां समभिव्याहारे सति आकांक्षायोग्यतासत्तिवशात् अपदार्थोऽप्यपूर्व एव वाक्यार्थः=संसर्गरूपः प्रतीयते इति वदन्ति । तथाच तन्मते विशेषरूपत्वात् पदार्थातिरिक्तवाक्यार्थस्य घटानयनादि-संसर्गरूपस्यैव नाभिधेयता, का वार्ता वाक्यार्थानन्तरकक्ष्याभाविनः व्यङ्ग्यस्य अभिधेय-तायामिति । तथा चैतन्मते वाक्यार्थावगमोत्तरगम्ययोः अर्थशक्तिमूलयोः वस्तव-लङ्कारयोः वृत्त्यन्तरेणैवावगमः इति अवश्यं वक्तव्यमिति भावः ॥ 2 'अन्योन्या-सुक्तस्वरूपं'–ग. 3 'सामान्यानन्यथासिद्धेः विशेषं गमयन्ति हि'–ग. सामान्य-मनन्यथासिद्धेः विशेषं गमयति'–घ.

येऽप्याहुः—

“ शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वं अनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या तु बुध्येत् शक्तिं द्वयात्मिकाम् ।

---

## सङ्केतः

**येऽपीति** । अन्विताभिधानवादिमतमेतत् । **शब्देति** । तत्र **शब्दः** श्रोत्रेण **प्रत्यक्षः** । **वृद्ध**-घटादिरूपा**भिधेयौ** तु चक्षुषा । **प्रतिपन्नत्वमिति** । ‘अनेन अयमर्थः ज्ञातः’ इति प्रतिपत्तिः । पदार्थानयननयनादिरूपचेष्टाहेतुका**नुमानेन पश्यति** परिच्छिनत्तीत्यर्थः । **द्वयात्मिकामिति** । वृद्धज्ञानान्यथानुपपत्त्या शब्दे वाचिकां पदार्थे च वाच्यां **शक्तिमित्यर्थः** । क्वचित्तु ‘द्वयाश्रिताम्’ इति पाठः । द्वयं शब्दार्थस्वभावम् ।

## मधुमती

अन्विताभिधानवादिमतं आशङ्कते—**येऽप्याहुरिति** । **अन्विताभिधानवादिनः** इत्यनेन सम्बन्धः । **शब्दः** श्रूयमाणः, **वृद्धः** प्रयोज्यः, यद्वा—वृद्धः—प्रयोजकः, **अभिधेयः** घटादिः, तेषां **प्रत्यक्षात्** उपस्थितिः । अनुपस्थितेष्वेतेषु शक्त्यग्रहात् । **श्रोतुः** प्रयोज्यवृद्धस्य । **अनुमानेन चेष्टया** इति अभेदान्वयः । तेन प्रयोज्यस्य **चेष्टया** यत्नम्, यत्नेन च इच्छाम्, इच्छया ज्ञानं च व्युत्पित्सुः अनुमाय व्युत्पद्यते ॥ **द्वयात्मिकां** पदपदार्थोभयनिष्ठाम् । **अन्यथानुपपत्त्या**

**अर्थापत्त्याऽवबुध्यन्ते सम्बन्धं त्रिप्रमाणकम् ॥"** [1]

**इति प्रतिपादितदिशा—'देवदत्त! गामानय' इत्या-द्युत्तमवृद्धवाक्यप्रयोगात्, देशाद्देशान्तरं सास्नादिमन्त-मर्थं मध्यमवृद्धे नयति सति, 'अनेन अस्मात् एवं-विधोऽर्थः प्रतिपन्नः'** [2] **इति तच्चेष्टया** [3] **अनुमाय, तयोः अखण्डवाक्यवाक्यार्थयोः** [4] **अर्थापत्त्या वाच्य-**

---

## सङ्केतः

एवं त्रिप्रमाणं सम्बन्धं अर्थापत्त्यैव जानते। साक्षाच्छक्तिविषयतया हि व्यापारात् अर्थापत्तेः कारणता, पूर्वयोस्तु इतिकर्तव्यतारूपतेति भावः ॥

किञ्च अपरं व्याख्यानम्—ज्ञानान्यथानुपपत्त्या अर्थापत्तिप्रमाणेन द्वयाश्रितां शक्तिं पश्यति बालः। इत्थं त्रिप्रमाणं सम्बन्धं अवबुध्यन्ते—बुधाः प्रतिपादयन्ति। इति भावः। तच्चेष्टया मध्यमवृद्ध-चेष्टया। तत्र वाक्यवाक्यार्थविषये। अखण्डेति वाक्यवाक्यार्थविशेषणं

## मधुमती

**अर्थापत्त्या** इति अभेदान्वयः। अत एव **त्रिप्रमाणकं** इत्याह ॥ तदेतत् व्याचष्टे—**देवदत्तेत्यादिना**।

---

1 व्युत्पित्सुः बालः गामानयेत्याद्युत्तमवृद्धवाक्यं श्रोत्रेण शृणोति, तद्वाक्य-श्रवणानन्तरं प्रवर्तमानं प्रयोज्यवृद्धं तदानीतं गवादिपदार्थं च चक्षुषा पश्यति, ततश्च श्रोतुः प्रयोज्यवृद्धस्य चेष्टारूपेणानुमानेन लिङ्गेन तद्वाक्यजन्यगवानयनसंसर्ग-प्रतीतिमत्त्वं बुध्यति। सम्बन्धं विना तस्य वाक्यस्य तादृगर्थप्रतीतिजनकत्वानुपपत्तेः। अर्थापत्तिरूपया अन्यथानुपपत्त्या च वाच्यवाचकोभयनिष्ठां शक्तिं बुध्येत्। एवं च प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयसापेक्षं शब्दार्थयोः सम्बन्धं अयं बुध्येत—इति कारिकार्थः। 'बोधेच्छक्तिं द्वयाश्रिताम्'–क. 'अर्थापत्त्याऽवबोधेत'–क. 'अर्थापत्त्यैव बुध्यन्ते'–ख. (श्लोकवार्तिके–सं–१४०-१४१) इममेवार्थं विवृणोति देवदत्तेत्यादिना ॥ 2 'ऽर्थः ज्ञातः'–क. 3 गवानयनादिरूपया। 4 अखण्डस्य तस्य वाक्यस्य अखण्डे तस्मिन् गवानयनादिसंसर्गरूपे वाक्यार्थे इत्यर्थः।

**वाचकभावलक्षणसम्बन्धं अवधार्य बालः तत्र व्युत्पद्यते। परतः 'चैत्र! गामानय, देवदत्त! अश्वमानय, देवदत्त! गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य**

---

## सङ्केतः

लोकरूढ्या उक्तम्। यावता तु अन्वितवादिनां मते अखण्डौ वाक्यवाक्यार्थौ न स्तः। व्यवहर्तृगतयोः शब्दप्रयोगार्थप्रतिपत्त्योः अविभक्तोद्देश[1]वाक्य-वाक्यार्थनिष्ठतया पूर्वं हेतुमद्भावावगतौ सत्यां अखण्डत्वप्रतीतिः स्यादित्यर्थः। **परतः** तदनन्तरम्। **तस्य तस्येति**। तथाच वृद्धव्यवहारपूर्विकैव सर्वा व्युत्पत्तिः, वाक्येनैव च वृद्धव्यवहारः। तत्र च यस्य पदस्यावापे यस्यार्थ-भागस्यावापः, यदुद्वापे च उद्वापः, तस्मिन्नर्थे तस्यैव शक्तिः अवधार्यते इत्यर्थः। यथोक्तम्—

'व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु।
आवापोद्वापभेदेन पदानां शक्तिनिश्चयः॥'

इति। 'चैत्र! गामानय' इत्यादिवाक्येषु कदाचित् कस्यचित् शब्दस्य आवापः, कस्यचित् उद्वापः—परावृत्तिरिति यावत्। यथा—'देवदत्त! अश्वमानय' इत्यत्र चैत्रस्योद्वापः देवदत्तस्यावापः, गोरुद्वापः अश्वस्यावापः, एवं 'देवदत्त! गां नय' इत्यत्र तु आनयननयनक्रिययोः उद्वापावापौ इति॥

## मधुमती

**बालः व्युत्पद्यते** विशेषतः सङ्केतं गृह्णातीत्यर्थः॥

तदेव दर्शयति—**परतः चैत्रेत्यादिना**। **परतः** अखण्डवाक्य-तदन्वययोः कार्यकारणभावग्रहानन्तरम्। तथाच आवापोद्वापाभ्यां विशेष-

---

1 'अविभक्त्या उद्देश'–ग.

**शब्दस्य तं तमर्थं अवधारयति[1] इति—अन्वय-व्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोग-योग्यमिति[2]—वाक्यस्थितानामेव पदानां अन्वितैः पदार्थैः अन्वितानामेव[3] सङ्केतः गृह्यते इति—विशिष्टाः[4] एव पदार्थाः वाक्यार्थः, न तु पदार्थानां वैशिष्ट्यम् ॥**

---

## सङ्केतः

**अन्वयव्यतिरेकाभ्यामिति** । पदानां सङ्केतो गृह्यते इति योगः । **प्रवृत्ति-निवृत्तिकारीति** । प्रवृत्तिनिवृत्तिरूपो वृद्धव्यवहारः, प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे, अतः विशिष्टे एवार्थे पदानां सम्बन्धावगतिः । **वाक्यमेवेति** । अनन्वितार्थपदप्रयोगे काऽपि प्रवृत्तिः न सिध्यतीति । **पदानामिति** । अन्वितानामिति शेषः । **अन्वितैरिति** । पदान्तरैः पदानां अर्थान्तरैश्चार्थानां अन्वयः इति भावः । **विशिष्टा एवेति** । विशिष्टा एव अन्विताः **पदार्थाः** पदानां अभिधेयाः, न तु पदार्था एव केवलाः इति भावः । **अयमाशयः**—वाक्यार्थस्तावत् क्रियाकारकयोगात्मा । कारकक्रियाश्च सम्बन्धाभिमुख्येन मिथोविरहासहिष्णुत्वेन अन्विता एव स्वशब्दैः[5] उच्यन्ते इति ॥ **न त्विति** । सामान्यत्वेन उक्तानां पदार्थानां पश्चाद्वैशिष्ट्यं तु न स्यादित्यर्थः ॥

## मधुमती

सङ्केतग्रहः इति भावः । उपसंहरति—**इतीति** । **अन्वितानामिति** । अविनिर्भागेन प्रतीयमानानामित्यर्थः । तथाच—अविनिर्भागेन प्रतीयमानानां **वाक्यस्थपदानां अन्वितैरेव पदार्थैः सङ्केतः गृह्यते** इति पर्यवसितम् । **विशिष्टा एव** अन्वयविशिष्टा एव ॥

---

1 आवापोद्वापाभ्यां गवादिपदस्यानयनाद्यन्विते तत्तदर्थे शक्तिमवधारयतीत्यर्थः । 2 न तु पदमात्रम्, अर्थप्रतीत्यनुपयोगादिति भावः । 3 आनयनादिपदार्थान्तरान्वितैः गवादिपदार्थैः सह वाच्यवाचकभावलक्षणसम्बन्धेनान्वितानामेवेत्यर्थः । 4 इतरान्वय-विशिष्टा एवेत्यर्थः । 5 'स्वशक्तैः'—ग.

यद्यपि—वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति, पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केतगोचरः। तथापि सामान्यावच्छादितः विशेषरूप एवासौ प्रतिपद्यते,[1]

---

## सङ्केतः

यद्यपीति। सङ्केतगोचर इति योगः। अयं भावः—यदि पदार्थाः पदार्थान्तरविशेषैः अन्विता सङ्केतविषयाः स्युः, तदा 'मैत्र मैत्रीं सूत्रय' इत्यादौ वाक्ये एषां पदानां अत्रैव वाक्ये अर्थप्रतिपादकता स्यात्, न त्वन्यवाक्यस्थानाम्, विशेषान्वितानामेव सङ्केतविषयत्वात्। तथासति स एवायमिति प्रत्यभिज्ञाप्रत्ययोऽपि न स्यादिति॥ तानीति। यानि वाक्यान्तरे प्रयुक्तदृष्टानि इत्यर्थः। सामान्यावच्छादितः न्यग्भूतसामान्यः। असौ

## मधुमती

यद्यपीति। 'गामानय, गां बधान' इत्यादौ गोशब्दः तत्तद्वाक्ये प्रयुज्यमानः 'स एवे'ति प्रत्यभिज्ञाबलात् एकजातीयतया निश्चीयते, तेन आनयनान्विते बन्धनान्विते च शक्तिग्रहः प्राप्तः इति, नानार्थत्वाद्यापत्तिभिया इतरान्वितमात्रे शक्तिग्रहो वाच्यः। तथाच गोकर्मकानयनप्रतीतिः न स्यात् हेत्वभावात् इति तात्पर्यम्। तथापीति। सामान्यरूपादपि पदविशेषसमभिव्याहारात् आकाङ्क्षादिसहकारेण विशेषसिद्धिः इति भावः। अत्र

---

1 'एवेति निश्चीयते'-क.

**व्यतिषक्तानां पदार्थानां तथाभूतत्वात्,[1] इति अन्विताभिधानवादिनः ॥ एतेषामपि मते—सामान्यविशेषरूपः पदार्थः[2] सङ्केतविषयः इति, अतिविशेषभूतः वाक्यार्था-**

---

### सङ्केतः

पदार्थः। **व्यतिषक्तानां** 'वाक्यमेव प्रयोगार्हम्' इति न्यायात् पदार्थान्तरैरन्वितानाम्। **तथाभूतत्वात्** सामान्यावच्छादितविशेषरूपत्वात्। **सामान्यविशेषरूपः इति**। सामान्यप्रतीतिनान्तरीयकाः विशेषाः—

'निर्विशेषं न सामान्यं भवेत् शशविषाणवत्।'[3]

इति न्यायात्। ततश्च सामान्यावच्छादितः विशेष एव सङ्केतस्य विषयः। सामान्यं तु अनुक्तमपि ज्ञायते इत्याह—**अतिविशेषभूतः इति**। विशेषमतिक्रान्तः यः स्वभावः सः अतिविशेषः, तं भूतः—प्राप्तः अतिविशेषभूतः—सामान्योऽर्थः। केवलपदार्थरूपः इति यावत्। यद्वा—विशेषमतिक्रान्तः

### मधुमती

हेतुमाह—**व्यतिषक्तानामिति**। सम्बद्धानां अन्वितानामिति यावत्। तथाच इतरान्वितस्वार्थ एव पदशक्तिरिति न दोषः इति भावः। एतेषामपि मते व्यङ्ग्यस्य अभिधेयत्वं निरस्यति—**एतेषामिति**। **अतिविशेषभूतः** घटकर्मकानयनादिरूपः। मतद्वयमपि प्रकृताविरोधितया समञ्जसयति—

---

1 अयं भावः—यद्यपि गामानयेति वाक्ये गोपदस्य आनयनान्विते सास्नादिमत्पिण्डे शक्तिग्रहः, गां बधानेति वाक्ये तु बन्धनान्विते तादृशि शक्तिग्रहः इति गवादिपदानां नानार्थतापत्तिभिया, सामान्यतः इतरान्वितस्वार्थे शक्तिग्रहः वाच्यः इति, गामानयेति वाक्यात् गोकर्मकानयनप्रतीतिः न स्यात्, हेत्वभावात्। तथापि पूर्वं सामान्यतः इतरान्विते शक्तिग्रहेऽपि वाक्यार्थबोधदशायां आनयनादिविशेषान्वितः एव पदार्थः अवबुध्यते, अन्वितानां पदार्थानां विशेषरूपत्वादिति। 2 सामान्यरूपेतरपदार्थान्वितः विशेषभूतः स्वार्थ एवेत्यर्थः। 3 (श्लोकवार्तिके आकृतिवादे—सू. ५)।

न्तर्गतः असङ्केतितत्वात् अवाच्य एव यत्र पदार्थः प्रतिपद्यते,[1] तत्र दूरे अर्थान्तरभूतस्य 'निश्शेषच्युते'-त्यादौ विध्यादेः चर्चा ॥

अनन्वितोऽर्थः[2] अभिहितान्वये । पदार्थान्तर-मात्रेण अन्वितस्तु[3] अन्विताभिधाने । अन्वित-विशेषस्तु[4] अवाच्य एवेति उभयनयेऽपि अपदार्थ[5] एव वाक्यार्थः ॥

---

## सङ्केतः

अतिविशेषः, स चासौ भूतश्च स तथा—सामान्योऽर्थः ॥ **यत्र** वाक्ये । यदा अन्विताभिधानवादे सामान्योऽप्यर्थो न वाच्यः, का वार्ता व्यङ्ग्यस्य वाच्यतायाम्? इति भावः ॥

एवं सङ्कलय्य पक्षद्वयेऽपि सिद्धान्तमाह—**अनन्वित इत्यादि** । **अनन्वितः** अविशिष्टः सामान्यरूपः पदानां **अर्थः** । सङ्केतस्य विषयः इति शेषः । **अन्वितः इति** । वाक्यार्थस्तु अपदार्थ एवेति योगः । **अन्वित-विशेषः** सर्वाङ्गसम्पूर्णः केवलविशेषरूपः । एतच्च वाक्यार्थविशेषणम् । **उभयनयेऽपि** पक्षद्वयेऽपि **अपदार्थ एव वाक्यार्थः** ॥

## मधुमती

**अन्वितेति** । तथाच अन्वयस्य शक्यत्वे एव विवादः, न तु प्रतीय-मानार्थान्तरस्य अनभिधेयत्वेऽपीति भावः ॥

---

1 आनयनादिविशेषरूपेतरपदार्थान्वितगवादिपदार्थरूपः यो वाक्यार्थः अति-विशेषभूतः स पुनः अवाच्य एव, उत्तमवृद्धवाक्यार्थानन्तर्गतत्वेन सङ्केताविषयत्वात् इत्यर्थः । 2 पदार्थः । वाच्य इति शेषः । 3 सामान्यतः इतरान्वितस्यार्थविशेषः वाच्य इत्यर्थः । 4 गवान्वितानयनरूपः वाक्यार्थः इत्यन्वयः । 5 पदवृत्त्यविषयः ।

यदप्युच्यते—

'नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्ते।'

इति।[1] तत्र—निमित्तत्वं कारकत्वं ज्ञापकत्वं[2] वा? शब्दस्य प्रकाशकत्वात् न कारकत्वम्[3]। ज्ञापकत्वं तु अज्ञातस्य कथम्? ज्ञातत्वं च सङ्केतेनैव। स च अन्वितमात्रे[4]। एवं च निमित्तस्य नियतनिमित्तत्वं

---

## सङ्केतः

यदपीति। अन्विताभिधानवादिभिः प्राभाकरैः[5] इति शेषः। **नैमित्तिकार्थेति**। वाक्यार्थतात्पर्यं नैमित्तिकोऽर्थः। **निमित्तानि** प्रस्तावात् शब्दाः। ततश्च तात्पर्यानुसारेण यदा शब्दाः कल्प्यन्ते तदा व्यङ्ग्यं वाच्यमेवेति तेषां भावः। **अन्वितमात्रे** सामान्यावच्छादितविशेषरूपे।

## मधुमती

एकदेशिमतं आशङ्कते—**यदपीति**। तथाच सत्यां व्यङ्ग्यान्तर-प्रतीतौ अभिधादिनिमित्तं कल्प्यते इति हृदयम्। दूषयति—**तत्रेति**।

---

1 शब्दश्रवणानन्तरं यावान् अर्थः प्रतीयते तत्र सर्वत्रापि उपस्थितत्वात् शब्द एव निमित्तं कल्प्यते। उक्तन्यायात्। तथाच व्यङ्ग्योऽर्थोऽपि नैमित्तिक एव। तत्र च निमित्तान्तरानुपलब्धेः शब्द एव निमित्तमिति प्रत्यर्थं शब्द एव पुनःपुनरनुसन्धीयते इति वाच्यार्थ इव 'व्यङ्ग्यार्थेऽपि अभिधैव वृत्तिरित्याहुरित्यर्थः। 2 कारकत्वं—जनकत्वम्। ज्ञापकत्वं—प्रकाशकत्वम्। 3 घटाद्यर्थं प्रति शब्दस्याजनकत्वात्। 4 नत्वन्वितविशेषे, न वा व्यङ्ग्यभूतविधिनिषेधादौ। 5 प्राभाकरैकदेशिभिरिति यावत्।

यावत् न निश्चितम्, तावत् नैमित्तिकस्य प्रतीतिरेव कथम्?[1] इति—

'नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्ते'

इत्यविचारिताभिधानम् ॥

ये तु[2] अभिदधति—

"सोऽयं——'इषोरिव दीर्घदीर्घतरो

---

## सङ्केतः

न निश्चितमिति। निमित्तेषु सङ्केतः, न नैमित्तिके अर्थे। तत् कथं नैमित्तिकस्य साक्षात् प्रतीतिः? तदप्रतीतौ च कथं पदार्थावगतिः नियतनिमित्ता स्यादिति भावः ॥

इषोरिवेति। यथा धनुष्मता मुक्तः शरः वर्मोरसी भित्त्वा शत्रोः जीवितमादत्ते प्रवृत्तिभेदाभावेऽपि, तथा वाक्यमपि दीर्घदीर्घाभिधाव्यापारैः

## मधुमती

सति कार्ये कारणकल्पना युज्यते। प्रकृते तु हेत्वभावात् तत्प्रतीतिरेव न स्यात्, अभिधायाः नियतविषयत्वात्, अन्यस्य च तथात्वाभावात्, व्यञ्जना च त्वया नाभ्युपेयते इति भावः ॥

भट्टलोल्लटाद्यभिमतं मतमाशङ्कते—येऽपि त्विति। यथा नोदनात् आद्यं इषोः कर्म, ततो वेगः, ततः कर्म, ततो वेगः, इति लक्ष्यप्राप्तिपर्यन्तं न

---

1 सङ्केतसव्यपेक्ष एव शब्दः स्वव्यापारमारभते, न तु स्वभावत एवेति व्यवस्थितौ, यत्रैवास्य सङ्केतः तावन्मात्रस्य प्रतिपत्तिः न्याय्या, न पुनः चतुर्थकक्ष्यापातिनोऽर्थान्तरस्य व्यङ्ग्यस्येति भावः। तथाच नियतसम्बन्धाग्रहात् नैमित्तिकप्रतीतिरेव दुर्लभेति सारम् ॥　2 'येऽपि तु'—क.

**व्यापारः' इति, 'यत्परः शब्दः सः शब्दार्थः'[1] इति च, विधिरेवात्र वाच्यः" इति—तेऽपि अतात्पर्यज्ञाः**

## सङ्केतः

वाच्यव्यङ्ग्ये वक्ति[2] इति भावः। अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वं उचितम्, तत्पर्यन्तता च प्रधाने ध्वनावेव। एतेन—वाच्यव्यङ्ग्ययोः अभिधैव **व्यापारः** इत्युक्तम्। **विधिरेवेति**। विधिरेव वाच्यः, न पुनः निषेधः, अवान्तरत्वात्। विधेस्तु निर्वाहत्वात् वाच्यता इति भावः। **अत्र** 'निःशेषच्युते'[3]त्यादौ। **अतात्पर्यज्ञाः** ये 'यत्परः शब्दः स शब्दार्थः'[4]

## मधुमती

विरामः; तथा—प्रथमं पदार्थज्ञानात् पदार्थस्मृतिः, ततः तात्पर्यग्रहः, ततो वाक्यार्थधीः इति व्यङ्ग्यप्रतीतिपर्यन्तं नात्रापि विरामः इति भावः॥

**यत्तु**—"धूमेत्यादौ यथा अनुमानेन तात्पर्यनिर्वाहः, तथा व्यङ्ग्येऽपि अनुमानादेव निर्वाहे किं व्यञ्जनया?" इति मतं दूषयितुं उपन्यस्यतीति कृत्वा प्रकृतग्रन्थोत्थानं पितृचरणैरुक्तम्—तत्र 'इति मतम्' इत्यस्य इत्यपि मतमित्यर्थः। तेन च 'अपि'ना अभिधया तल्लाभोऽपि समुच्चीयते। अन्यथा "शब्दश्रुतेरनन्तरं यावान् अर्थः लभ्यते तावति शब्दस्य अभिधैव व्यापारः" इति आगामिवृत्तिदर्शनेन पूर्वापरविरोधः स्यात् इति द्रष्टव्यम्॥

**यत्परः इति**। न हि शक्यमात्रं अभिधा उपस्थापयति, अन्वया-प्रतीतिप्रसङ्गात्। एवं च यथा आकाङ्क्षादिसहकारेण अन्वयं प्रतिपादयति,

---

1 (तन्त्रवार्तिके १-१) आकृत्यधिकरणसिद्धोऽयं न्यायः। 2 स्वार्थाभिधानं अर्थान्तरप्रतीतिं च तात्पर्यतः करोतीत्यर्थः। 3 (P. 43)। 4 (तन्त्र-वार्तिके १-१)।

'रामोऽसौ भुवनेषु विक्रमगुणैः
प्राप्तः प्रसिद्धिं पराम् ॥'[1]

इत्यादौ लक्षणीयोऽप्यर्थः[2] नानार्थं भजते, विशेषव्यपदेश-
हेतुश्च भवति, तदवगमश्च शब्दार्थायत्तः प्रकरणादि-

## सङ्केतः

अत्र हि रामपदं साहसैकरसत्वाद्यनन्तलक्ष्यार्थसङ्क्रमितवाच्यं व्यञ्जकम् । विशेषेति । यथा व्यङ्ग्यवेदी विदग्ध इति व्यपदिश्यते, तथा लक्ष्यवेद्यपि

## मधुमती

'प्रत्याख्यानरुचेः[3] कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनः धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम् ॥'[4]

इत्यत्र कातरत्वम्; 'रामोऽसौ भुवनेषु' इत्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते इति रामपदस्य लक्ष्य एव अनेको भवति, अर्थान्तरसंक्रमितवाच्यादि-विशेषव्यपदेशहेतुश्च भवति । एवंविधलक्षणीयविशेषावगमश्च प्रकरणादि-

1 (P. 366)। 2 'लक्षणीयोऽर्थः'–ख. 3 'रुषः'–ख. 4 माया-सीताहननं श्रुत्वा दुःखितस्य श्रीरामस्य प्रलापोऽयम्—प्रिये! रावणकृतप्रार्थनानिराकरणशीलायाः तव विषये तेन क्रूरकर्मणा रावणेन त्वद्वधाख्यं यत् कर्म कृतं तत्, यत् इतरकुलस्त्रीभिः यथेदं श्लाघनीयं भवेत् तथा भवत्या सोढं तच्च समुचितमेव । परं तु त्वदीयसर्वविपदां केवलं द्रष्ट्रा, निरर्थकमिदं धनुः धारयता, प्राणरक्षणमात्रपरेण अनेन रामेण तव मयि यत् प्रेम तस्योचितं कर्म किमपि न कृतम् इत्यर्थः ।

सापेक्षश्चेति[1] कोऽयं नूतनः प्रतीयमानो नाम ? ।

उच्यते—लक्षणीयस्यार्थस्य[2] नानात्वेऽपि, अनेकार्थ-शब्दाभिधेयवत् नियतत्वमेव । न खलु मुख्येनार्थेन अनियतसम्बन्धः लक्षयितुं शक्यते । प्रतीयमानस्तु प्रकरणादिविशेषवशेन—नियतसम्बद्धः अनियतसम्बद्धः संबद्धसंबद्धश्च[3] द्योत्यते ॥

---

## सङ्केतः

लक्षक इति व्यपदिश्यते—इत्यपि तुल्यमिति भावः । नामेत्यसूयायाम् ।

अनेकार्थेति । हरिशब्दार्थवदित्यर्थः[4] । न खल्विति । अनेन तद्योगादिकस्य नियतत्वमुक्तम् । यथा गङ्गाशब्दः मुख्येन स्वार्थेन सम्बद्धं तटादि लक्षयति, न तथा वनादि लक्षयितुं शक्नोति । ध्वनिस्तु प्रस्तावादि-सामग्रीवशात् विचित्रो भातीति भावः ॥

## मधुमती

सापेक्षः इति लक्ष्येणैव निर्वाहे अलं व्यङ्ग्येनेति शङ्काभिप्रायः ।

सिद्धान्तयति—उच्यत इति । अनेकेति । नानार्थसैन्धवादि-पदाभिधेयस्येवेत्यर्थः ॥[5]

---

1 तादृक्षलक्ष्यावगमश्च वाच्यवत् न केवलं शब्दायत्तः, किन्तु व्यङ्ग्यत्वाभिमतवत् अर्थायत्तोऽपि, एवं शक्यार्थप्रतीत्यनन्तरमेव तदुत्पत्तेः प्रकरणवक्तृवैशिष्ट्यादि-सापेक्षश्चेत्यर्थः । 2 'लक्षणीयार्थस्य'–क. 3 'नियतसम्बन्धः अनियतसम्बन्धः सम्बद्धसम्बन्धश्चेति'–क. अस्मिन् पाठे बहुव्रीहिसमासः । 4 'विष्णुचन्द्रेन्द्र-वातार्कयमाश्वांशुशुकाग्निषु । कपिभेकाहिसिंहेषु हरिर्ना कपिले त्रिषु ॥' इति वैजयन्ती (२-५-७७) । 5 'सैन्धवोऽश्वेऽश्वभेदे ना न स्त्री तु लवणोत्तमे' इति वैजयन्ती (२-१०-७१) ।

न च[1]—

अत्ता एत्थ णिमज्जइ,
एत्थ अहं, दिअसए पलोएहि ।
मा पहिअ! रत्तिअंधअ!
सेज्जाए मह णिमज्जहिसि ॥ १३७॥

[श्वश्रूः अत्र निमज्जति,
अत्राहं, दिवसके प्रलोकय ।
मा पथिक! रात्र्यन्ध!
शय्यायां आवयोः निमङ्क्ष्यसि[2] ॥]

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः । तत् कथं अत्र लक्षणा? ।

---

## सङ्केतः

क्वचिच्च अभिधामूले ध्वनौ लक्षणां विनाऽपि व्यञ्जकत्वं दृश्यते इत्याह— न चेति । अत्तेति । ह्रस्वं दिवसं दिवसकम् । दिवसशब्दः पुंक्लीबः । ततोऽल्पं दिनमस्ति, तस्मात् प्रलोकय । यदि वा 'कालाध्वभावदेशं'[3] इति आधारे द्वितीया । तत् कथमिति । तथाच अत्र लक्षणां विनाऽपि व्यञ्जकत्वं स्यादित्यर्थः । यतोऽत्र अभिधामूलत्वमिति ॥

---

1 न चेत्यस्य मुख्यार्थबाध इत्यनेनान्वयः । तथाच अविवक्षितवाच्यध्वनौ कथंचिल्लक्ष्यत्वशङ्कावतारेऽपि विवक्षितान्यपरवाच्यध्वनौ 'अत्ता एत्थ' इत्यादौ मुख्यार्थबाधाभावात् लक्ष्यत्वशङ्कैव नास्तीति भावः । 2 (P. 164) । 3 'कालाध्वभावदेशं वा कर्म चाकर्मणाम्' । (हैम. सू. २-२-२३) ।

**'लक्षणायामपि व्यञ्जनं अवश्यं आश्रयितव्यम्'[1] इति प्रतिपादितम्[2]।**

**यथा च—समय[3]सव्यपेक्षा अभिधा, तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा। अत एव[4] 'अभिधापुच्छभूता सा' इत्याहुः॥**

---

## सङ्केतः

**अभिधापुच्छेति।** अमुख्यया वृत्त्या सङ्केतग्रहणस्यापि तत्र भावात् अभिधावयवत्वमेव लक्षणायाः। तदेव[5] अभिधाशेषभूतैव लक्षणा अभिधाव्यापारमाश्रिता, अस्याः लक्षणायाः तद्बाधेनोत्थानात्, ध्वनेस्तु अभिधाव्यापारोत्तीर्णत्वात्। एवं च भिन्नविषयत्वेन कथं व्यञ्जनलक्षणयोरैक्यम्?॥

## मधुमती

ननु अस्तु तात्पर्यानुपपत्त्यैव लक्षणा, इत्यस्वरसादाह—**लक्षणायामपीति।** अत्र लक्षणा भवन्ती न रूढिपूर्विका, प्रसिद्ध्यभावात्, इति प्रयोजनवत्येव वाच्या। प्रयोजनं च व्यञ्जनाव्यापारगम्यमित्युक्तमेवेति भावः॥

किञ्च अभिधाया इव लक्षणाया अपि सङ्केतितार्थप्रतिपादकत्वमेव। सङ्केतश्च साक्षात् परम्परया वा इति नात्र विशेषः। न ह्येवमर्थान्तरभूते व्यङ्ग्ये पदस्य साक्षात् परम्पराया वा सङ्केतोऽस्तीत्याह—**यथा चेति।** यत्र सङ्केतग्रहः तादृशार्थप्रतिपादकत्वमेवाभिधायाः **समयसव्यपेक्षत्वम्।** अन्यथा समयाभिधयोरैक्यात् अपेक्षैव न स्यात्। न च तद्भिन्न एव शब्दव्यापारः अभिधा, मानाभावात्। एवं समयविशेषेत्यस्य परम्परासमयेत्यर्थः॥

---

1 प्रकृतपद्ये तात्पर्यानुपपत्त्या लक्षणाङ्गीकारेऽपि रूढिलक्षणाभावात् फललक्षणाङ्गीकारे फलप्रतीत्यर्थं व्यञ्जना अवश्यमङ्गीकार्यैवेति भावः। 2 (P. 122)। 3 समयः सङ्केतग्रहः। 4 यतः सङ्केतसापेक्षत्वेन अभिधाप्राया अत एवेत्यर्थः। 5 तस्मादेवेत्यर्थः।

न च लक्षणात्मकमेव ध्वननम्[1]। तदनुगमेन[2] तस्य दर्शनात्। न च तत् अनुगतमेव, अभिधाऽवलम्बनेनापि तस्य भावात्। न च उभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः[3]। न च शब्दानु-

## सङ्केतः

लक्षणात्मकमेव लक्षणैकरूपमेव। **तदनुगमेनेति**। लक्षणानुगमेन ध्वननस्य दर्शनादित्यर्थः। **तत्** ध्वननं **अनुगतमेव** लक्षणानुगतमेव। **तस्य** ध्वननस्य। **भावादिति**। न हि व्यङ्ग्ये प्रतीयमाने वाच्यात् बुद्धिः दूरीभवतीति भावः। **न चोभयेति**। अभिधालक्षणारूपं उभयम्। **अवाचकेति**। अर्थानुपयोगेऽपि कोमलादिवर्णानां रसव्यञ्जकत्वदर्शनात्।

## मधुमती

लक्षणाव्यञ्जनयोर्भेदे मूलयुक्तिमाह—**न चेति**। अविवक्षितवाच्ये ध्वनाविति शेषः। **अभिधेति**। विवक्षितवाच्ये ध्वनाविति शेषः। ननु अस्तु वृत्तिनियमः इत्यत आह—**अवाचकेति**॥

**निष्कर्षस्तु**—लक्षणया व्यङ्ग्योपस्थितिः न सम्भवति, मुख्यार्थबाधाद्यभावेऽपि तदुपस्थितेः, मुख्यार्थबाधस्थलेऽपि प्रयोजनं विना लक्षणायाः असम्भवेन प्रयोजनस्य व्यञ्जनाविषयत्वावश्यंभावात्। प्रयोजनस्यापि लक्ष्यत्वे प्रयोजनान्तरकल्पनापत्तेः अनवस्थाप्रसङ्गात्। परम्परासम्बन्धिनि व्यङ्ग्ये लक्षणानुपपत्तेश्च। नाप्यभिधया व्यङ्ग्योपस्थितिः, स्वरूपकालाश्रयविषयसंख्यादिविरुद्धधर्मत्वेन वाच्यव्यङ्ग्ययोरैक्यायोगात्। 'भद्रात्मनः' इत्यादि-

---

1 अविवक्षितवाच्यध्वनावपीति शेषः। 2 'तदनुगमने'न–क. अनुगमः—ऽपजीवनम्। 3 'णापि व्यङ्ग्यस्येष्टेः'–क.

**सार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेः, इति—अभिधातात्पर्य[1]लक्षणात्मकव्यापारत्रयातिवर्ती व्यञ्जनध्वननादिपर्यायः[2] व्यापारः अनपह्नवनीय एव ॥**

---

### सङ्केतः

**अशब्दात्मकेति** । अभिधाव्यापारेणास्पृष्टेत्यर्थः । **अवलोकनादीत्यादि**शब्दात् शब्दव्यतिरिक्तः अधोवक्त्रत्वबाष्पावेशकुचकम्पादिः गृह्यते । **तस्य** ध्वननस्य । **अनपह्नवनीय एवेति** । स च नाभिधात्मा, सङ्केताभावात् । न तात्पर्यात्मा, अन्वयप्रतीतावेव शक्तिपरिक्षयात् । न लक्षणात्मा, स्खलद्गतित्वाभावात् इति भावः॥

### मधुमती

शब्दशक्तिमूलध्वनौ अभिधायाः नियमनात्, अप्राकरणिकपदार्थेन उपमादौ सङ्केताग्रहात्, रसादेश्चापूर्वत्वेन प्रागनुपस्थितेः सङ्केतग्रहाविषयत्वात्, प्रकरणादिसहायापेक्षानियमाच्च, नाभिधया अनपह्नवनीयव्यङ्ग्योपस्थितिः युक्ता। ननु-लौकिकवाक्यात् काव्ये विशेषः अवश्यं वाच्यः इति उभयमतसिद्धम् । स च विशेषः चमत्काराधीनः, चमत्कारश्च व्यञ्जनाधीनः । तत्र च प्रकरणौचित्यादिज्ञानमपेक्षितमिति स्थिते, तेषां प्रकरणादीनां अक्लृप्तवृत्त्यन्तरसहकारित्वकल्पनात् वरं क्लृप्ताभिधासहकारित्वकल्पनमिति चेत्—न । अभिधायाः अर्थोपस्थापकत्वकल्पनादशायां प्रकरणादीनां नियमेन तत्सहकारित्वं न क्लृप्तमिति, अत्रापि तत्सहकारित्वकल्पनं न युक्तम्, स्वभावभेदप्रसङ्गात् । अन्यथा मुख्यार्थबाधादीनामपि तत्सहकारित्वकल्पनेन 'सैन्धवमानये'त्यादाविव लक्ष्योपस्थितिसंभवे लक्षणाऽपि न स्यादिति ॥

---

1 शब्दस्य मुख्येऽर्थे व्यापारः अभिधा, वाक्यस्य वाक्यार्थे—संसर्गे व्यापारः तात्पर्यम्, शब्दस्यैव लक्ष्यार्थे व्यापारः लक्षणा । 2 आदिपदेन—द्योतनप्रकाशनप्रत्यायनबोधनावगमनाञ्जनादिः ।

तत्र[1]—'अत्ता एत्थ' इत्यादौ नियतसम्बद्धः।
'कस्स व ण होइ रोसो' इत्यादौ अनियतसम्बद्धः[2]।

विवरीअरए लच्छी
बह्मं दट्ठूण णाहिकमलत्थं।
हरिओ दाहिणणअणं
रसाउला झत्ति ढकेइ ॥ १३८॥

---

## सङ्केतः

तत्रेति। तेषु नियतसंबद्धादिषु मध्ये इत्यर्थः। अत्ताइत्यत्रैव शेष्वेति पुरुषाभ्यर्थनलक्षणो विधिः **नियतसम्बद्धः**—नियतेन नियतत्वेन—इयत्तया सम्बद्धः—नियन्त्रितः। कस्सइत्यादौ पुनः **अनियतसम्बद्धः**—

## मधुमती

यत्तु—व्यङ्ग्यत्वाभिमते सर्वत्र तात्पर्यं कल्प्यमेव। 'वाणीरकुडङ्गे'-त्याद्यसुन्दरस्थले व्यङ्ग्ये तात्पर्यविश्रान्त्यभावेऽपि तात्पर्यस्यावश्यमभ्युपेयत्वात्। अन्यथा 'अभिधातात्पर्यलक्षणे'त्याद्युपसंहारविरोधात्। तथाच तात्पर्यमेव व्यापारोऽस्तु कृतं व्यञ्जनया—इति, तन्मन्दम्। तथा सति वृत्त्यन्तरस्यैवोच्छेदप्रसङ्गात्। सर्वत्र तात्पर्यादेव अर्थोपस्थितिसम्भवात्। 'तात्पर्यस्य अभिधादिवृत्तिसहकारित्वेन, न तु स्वतो वृत्तिकार्यकारिता' इत्येव उपसंहार-ग्रन्थाभिप्रायात्। तस्मात् तात्पर्यमिताऽपि व्यञ्जना नैवापह्नवनीया इति॥

---

1 'अत्र'—क. नियतसम्बन्धादिषु मध्ये इत्यर्थः। 2 'सम्बन्धः'—ख.

[विपरीतरते लक्ष्मीः
ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेः दक्षिणनयनं
रसाकुला झटिति स्थगयति ॥ [1] ]

इत्यादौ सम्बद्धसम्बद्धः [2] । अत्र हि हरिपदेन दक्षिण-नयनस्य सूर्यात्मकता व्यज्यते । तन्निमीलनेन [3] सूर्यास्तमयः, तेन पद्मस्य सङ्कोचः, ततः [4] ब्रह्मणः स्थगनम्, तथा सति गोप्याङ्गस्य अदर्शनेन अनिर्यन्त्रणं निधुवनविलसितं इति [5] ॥

---

## सङ्केतः

पतिविषयं हि सतीत्वप्रकटनादि, सपत्न्यादिषु च अन्यदेवेति । **सम्बद्ध-सम्बद्ध इति** । सम्बद्धस्य व्यङ्ग्यस्य सम्बद्धः अपरो व्यङ्ग्योऽर्थः इत्यर्थः ।

## मधुमती

उपोद्घातसङ्गत्या ब्रह्मवादिनो मतमवतार्य व्यञ्जनां समर्थयति—

---

1 विपरीतरतिक्रियायां प्रसक्ता सुरतावेशेनाकुलतया निवर्तितुं चाक्षमा लक्ष्मीः विष्णोर्नाभिकमलस्थं ब्रह्माणं दृष्ट्वा लज्जाकुला सती पत्युः दक्षिणं नयनं झटिति आच्छादयति । इत्यर्थः । 2 'सम्बन्धः'–ख. 3 'तन्निमीलने'–क. 4 'तेन'–ख. 5 तथाच वाच्यसम्बन्धिप्रत्ययात् नाभिधायां, पदान्तरेण पदान्तरे अर्थप्रतीतेः न वा लक्षणायां व्यञ्जनान्तर्भावः इति भावः ।

"'अखण्डबुद्धिनिर्ग्राह्यः वाक्यार्थ एव वाच्यार्थः, वाक्यमेव च वाचकम्[1]"—इति येऽप्याहुः; तैरपि अविद्यापदपतितैः[2] पदपदार्थकल्पना कर्तव्यैव[3] इति, तत्पक्षेऽपि अवश्यं उक्तोदाहरणादौ विध्यादिः व्यङ्ग्य एव ॥

---

## सङ्केतः

वाक्यार्थ एवेति । न पदार्थ इत्यर्थः । वाक्यमेवेति । न पदमित्यर्थः । येऽपीति । अखण्डवाक्यवाक्यार्थवादिनः शब्दब्रह्मवादिनो वा भट्टाः वैयाकरणा वा । तैरपि भट्टैः वैयाकरणैरपि देशकालावच्छेदेन सर्वव्यवहर्तृनिष्ठतया कल्पितपदार्थसंश्रयेण वाच्यवाचककल्पना क्रियत एवेति, तन्मतेऽपि शब्दस्य अर्थान्तरप्रतीतौ व्यञ्जकत्वमेव, न तु वाचकत्वमिति ध्येयम् । एवं[4] पदार्थवाक्यार्थन्यायं तात्पर्यशक्तिसाधकं निराकृत्य, प्रकृते व्यञ्जनशक्तिं योजयितुमाह—तत्पक्षेऽपीति । उक्तोदाहरणादौ 'निःशेषच्युतचन्दनम्' इत्यादौ ॥

## मधुमती

अखण्डेति । बुद्धेः अखण्डत्वं नाम वाक्यार्थगोचरत्वम् । तथाच—'सत्यं ज्ञानमनन्तं ब्रह्म ।' 'एकमेवाद्वितीयं ब्रह्म ।' इत्यादिश्रुतयः वाक्यार्थविधया ब्रह्म बोधयन्ति । तेन वाक्यार्थो ब्रह्मैवार्थः । तत्प्रतिपादकत्वात् वाक्यमेव वाचकमिति का वार्ता व्यञ्जनायाः? इत्याक्षेपनिगर्वः ॥ समाधत्ते—तैरपीति । तत्त्वदशायां वाक्यमप्यलीकम् । अविद्यादशायां तु तैः भट्टमतानुसारिभिः उक्तयुक्त्या व्यञ्जनं अवश्यमङ्गीकार्यमेवेति भावः ॥

---

1 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादौ वाक्यमेव वाचकम्, अखण्डकारवृत्तिवेद्यं ब्रह्मैव वाच्यं वाक्यार्थरूपम् इत्यर्थः । 2 अविद्यावस्थायां इत्यर्थः । 3 लौकिकवाक्येष्विति शेषः । 4 'एतेन'—ग,

ननु—वाच्यादसम्बद्धं तावत् न प्रतीयते। यतःकुतश्चित् यस्यकस्यचित् अर्थस्य प्रतीतेः प्रसङ्गात्। एवं च सम्बन्धात्[1] व्यङ्ग्यव्यञ्जकभावः अप्रतिबन्धे[2] अवश्यं न भवतीति, व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपात् लिङ्गात् लिङ्गिनि ज्ञानं[3] अनुमानं यत्—तद्रूपः पर्यवस्यति। तथाहि—

## सङ्केतः

व्यञ्जकत्वं शब्दानां गमकत्वम्, तच्च लिङ्गत्वमेव। अतः व्यङ्ग्य-प्रतीतिः लिङ्गिप्रतीतिरेवेति, व्यङ्ग्यव्यञ्जकभावः लिङ्गिलिङ्गभाव एव इत्याहानुमानवादी—**वाच्यादिति**। **सम्बन्धात्** गम्यगमकभावरूपात्। **अप्रतिबन्धे** अविनाभावाभावे। एतेन अन्वयव्यतिरेकात्मकसपक्षसत्त्वविपक्षासत्त्वरूपा व्याप्तिः दर्शिता। **नियतधर्मिनिष्ठत्वेनेत्यनेन** पक्षधर्मता उक्ता। **त्रिरूपादिति**। पक्षधर्म–सपक्षसत्त्व–विपक्षव्यावृत्तयः रूपत्रयी लिङ्गस्य। **लिङ्गिनि** अनुमेये। **तद्रूप इति**। एवं निर्वाहे— पर्यवासनतः अनुमानरूप एव व्यङ्ग्य-

## मधुमती

व्यक्तिविवेककारमतं[4] आशङ्कते—**ननु वाच्यादिति**। तथाच अतिप्रसङ्गः इति भावः। **एवं चेति**। तथाच सम्बन्धमात्रेऽप्यतिप्रसङ्गः तदवस्थ एवेति अविनाभाव एव पर्यवसानं वाच्यमिति भावः। **प्रतिबन्धः** प्रति= नियतो बन्धः–नियतसम्बन्धः, व्याप्तिरिति यावत्। **अवश्यं** नियमेन। सहृदयानां तु व्यङ्ग्यप्रतीतिर्नियतैवेति भावः। **व्याप्तत्वेनेत्यनेन** सपक्षसत्त्वम्, **नियतेत्यनेन** विपक्षव्यावृत्तत्वम्, **धर्मिनिष्ठत्वेनेत्यनेन** पक्षधर्मत्वं च सूचितम्। तदेवोक्तं **त्रिरूपादिति**। तथाच अनुमानादेव तदर्थसिद्धेः न

---

1 'सम्बद्धात्'–ख. 2 प्रति–नियतः बन्धः–सम्बन्धः=व्याप्तिः। अप्रतिबन्धे—व्याप्त्याख्यसम्बन्धशून्ये। 3 साध्यविषयकं ज्ञानमित्यर्थः। 4 तन्मतं तु—अनन्यलभ्ये एवार्थे वृत्त्यन्तरकल्पनं युक्तम्, प्रकृते च अनुमानादेव व्यङ्ग्योपस्थितिसम्भवात् न तदर्थं वृत्त्यन्तरकल्पना युक्तेति।

भम धंमिअ! वीसद्धो
सो सुणओ अज्ज मारिओ देण।
गोलाणईकच्छकुडंग-
वासिणा दरि सीहेण ॥ १३९ ॥

[भ्रम धार्मिक! विश्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥][1]

अत्र—गृहे श्वनिवृत्त्या भ्रमणं विहितं, गोदावरी-तीरे च सिंहोपलब्धेः अभ्रमणं अनुमापयति।

---

### सङ्केतः

व्यञ्जकभावः, अनुमेय एव च व्यङ्ग्योऽर्थः इति सिद्ध्यतीति भावः ॥

एतदेव उदाहरणेन द्रढयति—**भमेति**। सिंहस्योत्तमत्वेन श्व-वधाभिधानं जातिविरुद्धमनुचितमिति 'दरिअरिक्खेण=दृप्तवृकेण' इति अन्ये पठन्ति। **गृहे इति**। यत्र गृहे सा दुश्शीला विद्यते तत्रेत्यर्थः। **भ्रमणमिति**। भ्रमणविधिः वाच्यः, निषेधस्तु अनुमेयः। **गोलाणई** इत्यादिना गोदावरीकच्छकुहरस्य धर्मित्वनिर्देशः। **दरिअसीहेणेति** श्वमारण-कारणाभि: द्वारेण उपात्तस्य दृप्तसिंहसद्भावस्य हेतुत्वम्। **कुडङ्गवासिणेति**

### मधुमती

वृत्त्यन्तरकल्पनावश्यकतेति भावः ॥

ध्वनिकारोक्तोदाहरणे अनुमानसामग्रीमुपपादयति—**अत्रेति**। यद्यपि गृहाधिकरणकभ्रमणं गोदावरीतीराधिकरणकभ्रमणाभावं अनुमापयितुं न

---

1 सङ्केतनिकुञ्जपरिसरे कुसुमाद्यर्थं तदा तदा परिभ्रमतः कस्यचन धार्मिकस्य तत् भ्रमणं निवारयितुं काचन स्वैरिणी एवमाह—अयि धार्मिक! यः पूर्वं त्वया कर्णा-कर्णिकया श्रुतः गोदावरीप्रान्तजलप्रायप्रदेशवर्तिनिकुञ्जवासी दृप्तः सिंहः, तेन सदा तव भीत्युत्कर्षजनकः स्वच्छन्दं ग्रामभ्रमणेऽपि प्रतिबन्धकः गेहस्थः सः शुनकः अद्य मारितः, तदिदानीं भवान् निश्शङ्कं भ्रमतु। इति ॥ (गा. स. २-७५).

यद्यत् भीरुभ्रमणं तत्तत् भयकारणनिवृत्त्युपलब्धि-पूर्वकम् । गोदावरीतीरे च सिंहोपलब्धिः[1] इति, व्यापकविरुद्धोपलब्धिः[2] ॥

---

## सङ्केतः

तद्विशेषणेन धर्मिणि सिंहस्य सद्भावः उपदर्शितः । **यद्यदिति** । अत्र भीरुभ्रमणं व्याप्यम् । भयहेतुनिवृत्तिः व्यापिका । सिंहसद्भावश्चेति व्यापक-विरुद्धोपलब्धिः । असौ च एकादशविधानुपलम्भमध्ये कश्चन अनुपलम्भभेदः[3] ॥

## मधुमती

प्रभवति, व्यधिकरणत्वात् । तथापि व्याप्तिग्रहौपयिकत्वेन इदमुक्तम् । गोदावरीतीरनिकुञ्जवासिदृप्तसिंहजनितश्वनिवृत्त्या गृहभ्रमणं हि विहितम् । तत्र च गृहे श्वनिवृत्तिवत् गोदावरीतीरनिकुञ्जे सिंहसद्भावोऽपि वाक्यादेवास्मात् प्रतीयते । एवं च—गोदावरीतीरनिकुञ्जः पक्षः । दृप्तसिंहसद्भावः हेतुः । 'भ्रमधार्मिके'त्यादिना व्यतिरेकव्याप्त्युपदर्शनेन भ्रमणाभावः साध्यः इति लभ्यते । एतदेवाह—**यद्यदिति** । अत्र—'यद्यत् भीरुभ्रमणं तत्तत् सिंहनिवृत्त्युपलब्धिपूर्वकम्' इत्यपि द्रष्टव्यम् । तेन 'शुनो बिभ्यदपि' इत्यादिग्रन्थोऽपि सङ्गच्छते ॥ **व्यापकेति** । **भीरुभ्रमणस्य व्यापकः भयकारणनिवृत्त्युपलम्भः, तद्विरुद्धोपलब्धिः** भयकारणोपलब्धिः इत्यर्थः ।

---

1 'लब्धेः'—कः 2 भीरुभ्रमणव्यापकस्य भयकारणनिवृत्त्युपलब्धिरूपस्य विरुद्धा या सिंहोपलब्धिः तया भयकारणनिवृत्त्युपलब्धौ निवृत्तायां तद्व्याप्यं भ्रमणमपि निवृत्तिमेतीति भावः । तथाच—गृहे भ्रमणानुमतिः गोदावरीतीरे भ्रमणाभावं कथमनुमापयेत् ? वैयधिकरण्यादिति शङ्का निरस्ता । 3 यथा—'नात्र तुषारस्पर्शः अग्नेः' इत्यत्र 'तुषारस्पर्शः न' इति साध्यम् । 'अग्नेः' इति हेतुः । व्यापक-विरुद्धोपलब्धिश्चात्र । तुषारस्पर्शप्रतिषेधरूपव्यापकविरुद्धस्य शीतस्पर्शस्योपलब्धेः ॥

**अत्रोच्यते—भीरुरपि–गुरोः प्रभोर्वा निदेशेन, प्रियाऽनुरागेण, अन्येन च एवंभूतेन हेतुना, सत्यपि भयकारणे भ्रमतीति, अनैकान्तिको हेतुः[1]। शुनो[2] बिभ्यदपि,[3] वीरत्वेन[4] सिंहात् न बिभेति इति**

---

## सङ्केतः

**अनैकान्तिकः** व्यभिचारी[5]। **बिभ्यदिति**। अत्र अधमत्वादिति

## मधुमती

तथाच व्यतिरेकव्याप्तिः दर्शिता। व्यतिरेकिणि तस्या एव तन्त्रत्वात्। ततश्च 'गोदावरीतीरनिकुञ्जः भीरुभ्रमणायोग्यः भीरुभ्रमणाभाववान् वा, सिंहाक्रान्तत्वात्, भयकारणोपलब्धेर्वा इत्यनुमानशरीरं द्रष्टव्यम्॥

दूषयति—**अत्रोच्यत** इति। तत्रादौ व्याप्तिविघटकं व्यभिचारमुद्भावयति—**भीरुरपीति**। **अन्येन** निध्यादिलाभनिश्चयेन। उत्कटभ्रमणहेतुबहिर्भूतत्वं वा उपाधिः। औत्कट्यनियामकाश्च गुरुप्रभुनियोगादयः। इदं च प्रथमानुमाने दूषणम्। द्वितीयानुमाने त्वाह—**शुन** इति। **अनैकान्तिको हेतुः** व्यभिचरितः। 'व्यभिचरितो व्यतिरेकी विरुद्धः'

---

1 उत्कटभ्रमणकारणराहित्यं अत्रोपाधिरिति सोपाधिकत्वं हेतोरिति भावः। 2 'श्वतो'–ख. 3 अत्र भयहेतुः—शुनां अशुद्धत्वेन शास्त्रनिषिद्धत्वम्। 4 सिंहमृगयौत्सुक्ये निश्चिते इति भावः। 5 एकस्य – साध्यस्य तदभावस्य वा यः अन्तः—सहचारः–अव्यभिचरितः सहचारः एकान्तः। तद्वान् ऐकान्तिकः, तद्भिन्नः अनैकान्तिकः।

**विरुद्धोऽपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षात् अनुमानाद्वा न निश्चितः, अपि तु वचनात्। न च वचनस्य प्रामाण्यमस्ति, अर्थेन अप्रतिबन्धात् इति असिद्धश्च। तत् कथं एवंविधात् हेतोः साध्यसिद्धिः?॥**

---

## सङ्केतः

हेतुः। **अप्रतिबन्धादिति**॥ अयं भावः—वचनार्थयोः तादात्म्य-तदुत्पत्तिलक्षणौ सम्बन्धौ न घटेते। तथाहि—तयोः तादात्म्ये, मोदकादि-वचनोच्चारे मुखादेः पूरणादिप्रसङ्गात्। तदुत्पत्तौ हि, किं वचनादर्थस्यो-त्पत्तिः? किं वा अर्थात् वचनस्य?। उभयमपि न घटते। वचनस्य ताल्वादिभ्यः उत्पत्तेः, अर्थस्य मृत्पिण्डादिस्वकारणादुत्पत्तेः। किञ्च—वचनादर्थोत्पत्तिस्वीकारे 'राज्यादि मे भूयात्' इत्युक्त्यैव तत्प्रसङ्गः। अर्थाच्च वचनोत्पत्तिस्वीकारे अर्थे पृष्टे शब्दैर्भाव्यमित्येव स्यात् इति॥ **एवंविधात्** अनैकान्तिकविरुद्धासिद्धरूपात् **हेतोः साध्यस्य** व्यङ्ग्यस्य **सिद्धिः** कथमित्यर्थः॥

## मधुमती

इति मतेन इदमुक्तमिति ध्येयम्। 'यदि च—धार्मिकत्वेन वीरपुरुष एव विवक्षितः, तत्र च गोदानिकुञ्जः वीरभ्रमणयोग्यः सिंहाक्रान्तत्वादिति प्रयुज्यते, तदा हेतोः साध्याभावव्याप्तत्वात् विरुद्धत्वम्,' इति **पितृचरणाः**॥ यदि तु—'गोदाकच्छनिकुञ्जभ्रमणं अनिष्टसाधनम्, भयकारणवद्देशाधिकरण-भ्रमणत्वात्' इति प्रयुज्यते—तदा उक्तदूषणाभावात् दूषणान्तरमाह—**गोदाव-रीति। अर्थेनाप्रतिबन्धात्।** वक्तुराप्तत्वनिश्चयावश्यंभावाभावादित्यर्थः। **असिद्धः** सन्दिग्धासिद्धः। तथाच हेत्वनिश्चयात् नानुमितिरिति भावः॥

तथा 'निःशेषच्युतचन्दनं' इत्यादौ गमकतया[1] यानि चन्दनच्यवनादीनि उपात्तानि, तानि कारणान्तरतोऽपि[2] भवन्ति। अतश्च अत्रैव स्नानकार्यत्वेन उक्तानि इति नोपभोग एव प्रतिबद्धानि[3] इति अनैकान्तिकानि ॥

[4]व्यक्तिवादिना च अधमपदसहायानां एषां व्यञ्ज-

## सङ्केतः

कारणान्तरमेव दर्शयति—अतश्च अत्रैव स्नानकार्यत्वेनेति। स्नानं कारणान्तरम्। न परं चन्दनच्यवनादिकं सम्भोगादेव सम्भवति, किन्तु स्नानरूपात् कारणान्तरादपि स्यादित्यर्थः ॥

व्यक्तिवादिना ध्वनिवादिना। एषां चन्दनच्यवनादीनाम्। अधमपदसाहित्येन अव्यभिचारीणि चन्दनच्यवनादीनि अनुमापकानि भविष्यन्ती-

## मधुमती

ध्वनिकारोक्तोदाहरणे अनुमानं निरस्य स्वोक्तोदाहरणेऽपि तन्निरस्यति—तथेति। प्रतिबद्धानि व्याप्तानि ॥

नन्वेवमनैकान्तिकादौ सति व्यक्तिवादिनामपि वा कथं अभिमतसिद्धिः? इत्यत आह—व्यक्तिवादिनेति ॥

---

1 स्वच्छन्दसम्भोगज्ञापकतया। 2 'न्तरेऽपि'—क. 3 प्रकृतवाक्यात् चन्दनच्यवनादेः संभोगव्याप्यतावच्छेदकरूपेण अनुपस्थितेः इति भावः ॥ 4 ननु नियतसम्बन्धापरिज्ञाने व्यञ्जकत्वं वा कथमुपपद्यते? अतिप्रसङ्गादित्यत आह—व्यक्तिवादिनेति। सर्वत्र वाक्यार्थानां वक्त्रादिवैशिष्ट्यज्ञानोपहितानामेव व्यञ्जकत्वमुच्यते इति भावः।

कत्वं उक्तम्। न[1] चात्र अधमत्वं प्रमाणप्रतिपन्नमिति, कथमनुमानम्? [2]एवंविधात् अर्थात् एवंविधोऽर्थः

---

## सङ्केतः

त्याह—न चात्रेति। एवंविधात् निःशेषेत्यादिप्रोक्तात्। एवंविधः

## मधुमती

अयमभिसन्धिः—यथा ह्यनुमानं व्याप्त्यादिनिश्चयमपेक्षते, न तथा व्यञ्जनाऽपि। न चातिप्रसङ्गः। वक्त्रादिवैशिष्ट्यावगमस्य नियामकत्वात्। तस्य च अनुमानवादिनाऽपि स्वीकार्यत्वात्। लिङ्गस्य च व्याप्त्यादिस्मृतिविलम्बेन विलम्बितत्वात्। नापि लिङ्गनिश्चय इव अत्रापि तदर्थनिश्चयः प्रयोजकः। मानाभावात्। ज्ञानमात्रं तु भवत्येवेति निर्विवादम्।

---

1 ननु समानन्यायेन चन्दनच्यवनादीनां अनुमापकत्वमपि स्यादित्यत आह—न चेति। अधमत्वस्य अत्र अनिश्चयात् प्रकृतवाक्यस्य कुपितकामिनीवक्तृकत्वेन अव्यभिचारित्वनिश्चयो नास्तीति भावः। 2 ननु सन्दिग्धव्याप्तिपक्षधर्मताकेन अधमपदार्थेन व्यञ्जनमपि वा कथं स्यादित्यत आह—एवंविधादिति। व्यञ्जनावादिना सम्भाव्यमानादेव तादृशादर्थात् अर्थान्तरप्रतीतेः अनुभवबलेन स्वीकारात्, अनिश्चितत्वं व्यञ्जनायां साधकमेव न बाधकमिति भावः।

उपपत्त्यनपेक्षत्वेऽपि प्रकाशते इति, व्यक्तिवादिनः पुनः तत् अदूषणम् ॥

इति श्रीकाव्यप्रकाशे
ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेद(मध्यमकाव्य)-
निर्णयो नाम पञ्चमः उल्लासः

---

## सङ्केतः

उपभोगादिरूपः । उपपत्त्यनपेक्षत्वेऽपीति । अनुमानादिरूपा ह्युपपत्तिः । प्रत्यक्षादिप्रमाणान्तरप्रतीतोऽर्थः अनुमानाङ्गम्, धूमवत् । काव्यसाहित्ये हि अर्थप्रतीतीनां लोकोत्तरचमत्काररूपप्रीति[1] विश्रान्तिरेव साध्या, न तु सत्यासत्य[2]-निरूपणा इति एतदेव उपपत्त्यनपेक्षत्वम् । अदूषणमिति । न दुष्टमित्यर्थः ॥

सङ्केतगमने दत्तां मनः सुमनसां जनः ।
ध्वनिर्यत्र गुणीभूतः श्रोत्रानन्दी निरूपितः ॥ [3]

इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते
पञ्चमः उल्लासः

## मधुमती

तदिदमुक्तम्—उपपत्त्यनपेक्षत्वेऽपीति । व्याप्तिपक्षधर्मत्वप्रतिसन्धानाविषयत्वेऽपीत्यर्थः । तत्—अनैकान्तिकत्वादि ॥

यत्तु—तदर्थसन्देहादौ व्यङ्ग्यार्थप्रतीतिरेव नेति, तत् स्वदर्शनश्रद्धया अनुभवकलहे एव पर्यवसन्नमिति भाव्यम् ॥

इति श्रीरत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां
मधुमत्यां पञ्चमः उल्लासः

---

1 'प्रति'–ग. 2 'सत्त्वासत्त्व'–ग. 3 यत्र श्रुतिहृदयसुखहेतुः मधुरोध्वनिः गुणत्वमापादितः तादृशं सङ्केतमवगाहितुं अप्सरोजनवद्भिरंसुभिः रसिकैः मनो दीयतामित्यर्थः ॥

अथ श्रीकाव्यप्रकाशमूलकारिकासु
शब्दार्थचित्रनिरूपणं नाम
षष्ठः उल्लासः

—०—

अधमकाव्यस्वरूपम्—

शब्दार्थचित्रं यत् पूर्वं
काव्यद्वयं उदाहृतम् ।
गुणप्राधान्यतः तत्र
स्थितिः शब्दार्थचित्रयोः ॥ ४८ ॥

इति श्रीकाव्यप्रकाशमूलकारिकासु
षष्ठः उल्लासः

---

1 अव्यङ्ग्यमपि यत् चारु तत् काव्यं अधमं स्मृतम् ।
शब्दार्थचित्रभेदेन तत् द्विधेति पुरोदितम् ॥ २६४ ॥

शब्दस्य तत्र प्राधान्ये शब्दचित्रमुदाहृतम् ।
अर्थस्य तत्र प्राधान्ये त्वर्थचित्रमिति स्थितिः ॥ २६५ ॥

अलङ्कारान् अर्थगतान् एके शब्दगतान् परे ।
प्राहुः नियामकाभावात् ते भवन्त्युभयाश्रिताः ॥ २६६ ॥

इति श्रीराजचूडामणिदीक्षितविरचितासु
काव्यदर्पणमूलकारिकासु
षष्ठः उल्लासः

अथ शब्दार्थचित्रनिरूपणं नाम

षष्ठः उल्लासः

—o—

शब्दार्थचित्रं यत् पूर्वं
काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतः तत्र
स्थितिः शब्दार्थचित्रयोः[1] ॥४८॥

न तु शब्दचित्रे अर्थचित्रस्य अचित्रत्वम्, अर्थचित्रे

---

**सङ्केतः**

अथ अवरकाव्यभेदौ आह—**शब्दार्थेति**। सन्निवेशविशेषेण यथाक्रमं शब्दार्थौ चित्रौ यत्र, शब्दार्थाभ्यां वा चित्रं यत्, तत् तथा। **पूर्वं उदाहृतं** प्रोक्तम्। न तु उदाहृतमित्यस्य दृष्टान्तीकृतमित्यर्थः। **गुणेति**। **गुणश्च प्रधानं** चेति विग्रहे भावप्रत्ययः। 'क्वचिदुत्तरपदस्यापि।' इति वृद्धिः। यद्वा—गुणः इति अजन्ततया[2] गुणीकरणार्थः। एवं च गुणश्च—गुणीकरणं च प्राधान्यं चेति विग्रहः। तत्र शब्दार्थचित्रकाव्ययोः॥

**अयं भावः**—यत्र शब्दचित्रं प्रधानम्, तत्रापि अर्थचित्रं गौणमस्त्येव। एवं अर्थचित्रेऽप्यूह्यम्। न पुनः एकैकचित्रं काव्यं स्यादिति॥

**मधुमती**

क्रमप्राप्तं अधमं काव्यं लक्षयति—**शब्दार्थचित्रमिति**। तथाच प्राधान्यमाश्रित्य व्यपदेशः इति तात्पर्यम्। एतदेवाह—**न त्विति**। ननु

---

1 'स्थितिः चित्रार्थशब्दयोः'–क. 2 ण्यन्तात् 'एरच्' इति भावार्थे अच् प्रत्यय इति भावः। 'अलन्ततया'–ग.

वा शब्दस्य ॥ तथा चोक्तम्—

" रूपकादिः अलङ्कारः तस्यान्यैः बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताऽऽननम्[1] ॥

रूपकादिं अलङ्कारं बाह्य[2]माचक्षतेऽपरे[3] ।

---

### सङ्केतः

**तथा चोक्तमिति** । भामहेनेति शेषः । **तस्य** काव्यस्य । **न कान्तमिति** । यथा सलावण्यमपि मुखं **निर्भूषं** सत् न भाति, तथा शब्दार्थशरीरमपि काव्यं सगुणमपि निरलङ्कारं न भातीत्यर्थः । **अपरे** तु—काव्यस्वरूपासमवेतत्वेन **रूपकाद्यर्थालङ्कारा**णां बहिरङ्गतां मन्वानाः,

### मधुमती

सिद्धे मतद्वये गुणप्रधानभावचिन्ता । तदेव नास्तीत्यत आह—**रूपकादि-रिति** । **तस्य** काव्यस्य शब्दात्मनः इति यावत् । **बहुधा** बाहुल्येन । **न कान्तं** इत्यनेन 'गुणादावेव काव्यत्वव्यवस्थितौ अलङ्कारो नावश्यकः' इति निरस्तम् । तदयमर्थः—अलङ्काराः हि काव्याश्रयाः । काव्यं च शब्दमात्रम् । शब्द एव हि पठ्यते श्रूयते गीयते वा । अर्थस्यापि शब्दोपस्थापितस्यैव चमत्कृतिहेतुत्वं वाच्यमिति शब्दस्यैव काव्यत्वाङ्गीकारस्यावश्यकत्वात् । एवं च—अलङ्कारा अपि शब्दस्यैवेति शब्दमात्रमेव चित्रम्, न त्वर्थः इति ॥ मतान्तरमाह—**रूपकादिमिति** । **बाह्यं** बाह्यमात्रम् । क्वचित् 'वाच्यम्' इति पाठः । तत्रापि वाच्याश्रितत्वात् वाच्यमित्यर्थः ॥ ननु—अनलङ्कृतात्

---

1 स्वतस्सुन्दरस्य असुन्दरस्य वा अलङ्कारेण नोपयोगः इत्याशङ्कायामाह—न कान्तेति । 2 'वाच्य'-क. 3 काव्यत्वनिर्वाहकत्वाभावात् बहिर्भूतं—बाह्यम् ।

सुपां तिङां च व्युत्पत्तिं[1] वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदात् इष्टं द्वयं तु नः ॥" [2] इति ॥

---

**सङ्केतः**

सुप्तिङ्व्युत्पत्तेः काव्यस्वरूपसमवेतत्वेन अन्तरङ्गालङ्कारतां **आहुः** इत्याह— रूपकादिमिति । गौडमतमेतत् ॥ **तदेतत्** सुप्तिङात्मकम् । **सौशब्द्यं** शब्दवैचित्र्यम् । शब्दालङ्कारसाधकमेतत् । **अर्थव्युत्पत्तिः** अर्थवैचित्री । इयं पुनः अर्थालङ्कारसाधिका । **नेदृशी** न सुप्तिङात्मिका । अथवा— अर्थव्युत्पत्तिः अर्थालङ्काररूपा रूपकाद्यलङ्कृतिः **ईदृशी** अन्तरङ्गा **न** । किं तर्हि? गौणी, इत्यपि व्याख्या । अथ च अर्थव्युत्पत्तिरपि काव्ये प्रयोज्यत्वेन मतेत्याह—**इष्टं द्वयं तु नः इति** । भामहोऽयं शब्दस्य अर्थस्य च अलङ्कारान् इष्टवान्, परं गुणप्राधान्येन ॥

**मधुमती**

शब्दात् कथं चमत्कारकार्योपस्थितिः? अत आह—**सुपामिति** । तथाच— रूपकाद्यलङ्कारः न शब्दस्य—इत्येवात्र विवक्षितम्, न तु **सौक्ष्म्यादि-**निषेधोऽपि इत्यर्थः ॥ इदमाकूतम्—अर्थ एव काव्यमित्यभिधीयते, न शब्दः । शब्दस्यार्थमुखप्रेक्षित्वप्रत्ययात् । अन्यथा समुद्रघोषादेरपि काव्यत्वा-पत्तेः । एवं च—अलङ्कारा अपि तदाश्रया एवेति तस्यैव चित्रतेति ॥ एवं मतद्वयमुक्त्वा स्वमतमाह—**शब्देति** । शब्दावच्छिन्नः अर्थः, अर्थावच्छिन्नः शब्दो वा, शब्दार्थौ वा काव्यम्, न त्वेकमात्रम्; विनिगमनाभावात् ॥

---

1 विशेषेण—शब्दशास्त्रसंस्काराभिव्यञ्जकतया उत्पत्तिः—रचना=व्युत्पत्तिः । चमत्कारानुगुण्येन निवेशनमिति केचित् । 2 तदिदमग्राह्यमित्याह—तदेतदाहुरित्यादिना । अर्थव्युत्पत्तिः—अर्थरमणीयकत्वम् । अर्थालङ्कारः यथा रूपकादिः तथा शब्दालङ्कारोऽपि अनुप्रासादिरेव, न तु सुप्तिङ्व्युत्पत्तिरित्यपि इति भावः ॥ (भामहालङ्कारे १-१३-१५).

शब्दचित्रं यथा—

प्रथमं अरुणच्छायः तावत् ततः कनकप्रभः[1]
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः[2]।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविः मृगलाञ्छनः[3]॥ १४० ॥

---

## सङ्केतः

**प्रथममिति।** अत्र क्षणदामुखे प्रदोषे प्रथमं अरुणच्छायः सन् इन्दुः **उदयति** ऊर्ध्वं गच्छति, ततः कनकप्रभः सन् इत्यादि योज्यम्। अत्र शब्दालङ्कारः छेकानुप्रासः। अरुणादेरिव छायादिः छव्यादिः यस्येति वृत्त्या अरुणच्छायः इत्यादिषु पुनः अर्थालङ्कारः उपमा॥

## मधुमती

प्राधान्येन तत्प्रतिपाद्यश्च व्यङ्ग्यः। तत्प्रतीत्यनुकूलश्च व्यापारः शब्दार्थोभयनिष्ठः इति, व्यञ्जकतायां उभयोः समप्राधान्यमिति, उभयोरप्यलङ्कारता वाच्या, अन्यथा व्यञ्जकतैव न स्यात्। तत्रापि—योऽलङ्कारः यदन्वयव्यतिरेकानुविधायी स तस्येति स्थिते, विवक्षावशादेव शब्दचित्रत्वादिव्यपदेशः इति भावः॥

**प्रथममिति।** अत्र अनुप्रासलक्षणे शब्दालङ्कारे कवेः अभिनिवेशात् **शब्दचित्रत्वम्।** उपमालङ्कारः स्थितोऽपि अकिञ्चित्करः॥

---

1 'कनकद्युतिः'–क. 2 'तलप्रभः'–क. 3 चन्द्रोदयं वर्णयति—चन्द्रोऽयं निशारम्भे प्रथमं आरक्तकान्तिः, ततः किञ्चित्काले एव सुवर्णवत् पीतवर्णः, तदनु प्रियवियोगक्लिश्यमानकामिनीकपोलवत् पाण्डरवर्णः, ततश्च सरसकमलिनीनालखण्डवत् अतिधवलकान्तिः सर्वान्धकारध्वंससमर्थश्च सन् क्रमेण विपक्षजयशीलः उदयति इत्यर्थः। अत्र मकारयोः तकाराणां ककारयोः धकारयोः क्षकारयोः छकारयोः सकारच्छकारलकाराणां चानुप्रासः॥ (मालतीमाधवे)।

अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
　　क्षोभाय पक्ष्मलदृशां अलकाः खलाश्च ?।

---

## सङ्केतः

ते दृष्टिमात्रेति। अत्र अलकाः इव खलाः इत्युपमालङ्कारः शब्दश्लेष-प्रतिभोत्पत्तिहेतुः इति **मम्मटः**। "उपमादिप्रतिभोत्पत्तिहेतुरर्थश्लेष एवायम्।

'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा॥'

इतिवत्।" इति तु उद्भटः[1]। अत्र अलकेति परिवृत्त्यसहत्वेन शब्दश्लेष-

## मधुमती

ते दृष्टीति। अत्र समुच्चयलक्षणार्थालङ्कारे कवेः अभिनिवेशात् अर्थचित्रत्वम्। श्लेषालङ्कारः स्थितोऽपि अकिञ्चित्करः॥

वस्तुतस्तु—शब्दचित्रत्वादिव्यपदेशो व्यपदेष्टुः विवक्षैव नियामिकेति बोध्यम्॥

---

1 'एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम्। स्वरितादिगुणैर्भिन्नैः बन्धः श्लिष्टमिहोच्यते। अलङ्कारान्तरगतां प्रतिभां जनयत् पदैः। द्विविधैः अर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम्'॥ इति तदीयं वाक्यम्। (का. सा. सं. ४-२३) तत्रैव पार्वतीवर्णनप्रसङ्गे एवं उदाहृतम्—न केवलं हिमाद्रेः त्वं सुता, स्वयमप्येवंविधा भवसि इति वर्णयति। पार्वतीपक्षे—किसलयवत् आरक्ताभ्यां दीप्यमानाभ्यां कराभ्यां विराजते, सुखेनाप्तुं यत् फलं न शक्यं तत्र लुब्धानां यद्यदीहितं तत्सर्वं तेभ्यः प्रददातीति। सन्ध्यापक्षे—तथाविधसूर्यमरीचिभिः शोभिता, स्वापफले—विश्रान्तौ यो न लुब्धः तद्विषये हितप्रदा चेत्येवं अत्र अर्थद्वयं बोधयति॥ अयं च पक्षः अग्रे निराकरिष्यते॥

नीचाः सदैव सविलासं अलीकलग्नाः[1]
ये कालतां कुटिलतामिव न त्यजन्ति[2] ॥ १४१ ॥

---

## सङ्केतः

साश्वकम् । कुटिलतामिवेति समुच्चितोपमया व्याख्येयम् । कालतां कुटिलतां च न त्यजन्तीति भावः । ततश्चार्थसङ्गतिः ॥

## मधुमती

यद्यपि—शब्दार्थचित्रयोः गुणप्रधानभावेन व्यपदेशो व्यवस्थिते नोदाहरणान्तरापेक्षा । तथापि तत्र अव्यङ्ग्यत्वपुरस्कारेण, अत्र तु चित्रत्वपुरस्कारेणेति उदाहरणभेदः इति ध्येयम् ॥

ननु—आद्यपद्ये उद्दीपनविभावाक्षिप्तेन, द्वितीयपद्ये आलम्बनविभावाक्षिप्तेन च व्यभिचार्यादिना शृङ्गारस्य प्रतीतेः, तदप्रतीतौ चन्द्राद्यालम्बन-

---

1 'भग्नाः'–क. 2 ये ह्रस्वतया अर्वाक् लम्बनशीलाः, सर्वदा सविलासं ललाटभागलग्नाः, नीलतां वक्रतां चात्यजन्तः दृश्यन्ते तथाविधाः ते सुन्दरीणां चूर्णकुन्तलाः, ये च तुच्छशीलाः, सर्वदा ससम्भ्रमं सौजन्यनटनेन अनृतवदनमग्नाः, मलिनहृदयतां गूढविप्रियकारितां चात्यजन्तः दृश्यन्ते प्रसिद्धाः सकलवशीकरणसमर्थाः दुर्जनाश्च दृष्टमात्रा अपि कस्य वा आन्तरधैर्यविघाताय असौस्थ्याय च हेतवः न भवन्तीत्यर्थः । अत्र अलकखलयोः नीचत्वाद्येकगुणान्वयात् क्षोभकरणरूपैकक्रियान्वयाच्च श्लेषपरिपोषितः समुच्चयालङ्कारः प्रधानम् । अनुप्रासस्तु क्वचित्क्वचित् सन्नपि अनिर्वाहात् अप्रधानमिति भावः ॥ 'कुटिलतां च न संत्यजन्ति'–क. 'कुटिलतां ननु संत्यजन्ति'–ख.

**यद्यपि—सर्वत्र काव्ये अन्ततो विभावादिरूपतया रसपर्यवसानम्[1]। तथापि स्फुटस्य रसस्य अनुपलम्भात् अव्यङ्ग्यमेतत् काव्यद्वयं उक्तम्[2]॥**

---

## सङ्केतः

अनुपलम्भादिति। ईषदुप[3]लम्भादित्यर्थः॥

## मधुमती

विषयवति भावस्य वा प्रतीतेः, अव्यङ्ग्यत्वं अनुपपन्नमित्याशङ्कते—**यद्यपीति**। **रसपर्यवसानमिति**। रस्यमानगुणयोगात् व्यङ्ग्यमात्र एव रसव्यपदेशः गौणः। मुख्यरसस्य सर्वत्र असत्वात् व्यङ्ग्यमात्रस्य च सत्त्वात्। अन्ततः वर्णनीयरतेरेव व्यङ्ग्यत्वस्य वक्तव्यत्वात्। समाधत्ते—**तथापीति**। ननु—अत्र अव्यङ्ग्यत्वस्य नामापि नास्तीति अनाशङ्कितोद्धारोऽयम्—इत्यत आह—**उक्तमिति**। तथाच नेदानीमेव अव्यङ्ग्यत्वमुक्तम्। अपि तु विशेषलक्षणावसरे 'शब्दचित्र'मित्यादिना यदव्यङ्ग्यत्वमुक्तम्,[4] तत्रेयं शङ्का, प्राप्तावसरतया अत्र निरस्तेति भावः॥

ननु—प्रतीतिहेतोः उभयत्र सत्त्वात् कथं विशेषः? उच्यते—वस्तुत्वाविशेषेऽपि यथा—कन्दरादौ प्रतिरवः, कांस्यादौ अनुरणनं च स्वभावात्,

---

1 ननु उक्ते शब्दचित्रे चन्द्रोदयस्य उद्दीपनस्य, अर्थचित्रे सुन्दरीरूपालम्बनस्य च वर्ण्यतया शृङ्गारो व्यङ्ग्यः वर्तत एवेति कथमत्र अधमकाव्यत्वम्? इत्यत आह—यद्यपीति॥ 'रसः पर्यवस्यति'—क. 2 तथाच अव्यङ्ग्यमित्यस्य स्फुटव्यङ्ग्यरहितमित्येवार्थ इति भावः। विवक्षानारूढत्वं अस्फुटत्वम्। विवक्षाविषयत्वे तु उत्तमत्वमेवेति भावः॥ अत्र च सहृदयानुभव एव प्रमाणमिति ध्येयम्। 3 'अनीषदुप'—ग 4 (P. 47)।

## मधुमती

तथा—शब्दार्थत्वाविशेषेऽपि कयोश्चिदेव शब्दार्थयोः व्यञ्जकत्वं च स्वभावादेवेति अनुभवसिद्धम् । तथाहि—

> "स्थिताः क्षणं पक्ष्मसु ताडिताधराः
> पयोधरोत्सेधनिपातचूर्णिताः ।
> वलीषु तस्याः स्खलिताः प्रपेदिरे
> चिरेण नाभिं प्रथमोदबिन्दवः ॥"[1]

इत्यादौ स्थित-ताडित-चूर्णित-स्खलित-प्रपत्त्यादिशब्दैः पक्ष्म-अधर-स्तन-त्रिवली-नाभीनां निबिडत्व-कोमलत्व-कठिनत्व-निम्नोन्नतत्व-गहनत्वानि (नतत्वानि) यथा प्रतिपाद्यन्ते, न तथा 'पक्ष्मसम्बन्धिनः अधरं प्राप्ताः स्तनसंयुक्ताः वलीसञ्चारिणः नाभिं गताः' इत्यतो वा ; 'निबिडपक्ष्मराजिः, कोमलाधरा, कठिनकुचा, निम्नोन्नतत्रिवलिः, नतनाभिः' इत्यतो वा सचेतसां चमत्कारः ॥ तत्र प्रथमे शब्दस्वभावः, द्वितीये अर्थस्वभाव एव च शरणम् । न ह्युक्ताः शब्दाः काठिन्यादिव्यञ्जकाः । न च स्वशब्देनाभिहितानि

---

1 पञ्चाग्नितप आचरन्ती पार्वती क्रमेण योगभूमिकां आरूढा मनोन्मनीमग्नधीः राजयोगसम्पत्त्या समाधिमयी यदा तदनुगुणं विशिष्टमासनबन्धमाश्रिता निषीदति, तदा प्रकृतौ तत्कालसम्पन्नेन वर्षारम्भेण निमित्तेन कतिपयैः प्राथमिकैः वर्षजलबिन्दुभिः प्रोक्षिता भवति । तमिमं अतिसुन्दरं भावनयैव सकलविधान्तर्बहिस्तापहरं संनिवेशं योगधर्मरहस्यज्ञः कविसार्वभौमः कालिदासः एवं चित्रयति—इदं प्रथमतया तदुपरि विरलविरलं निपतिताः इमे जलबिन्दवः किल पूर्वं तस्याः स्निग्धेषु सान्द्रेषु च नेत्रलोमसु क्षणं स्थिताः, ततः अतिमृदुनि अधरे ताडिता इव पतिताः, ततः कठिनयोः स्तनयोरुपरिभागे निपतनेन जर्जरिताः, तदनु निम्नोन्नतासु उदररेखासु स्खलिताश्च सन्तः मन्दं मन्दं तस्याः गम्भीरं नाभिकुहरं प्रपेदिरे इति । (कुमारसम्भवे ५-२४) ।

## मधुमती

अतिशयकाठिन्यादीनि तथा चमत्कुर्वते [1]। एवं च यत्र तादृशशब्दार्थानभिज्ञोऽभिज्ञो वा अभिज्ञाप्यं अविवक्षन् [2] अन्यथाभूतशब्दार्थैः कवयति, तत्र—शाकसूपपाकमात्राभिज्ञसाधिते अन्यमनसा अन्यमांस[3]पाकाभिज्ञसाधिते वा मांसाहार इव रसास्वादो न जायते। किन्तु—अलङ्कारमात्रादेव तत्र चमत्कारः ॥

तदिदमुक्तं ध्वनिकृता—

"रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः ॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।
तदा नास्त्येव तत् काव्यं ध्वनेर्यत्र न गोचरः" ॥ [4] इति ॥

---

1 वस्तुतस्तु एतादृशैरेव शब्दैः, तथाविधां अवाङ्मनसगोचरां अनुभवैकवेद्यां हृदयङ्गमां समाध्यवस्थां तदनुगुणमामनबन्धं चानाश्रित्य, शयानायाः अपूपादिकं भक्षयन्त्या वा कस्याश्चित् प्रसङ्गान्तरवस्थावर्णनेऽपि उक्ताः स्तनकाठिन्यादयः शृङ्गारानुगुणाः बुद्धिविकारहेतवः अर्थाः व्यज्यन्त एवेति, नैतावन्मात्रार्थध्वननाय एतादृशी अवस्था वर्णनीया। शृङ्गारैकदत्तदृष्टीनां परं एतावानेव परमो ध्वनिः। ध्वनिरहस्यवेदिनां तु योगशास्त्ररहस्यानुगुणाः समाधिभूमिकास्पर्शिनः अनन्ताः हृदयङ्गमाः ध्वनयः अत्रैव स्फुरेयुरिति ध्येयम् ॥ 2 'शब्दार्थानभिज्ञोऽभिज्ञोऽप्यविवक्षन्'—च. 3 'साधिते अन्यमत्स्यमांस'—ज. 4 यत्र तु रसादीनां निःशेषतोऽविषयत्वं स काव्यप्रकारो न सम्भवत्येव। चित्तवृत्तिविशेषा हि रसादयः। न च तदस्ति वस्तु किञ्चित्—यत् न तादृशं चित्तवृत्तिविशेषमुपजनयति। अथापि कवेः रसभावादिविवक्षाशून्यतायां रसादिशून्यता अर्थस्य कल्प्यते इति, अनेन प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते इत्युक्त्वा, इदं कारिकाद्वयं उपन्यस्तम् ॥ (ध्वन्यालोके ३-४३)।

अत्र च[1]—शब्दार्थालङ्कारभेदात् बहवो भेदाः। ते च अलङ्कारनिर्णये निर्णेष्यन्ते ॥

इति श्रीमम्मटभट्टविरचिते काव्यप्रकाशे
शब्दार्थचित्रनिरूपणं नाम
षष्ठः उल्लासः

---

## सङ्केतः

अत्र चेति। शब्दार्थचित्रकाव्ययोश्चेत्यर्थः ॥

सङ्केतरीतिरेषैव ज्ञानश्रीभुक्तयेऽद्भुता।
वर्णनाविपर्यीचक्रे यत्र वाणी गतध्वनिः ॥

इत्याचार्यमाणिक्यचन्द्रविरचिते
काव्यप्रकाशसङ्केते
षष्ठः उल्लासः

## मधुमती

अत्र च[2] विवक्षा सहृदयस्य, तस्यैव व्यपदेष्टृत्वात्। न तु कवेः। तस्यैव च कर्तृत्वात्। तथाच काव्यमात्रे एव प्रधानध्वन्यवान्तर-ध्वन्यलङ्काराणां सत्त्वात् सहृदयविवक्षावशेन क्वचित् केनचित् व्यपदेशः इत्येव युक्तम्। कविविवक्षाऽपि न स्वरूपतो व्यपदेशनियामिका, किन्तु ज्ञातैव। ज्ञानं चाशक्यम्। न चाभियोगात् तत्। एकस्यापि अनेकाभियोगसंभवात्।

---

1 'अस्य च'–क. 2 उक्तध्वनिकृत्कारिकार्थं विसृज्य स्वाभिप्रायमाह—अत्र चेत्यादिना।

## मधुमती

तथाच तर्करूपं तद्वाक्यम् । तेन यदि—ध्वन्यादौ कविविवक्षायां उत्तमादित्व-मिति वा तर्काः क्रियन्ते, तर्हि तदाऽपि सहृदयस्यैव तत्तद्व्यपदेशः इत्यनिवार्यमिति । तथाच सहृदयविवक्षायामेव तथेति पर्यवसन्नम् ॥

अत्र चेति । तथाच अवश्यालङ्कारप्रदर्शनेनैव तेऽपि दर्शिताः भवन्ति इत्यभिप्रायः ॥ न च—"सम्भविनोऽप्यन्ये प्रभेदाः कविशक्तिमात्र-प्रकाशकाः, न तु काव्यरूपतां आदधति इति ते न प्रदर्श्यन्ते ।"[1] इति चित्रालङ्कारस्थलीयवृत्तिविरोधः इति वाच्यम् । 'काव्यरूपतां' इत्यस्य उत्तमकाव्यरूपतामित्यर्थकत्वात् । अन्यथा तस्य उद्देशलक्षणपरीक्षादिप्रणयनमेव असम्बद्धं स्यात् । एवं च ध्वनिकारस्यापि तत्र तत्र चित्रकाव्यत्वाभिधानं[2] उत्तमकाव्यत्वाभावविवक्षयैव सङ्गमनीयम् । काव्यसामान्यलक्षणस्य चित्रेऽपि[3] नैयत्येन सत्त्वात् इति ध्येयम् ॥

इति श्रीरत्नपाणिसूनुरविकविविरचितायां
काव्यप्रकाशटीकायां मधुमत्यां
षष्ठोल्लासः समाप्तः

---

1 (का. प्र. ९-८६)। 2 'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते। काव्ये उभे, ततोऽन्यद्यत् तच्चित्रमभिधीयते ॥' इत्यादिभिरित्यर्थः ॥ 3 रसादि-व्यङ्ग्यार्थरहितत्वेऽपि वाच्यवाचकवैचित्र्यभास्वेन काव्यानुकारित्वात्, विस्मयकारि-वृत्तादियोगात्, कलामात्रात्, आलेख्यसादृश्याद्वा तात्त्विकरूपहीनमपि केवलं तत्तत्प्रति-कृतिरूपवत्त्वेन वा, लोके यथा ईदृशं चित्रमित्यभिधीयते तथैवाऽत्रापीति चित्रतां केचन काव्ये समगमयन् । केचित्तु सर्वसाधारण्येन प्रथमग्रहणे एव चित्ताकर्षणहेतुत्वात् चित्रपदं प्रशस्तपरतयाऽपि व्याख्यातुमर्हतीत्यप्याहुरिति शम् ॥

इति न्यायव्याकरणसाहित्यालङ्कारविदुषा क्रतुनाथवंश्येन
वेङ्कटनाथाचार्येण विरचितायां भावुकप्रियायां
उल्लासषट्कात्मकं पूर्वार्धं समाप्तम् ॥

# अनुबन्धः—१

## काव्यप्रकाशोल्लासपटकगतविषयाणां

## अकाराद्यनुक्रमणी

—o—

### अ



### आ

ऊ



क



ग



त

ध

प



भ

ल

व

श



स



———

# अनुबन्धाः—२

## प्रयुक्तानां न्यायानां नियमानां च

## अनुक्रमणिका

—o—

### अ



### आ

उ



क



ग



च



ज



त

## द



## न



## प

र



ल



व

## श



## स

---

# अनुबन्धः—२

## लोकानुभवानुलापिनां वाक्यानां दृष्टान्तानां च अनुक्रमणिका

—o—

च



ज



त



द



ध



न

म



य

र



ल

## व



## श

स



———

# अनुबन्धः—४

## उल्लासषट्कगतमूलकारिकापादानां वर्णानुक्रमसूचनी

—o—

———

# अनुबन्धः—५

## काव्यप्रकाशोल्लासषट्कोदाहृतनिदर्शनानां प्रमाणानां च सूचनी

—०—

### अ



### आ



1. 'वेबर' सम्पादितगाथासप्तशतीपुस्तकानुसारेण निर्दिष्टम् ।
2. '*' एवं चिह्नितं उदाहृतश्लोकानां उत्तरार्धमिति मन्तव्यम् ॥

इ



उ



ए



ओ



औ

## क



## ख



## ग

प



ब



भ



म

ह



———

# अनुबन्धः—६

## व्याख्योद्धृतानां प्रमाणोदाहरणानां

## अनुक्रमणी

—o—

उ



ऋ



ए



ऐ



औ



क



ग

### ह

# अनुबन्धः—७

## विशिष्टानां पदानां अनुक्रमणी *

—o—



* ग्रन्थे प्रधानतया निरूपणीयविषयनिर्देशस्वरूपाणां पदानां अकाराद्यनुक्रमणी प्रथमानुबन्धे एव निर्दिष्टा। अत्र तु तदतिरिक्तानां प्रसङ्गतोऽङ्गतया वा विवृतानां पदानां केवलं अनुक्रमणी निर्दिष्टेति ध्येयम्। प्रथमा संख्या पुटानाम्, द्वितीया तु पंक्तिसंख्येति ज्ञेयम्॥

प



ब



भ

ह

# अनुबन्धः—८

## ग्रन्थग्रन्थकारनाम्नां मतमतीयनिर्देशानां च अनुक्रमणिका

—o—

# अनुबन्धः—१

## प्रयुक्तसङ्केताक्षरविवरणम्

—o—

### अ

| | |
|---|---|
| अ. गु. | अभिनवगुप्तः (लोचनकारः) |
| अ. पु. | अग्निपुराणम् (व्यासः) |
| अ. भा. | अभिनवभारती (भरतनाट्यशास्त्रव्याख्या अभिनवगुप्तकृता) |
| अ. श. | अमरुशतकम् (अमरुककविः) |
| अ. शा. | अभिज्ञानशाकुन्तलम् (कालिदासः) |
| अ. शे. | अमरशेषः (पुरुषोत्तमः) |
| अ. स. | अलङ्कारसर्वस्वम् (रुय्यकः) |

### आ

| | |
|---|---|
| आ. श्रौ. सू. | आपस्तम्बश्रौतसूत्रम् (आपस्तम्बः) |

### उ

| | |
|---|---|
| उ. च. | उत्तररामचरितम् (भवभूतिः) |
| उ. रा. | उत्पलराजीयम् |
| उ. श्लो. | काव्यप्रकाशोदाहरणश्लोकः |

### ऋ

| | |
|---|---|
| ऋ. सं. | ऋक्संहिता |

### क

| | |
|---|---|
| क. अ. | कप्फिनाभ्युदयः (शिवस्वामी) |
| क. मं. | कर्पूरमञ्जरी (राजशेखरः) |

| | |
|---|---|
| का. क. | काव्यकल्पलता (अमरचन्द्रः) |
| का. का. | काव्यप्रकाशमूलकारिकाः (मम्मटः) |
| का. कौ. | काव्यकौतुकम् (भट्टतौतः) |
| का. द. | काव्यादर्शः (दण्डी) |
| का. प्र. | काव्यप्रकाशः (मम्मटः) |
| का. मी. | काव्यमीमांसा (राजशेखरः) |
| का. शा. | कामशास्त्रम् (वात्स्यायनः) |
| का. सं. | काण्वसंहिता |
| का. सा. सं. | काव्यसारसङ्ग्रहः |
| कु. आ. | कुवलयानन्दः (अप्पयदीक्षितः) |
| कु. सं. | कुमारसम्भवः (कालिदासः) |
| कू. पु. | कूर्मपुराणम् (व्यासः) |

ख

| | |
|---|---|
| खं. प्र. | खण्डप्रशस्तिः (हनूमान्) |

ग

| | |
|---|---|
| गा. स. | गाथासप्तशती (सातवाहनः) |
| गीता. | भगवद्गीता |
| गो. स्वा. | गोपालस्वामी (साहित्यचूडामणिः) |
| गौ. व. | गौडवहो |

च

| | |
|---|---|
| चो. पं. | चोरपञ्चाशिका (बिल्हणः) |

ज्ञ

| | |
|---|---|
| ज्ञान. क्ष. | ज्ञानश्रीमित्रनिबन्धावलौ क्षणभङ्गाध्यायः |

## त

| | |
|---|---|
| तै. उ. | तैत्तिरीयोपनिषत् |
| तै. ब्रा. | तैत्तिरीयब्राह्मणम् |
| तै. सं. | तैत्तिरीयसंहिता |
| त. वा. | तन्त्रवार्तिकम् (कुमारिलः) |

## द

| | |
|---|---|
| द. रू. | दशरूपकम् (धनञ्जयः) |

## ध

| | |
|---|---|
| धा. पा. | धातुपाठः (पाणिनिः) |
| ध्व. आ. | ध्वन्यालोकः (आनन्दवर्धनः) |
| ध्व. लो. | ध्वन्यालोकलोचनम् (अभिनवगुप्तः) |

## न

| | |
|---|---|
| ना. भ. ज. | नारायणभट्टकृतत्वेन जयन्तभट्टोल्लेखः |
| ना. लिं. | नामलिङ्गानुशासनम् (अमरसिंहः) |
| न्या. कु. चं | न्यायकुमुदचन्द्रः (प्रभाचन्द्राचार्यकृतः) |
| न्या. बिं. | न्यायबिन्दुः (धर्मकीर्तिः) |
| न्या. मं. | न्यायसिद्धान्तमञ्जरी (जानकीनाथः) |
| न्या. सू. | न्यायसूत्रम् (गौतमः) |

## प

| | |
|---|---|
| पा. शि. | पाणिनीयशिक्षा (पाणिनिः) |
| पा. सू. | पाणिनीयाष्टाध्यायीसूत्रपाठः |

| | |
|---|---|
| पा. सू. वा. | पाणिनीयसूत्रवार्तिकम् (कात्यायनः) |
| पू. मी. | पूर्वमीमांसासूत्रम् (जैमिनिः) |
| पं. प्र. | पञ्चाक्षरीप्रशस्तिः |
| पं. ली. | पञ्चबाणलीला (आनन्दवर्धनः) |

ब

| | |
|---|---|
| ब. ब्रा. | बह्वृचब्राह्मणम् |
| बा. रा. | बालरामायणनाटकम् (राजशेखरकविः) |
| बृ. दे. | बृहद्देशी |

भ

| | |
|---|---|
| भ. इ. सू. | भट्टेन्दुराजस्य सूक्तिमुक्तावली |
| भट्टना. | भट्टनायकः |
| भ. ना. | भरतनाट्यशास्त्रम् |
| भ. शृं.श. | भर्तृहरिकृतं शृङ्गारशतकम् |
| भा. | भामती (ब्रह्मसूत्रशाङ्करभाष्यव्याख्या) |
| भा. अ. | भामहालङ्कारः (भामहः) |
| भो. | भोजराजः (शृङ्गारप्रकाशः) |

म

| | |
|---|---|
| म. च. | महावीरचरितम् (भवभूतिः) |
| म. भा. | महाभारतम् (व्यासः) |
| म. भा. शां. | महाभारते शान्तिपर्व |
| म. भा. स्त्री. | महाभारते स्त्रीपर्व |

| | |
|---|---|
| मा. मा. | मालतीमाधवम् (भवभूतिः) |
| मा. सं. | माणिक्यचन्द्रकृता सङ्केतटीका |
| मे. | मेदिनीकोशः |
| मे. दू. पू. | मेघदूते पूर्वभागः (कालिदासः) |
| मे. दू. उ. | मेघदूते उत्तरभागः ( ,, ) |
| मु. | मुकुलभट्टः (अभिधावृत्तिमातृका) |

र

| | |
|---|---|
| र. म. | रवि(कवि)(भट्टाचार्य)पाणिकृता मधुमती |
| र. वं. | रघुवंशः (कालिदासः) |
| र. सु. सं. | रविगुप्तकृतः सुभाषितसङ्ग्रहः |
| रा. आ. | राघवानन्दः |
| रा. अ. | रामाभ्युदयम् |
| रु. का. अ. | रुद्रटकाव्यालङ्कारः |

ल

| | |
|---|---|
| लौ. | लौकिकव्यवहारप्रचलितानि वाक्यानि |

व

| | |
|---|---|
| वा. का. अ. | वामनकृतं काव्यालङ्कारसूत्रम् |
| वा. प. | वाक्यपदीयम् (भर्तृहरिः) |
| वि. ऊ. | विक्रमोर्वशीयम् (कालिदासः) |
| वि. पु. | विष्णुपुराणम् (व्यासः) |
| वि. बा. | विषमबाणलीला (आनन्दवर्धनः) |
| विश्व. | विश्वकोशः |

| | |
|---|---|
| वे. सं. | वेणीसंहारम् (भट्टनारायणः) |
| वै. | वैजयन्तीकोशः (यादवप्रकाशः) |
| वै. सू. | वैशेषिकसूत्रम् (कणादः) |
| व्या. म. भा. | व्याकरणमहाभाष्यम् (पतञ्जलिः) |

### श

| | |
|---|---|
| शा. प. | शार्ङ्गधरपद्धतिः |
| शा. भा. | शाबरभाष्यम् (शबरस्वामी) |
| शि. व. | शिशुपालवधम् (माघः) |
| शी. भ. | शीलाभट्टारिका |
| शृ. प्र. | शृङ्गारप्रकाशः (भोजराजः) |
| श्लो. वा. | श्लोकवार्तिकम् (कुमारिलभट्टः) |

### स

| | |
|---|---|
| स. क. | सदुक्तिकर्णामृतम् |
| स. कं | सरस्वतीकण्ठाभरणम् (भोजराजः) |
| सा. मी. | साहित्यमीमांसा (रुय्यकः) |
| सौ. नं. | सौन्दरनन्दम् (अश्वघोषः) |
| स्त. चिं. | स्तवचिन्तामणिः |

### ह

| | |
|---|---|
| ह. ना. | हनुमन्नाटकम् |
| ह. व. | हयग्रीववधः (मेण्ठकविः) |
| हृ. द. | हृदयदर्पणम् |
| हे. श. | हेमचन्द्रकृतं शब्दानुशासनम् |

———

# संशोधनपत्रिका

—o—

| पठनीयः शुद्धः पाठः | पृष्ठम् | पंक्तिः |
|---|---|---|
| अन्यपरः-अन्यनिष्ठः | 11 | 5 |
| निर्मितिः | 13 | 16 |
| चिकित्सितादि | 19 | 5 |
| लक्षणया अभिधया च | 53 | 9 |
| त्वमत्रागतोऽभूः | 64 | 3 |
| कृतेऽन्यस्मिन् | 103 | 1 |
| यतेन्दुवदनातनौ | 118 | 1 |
| रूपस्यार्थस्य | 148 | 4 |
| व्यञ्जकत्वम् , | 167 | 1 |
| सामान्य | 185 | 10 |
| चित्रचित्रिततुरगदृष्टान्तेनेत्यर्थः | 207 | 5 |
| न विदन्ति विदन्ति किन्तु | 208 | 14 |
| द्वितीयविदन्ति | 208 | 15 |
| गोचरीकृतः | 229 | 1 |
| चयः ग्लानिः | 274 | 14 |
| निद्रादि | 276 | 17 |
| निद्रापगम | 276 | 18 |
| पुनर्जन्मनि | 364 | 11 |
| भावशान्तेः तत्र समाहिता | 395 | 14 |
| ऊर्जस्व्याद्यभि | 395 | 16 |
| विसंष्ठुलाङ्गीं | 400 | 11 |
| तत्र विवक्षैव | 401 | 14 |
| करिष्यति | 407 | 5 |
| चमत्कारित्वमेव | 407 | 13 |
| प्राभाकरैः | 428 | 8 |

| पठनीयः शुद्धः पाठः | पृष्ठम् | पंक्तिः |
|---|---|---|
| प्राप्नुवन्ति | 432 | 3 |
| प्रधानक्रियाऽविधेयतो | 432 | 17 |
| अर्थस्य अचित्रत्वम् | 483 | 7 |
| शब्दार्थचित्रमिति | 483 | 18 |
| कान्तमिति | 484 | 7 |
| तथापीति | 489 | 10 |
| उल्लासषट्क | 497 | 2 |

———

